**स च पूर्वापरीभूत एकत्वादक्रमात्मकः।**
**पूर्वापराणां धर्मेण तदर्थेनानुगम्यते ॥ १८ ॥**

**सः** अनन्तरप्रतिपादिततत्त्वः[3] क्रियाख्योऽर्थः, **एकत्वात्** पूर्वापरभावरहितोऽत एव [4]पूर्वापरभागगतानुपूर्वीरहितोऽपि तद्व्यतिरिक्तदर्थपूर्वापरक्षणगतानुपूर्वीसमारोपादाश्रितक्रमरूपं[5] क्रियालक्षणं पुष्णातीत्यर्थः । **तदर्थेन** इति तादर्थ्याद् गुणक्रियागतो धर्मः प्रधानक्रियायामुपचर्यत इत्याह ॥ १८ ॥

यतः फलैक्यादभेदाध्यवसायोऽत्रेत्याह ।

**असन्निवर्तते [1]तस्माद् यत् [2]सत् तदुपलभ्यते ।**
**तयोः सदसतोश्चासावात्मैक इव गृह्यते ॥ १९ ॥**

एकफलोद्देशेन प्रवृत्तानां क्रमवतां क्षणानां पूर्वो व्यपगतोऽसन्[3] । वर्तमानश्च **उपलभ्यते** क्षणः सन्निति[4] । **तयो**र्भिन्नयोरप्यैक्यमध्यवसाया[5] पूर्वापरापि पूर्वापरीभूता क्रमवती क्रिया व्यवस्थाप्यते ॥ १९ ॥

एवं तावत्

पदार्थानामपोद्धारे जातिर्वा [1]व्यक्तिरेव वा । ( Vāk. III. जा. २.)

इति व्यक्तिवादिमतेन [2]क्रियालक्षणोऽपोद्धारपदार्थो[3] निर्णीतः । इदानीं जातिवादिमतेनाह–

**जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् ।**
**असाध्या व्यक्तिरूपेण सा साध्येवोपलभ्यते ॥ २० ॥**

सर्वत्र प्रत्ययानुवृत्तिप्रमाणसाधिता[4] जातिरिति पचतीति प्रत्ययस्य कर्तृकर्मादिभेदेऽप्यनुवृत्तेः क्रियाव्यक्तिसमवेता जातिरवश्याभ्युपगन्तव्या । [5]सैव च धातुवाच्या । स्फोटवच्चास्या असमसमयभाविभिरपि क्षणैरभिव्यक्तिः । अत एव **अनेकव्यक्तिवर्तिनीम्** इत्याह । जातित्वादेवानेकव्यक्तिवर्तित्वे लब्धे सदसद्व्यक्तिव्यङ्ग्यत्वमावेदयितुमिदमुक्तम् । भ्रमणत्वादिजातिवद्रूपव्यं[6]जनावृत्तिवलेन क्रियाजातिरभिव्यक्तिमासादयति । तथा च स्वतो नित्यत्वेऽप्यस्याः स्वाश्रयमुखेन साध्यत्वं [7]सक्रमत्त्वं च क्रियालक्षणमवतिष्ठते । अतश्च स्वाश्रयद्वारेणैवास्याः साधनाकाङ्क्षा ॥ २० ॥

---

3. A °दितः क्रि°. 4. A °परीभावगत°. 5. A °मं क्रियाक्षणं.

19. 1. A यस्मात्. 2. A यत्सत उ°. 3. A सन्. 4. A सन्निहि. 5. A om. अपूर्वापरापि.

20. 1. This is verse 2 of the जातिसमुद्देश where, however, the reading is द्रव्यमेव वा. व्यक्ति and द्रव्य are often used as synonyms. 2. A °लक्षणा. 3. °पदार्थे. 4. E °त्तिः प्रमाणसाधिका. 5. A असौ पचधातुवाच्या स्फोटवाच्या वा । असमपराविरत्वपिः क्रियाक्षणैरभिव्यनक्ति. 6. A °दव्यंजनावृत्ति च तेन. 7. IP क्रमवत्त्वं.



यथा व्यक्तिदर्शने

अनन्तरं फलं यस्याः.... ( verse 15. )

इति मतान्तरमुपदर्शितं तथात्रापि जातिदर्शने प्राह ।

**अन्ते या[1] वा क्रियाभागे जातिः सैव क्रिया स्मृता ।**
**सा व्यक्तेरनुनिष्पादे जायमानेव गम्यते ॥ २१ ॥**

यस्याः क्रियाव्यक्तेरनन्तरं फलं निर्वर्तते तत्र समवेता **या जातिः सैव क्रिया** । पूर्वास्तु तादर्थ्याद् क्रिया इति पूर्वानुसारेण गम्यमानत्वात् पुनरिह नोक्तम् । स्वाश्रयनिष्पादनद्वारेण चास्या अपि साधनयोगः [2]साध्यत्वं च ॥ २१ ॥

एवमपरा जातिर्दर्शनभेदेन क्रियेत्युक्तम् । इदानीं परा जातिः सत्ताख्या महासामान्यरूपा जातिः क्रियेत्युपपादयति ।

**स्वव्यापारविशिष्टानां सत्ता वा कर्तृकर्मणाम् ।**
**क्रिया व्यापारभेदेषु सत्ता वा समवायिनी ॥ २२ ॥**

" संबन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ " ( Vāk. III जा 33. )

इत्युक्तत्वात् क्रियाजातित्वं संबन्धिभेदोपधानेन[1] सत्तायाः समर्थयितुं कर्तृकर्मसमवेतव्यापारावच्छिन्ना सत्ता क्रियाजातिरित्याह । व्यतिरेकिणोऽपि हि भावाः सत्ताया भेदोपाधय इत्युक्तं **कर्तृकर्मणाम्** इति । तत्रैव क्रियासमवायात् । तेषु[2] च व्यापाराविष्टेषु [3]क्रियाव्यवहारात् तत्समवेतैव क्रियोचिता । व्यापारसमवेता वा सत्ता स्वाश्रयोपहितभेदा अस्तु क्रिया । किमनेन [4]व्यवधानेन कर्तृकर्मगता सत्तेति ॥ २२ ॥

अत्रैव सत्ताजातिदर्शने मतान्तरमाह ।

**[1]अन्त्ये वात्मनि या सत्ता सा क्रिया कैश्चिदिष्यते ।**
**भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः ॥ २३ ॥**

यदनन्तरं फलं तत्र व्यापारभागे या सत्ता सा क्रिया पूर्वास्तु तादर्थ्यात् । व्यापारविशिष्टा चेत् सत्ता क्रिया,[2] अलमनया, व्यापार एवास्तु क्रियेत्याशङ्क्यागमेनैतदभ्युपगमयति **भाव एव हि** इत्यादिना ।

---

21. 1. यस्याः, D यस्याः या वा. 2. D here repeats पूर्वास्तु–साधनयोगः

22. 1. AD °दावधानेन; E °दोपादानेन. 2. AD om. तेषु व्यापारा. 3. A om. विष्टेषु क्रियाव्यवहारात्. 4. AD om. व्यवधानेन.

23. 1. A अन्तरात्म°, D अन्ते वात्य°. 2. IP क्रियया.

" षड् भावविकारा भवन्तीति ह स्माह वार्ष्यायणिः " ( Ni. I, 2. 8. )
इति भाष्यकारेणैवागमोऽनुसृतः । तथा च

" तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते " ( Vāk. III, जा. ३४ )
इति सत्तैव भावशब्दवाच्या गुरवः क्रियेति मन्यन्ते । सैव हि सं[3]बन्धिभेदोपधानमात्रेण भि[4]द्यमाना शब्दार्थवैचि[5]त्र्यमुपपादयति । तथाहि संबन्धिनोऽप्यस्यास्तत्त्वतः स्वशक्तिविस्फा[6]रा एवेति सत्ताद्वैतवादाभिप्रायेणेदं निगमयति

सत्ता स्वशक्तियोगेन....

इत्यादि ।। २३ ।।

इदानीं बुद्धिः शब्दार्थ इति बौद्ध[1]पक्षे क्रियाव्यवस्थामाह ।

**बुद्धिं[2] तज्जातिमन्ये तु बुद्धिसत्तामथापरे ।**
**प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते ।। २४ ।।**

बुद्धिरिति[3] तत्प्रतिभास्याकारोऽत्र विवक्षितः । तस्यैव हि भावेष्वध्यारोपो दृश्यविकल्पयोरभेदाध्यवसायात् । मतभेदेन चात्र जातिव्यक्ती क्रिये । महासामान्यं वा सत्ता । बुद्ध्याकारसमवायिनी स[4]त्ता क्रिया भावेष्वध्यारोपिता[5] च सैवमिति तदाश्र येण[6] साधनाकाङ्क्षा साध्यत्वं च सर्वमुपपद्यते । एत[7]च्चोपचारसत्ता शब्दार्थ इति नये[8]न कथ्यते । सत्तायाः क्रियात्वे

" सैव[9] भावविकारेषु षडवस्थाः प्रप[10]द्यते " ( Vāk. III, जा. 36 )
इत्युक्तम् । तत्र भावस्य सत्ताया विकारा विशे[11]षाः षट् सर्वक्रियाणां योनयः । षट्त्वमपि नात्यन्ताय भेदा[12]वलम्बि ।। २४ ।।

यतः

**आविर्भावतिरोभावौ जन्मनाशौ तथापरैः ।**
**षट्सु भावविकारेषु कल्पितौ व्यावहारिकौ ।। २५ ।।**

सत्कार्यनये पदार्थानामाविर्भावोऽभिव्यक्तिरेवोत्पत्तिः । तिरोभावश्च ध्वंसः[1] । [2]असत्कार्यनये तु जन्मापूर्वोत्पत्तिर्विनाशश्च [3]लयः । इत्येतौ दर्शनभेदेन भिन्नौ द्वौ

3. AE संबन्धोपधाः P संबन्धभेदोप° 4. A विद्यमाना. 5. °र्थश्चेदित्यं 6. A °विसारा; I °विस्फारा.

24. 1. वोधपक्ष. 2. बुद्धितज्जा°. 3. A बुद्धिरिह. 4. AI om. सत्ता. 5. A. °पिताव्सेयमिति. 6. A तदाश्रयणे. 7. A एव तद्यपत्तार. 8. A नये. 9. A. ये एव. 10. A प्रत्यय ड° 11. A विकारा विकारविशेषाः 12. A ( यनेदवालिनयन ).

25. 1. A नाशः 2. I सत्का°. 3. प्रध्वंसः



भावविकारौ षट्सु मध्ये [4]परिकल्पितौ व्यवहारप्रसिद्ध्यारोपितौ । तथा हि—सत्तालक्षणस्य भावस्य नित्यत्वादुदय[5]प्रध्वंसायोगः । सदैक[6]स्वरूपत्वाच्चाविर्भावतिरोभावावपि न स्तः । धर्मान्तरस्य[7] तु तौ सत्तागतत्वेन व्यवहृतौ । सतो[8] विनाशविरोधोऽपि सतश्च जन्मायोगो धर्मान्तरस्यापि ।। २५ ।।

एवं जन्मनाशावेव कल्पितौ क्रियाव्यवहारं सर्वं [1]व्याप्नुत इत्याह ।

**ताभ्यां सर्वप्रवृत्तीनामभेदेनोपसंग्रहः ।**
**जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते ।। २६ ।।**

सर्वः क्रियाकलापो [2]यथायोगं जन्मनाशाभिन्नः । उपचयापचयरूपौ हि विकारावजस्रप्रवृत्तिषु भावेषु । तौ च तात्पर्यतो धर्मान्तराविर्भावतिरोभावलक्षणौ । तथा हि — जन्म केनचिद् धर्मेणाविर्भावः । [3]तत्र सव्यापारं [4]पूर्वोत्तरावस्थात्यागावाप्योरन्तराले वर्तमानं जायते इत्यभिधीयते वस्त्वात्मलाभोन्मुखम् । समासादितरूपं तु सव्यापारमित्रास्तीत्याख्यातपदेनाभिधीयत इत्यस्तित्वमात्मलाभपर्यायमाविर्भावरूपस्य जन्मन एवोत्तरोऽवस्थाविशेषः[5] । तथा च निरुक्तकारः

" जायत इति पूर्वभावस्यादिमाचष्टे " ( Ni. I. 2. )

इत्याह । [6]पूर्वभावस्य विपरिणामादेर्व्यावहारिकात् प्रथमस्यास्तित्वस्यादिर्जन्म इत्यर्थः । तथा

" अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणमाचष्टे " ( Ni. I. 2. )

इति । उत्पन्नस्य सत्त्वस्येति जन्मोत्तरकालतामेवाभिव्यनक्ति । अवधारणं निश्चयः । अस्त्यात्मानं भावयति । अस्याश्च भाव्यमानायाःसत्ता[7]याः सन्तानेन प्रवृत्तेः पूर्वोत्तरक्षण[8]निरोधोपजनाभ्यां सङ्ग्रहः । यावच्च[9] सदृशसन्तानप्रवाह[10]स्तावदलक्षितवि[11]वेको भावोऽस्तीत्यवधारणार्थमभिधी[12]यते । अस्त्यात्मानं बिभर्त्येव न ध्वंसते इत्यर्थः । विस[13]दृशसन्तानोपजनेऽ[14]र्थभेदेन विपरिणमत इति व्यपदिश्यते तत्त्वादप्रच्युतं वस्तु ।[15] यदाह निरुक्तकारः ।

" विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद् विकारमाचष्टे " ( Ni. I. 2, )

4. AI कल्पितौ; E पटितौ. 5. A दुत्पत्तिप्र°; E डभयप्र° 6. A °करूपभावाच्च; E °करूपत्वाच्च. 7. °रस्त्वन्यगतत्वेन व्यवहृतौ. 8. A असतो; E om. सतो.

26. 1. A सर्वव्यापृत; E व्याप्नुवत इ° 2. A °व्योऽयं ( चायोगं ). 3. A °भावतन्त्रं. 4. पूर्वोक्तावस्थानिशेषयोरन्तराले. 5. A अभिव्यक्त्यन्तरावस्थाविशेषः 6. A उत्पन्नस्यभावः पूर्व एवास्य. 7. A सत्तायां, 8. E °णाविरोधो°, 9. A यच्च. 10. A °वहनादलक्षि° 11. A °तभेदैको भावो, E °तविविक्तो भा°, 12. A °मभिधत्ते. 13. 9 सदशीवसन्तानो°. 14. A °ने तु भेदेन, E °ने अ भेदेन. 15. A om. वस्तु.

इति । अत्रैवोपचयविवक्षायां वर्धत[16] इति । यदाह निरुक्तकृत् ।

“ वर्धत इति स्वाङ्गाभ्युच्चयं सं[17]योगिनां पदार्थानामाचष्टे[18] ” ( Ni. I. 2. )

इति । [19]वर्धते शरीरेण, वर्धते विजयेन इति । अपचयविवक्षायां तु पूर्वमपक्षीयत इति तदनन्तरं विनश्यतीति तिरोभावाभिधानमवस्थाद्वयेन । यदाह स एव ।

“ अपक्षीयत इति स्वाङ्गापचयं संयोगिनामर्थानामाचष्टे, विनश्यतीति पूर्वभावस्यान्तमाचष्टे ” ( Ni.I.2. )

इति । पूर्वभावोऽस्तित्वमुक्तम्[20] । तदेवं द्वाभ्यां षड् व्याप्ता[21]: । तत्राव्याप्तिर्भाष्यकृतोद्भाविता ।

“ सर्वथा स्थित[22] इत्यत्र धातुसंज्ञा न प्राप्नोति । बाह्यो[23] ह्येतेभ्यस्तिष्ठतिः ”
( M Bhā, l, p. 258, l. 14–15 )

इत्याशङ्क्य तिष्ठतेरपि क्रियात्वं वक्तुमुक्तम् **जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते** इति । सदृशप्रवाहरूपतयानिर्धार्यमाणविभागं जन्मैवम( वा ? )भिधीयते स्थितिरिति । जायते इतिवत् तिष्ठतीत्यपि सिद्धम् । क्रियान्तरनिर्व( व ? )र्तकत्वेन चैवमभिधानाद् व्यापारविशेषः साध्यस्वभावो धातुनाभिधीयत एव ॥ २६ ॥

किं बहुना, जन्मनाशावपि नार्थान्तरभूतौ अपि तु सत्तैव धात्वर्थः सर्वत्रेत्याह ।

**जायमानान्न जन्मान्यद् विनाशेऽप्यपदार्थता ।**
**अतो भावविकारेषु सत्तैका व्यवतिष्ठते ॥ २७ ॥**

धर्माणां धर्मिपारन्त्र्येणावभासात् ततो व्यतिरेको न सिद्धः। अतश्च धर्म्येवानुगतो व्यावहारिकैः [1]सर्वावस्थो व्यवहर्तुं सकृदशक्य एवमभिधीयते जायते अस्ति विपरिणमते वर्धते इति। [2]सत आविर्भावविरोधाद् असतोऽपि [3]निरीहस्यात्मासादनासमर्थत्वाज्जन्मार्थोऽपि [4]वस्तुतो न कश्चित्। सतो निरन्वयध्वंसविरोधाच्च विनाशोऽपि न व्यतिरिक्तः पदार्थः कश्चित्। तस्योपजने भावस्य प्रागिवोपलम्भप्रसङ्गात् तेन तस्य विनाशे तस्यापि व्यतिरिक्तस्योदये पूर्ववत् प्रसङ्गादुत्पद्यमानस्य च[5] भावताप्रसङ्गादित्यादिदूषणमन्यैरेवाभिहितमनुसन्धेयम्[6] । एवञ्च [7]षट्स्वपि **भावविकारेषु** सत्यभूता सत्तैव

16. A वर्धन्ते. 17. A सांयोगिकानां वार्थानां. 18. वर्धते. 19. A D om वर्धते शरीरेण—पूर्वभावस्यान्तमाचष्टे इति. 20. EP उक्त; 21. A ( पक्षीप्राप्तेः ) ? D मद्याप्राप्तेः 22. A अस्ति. 23. बाह्या ह्येतैस्तिगतिः

27. 1. A सर्वावस्थायायां, E सर्वावस्था. 2. AD अत. 3. AD निरीयस्य. 4. EIP जन्मार्थोवस्तुतोऽपि. 5. A भावानाप्र°. 6. A °न्वयश्चैव ष°. 7. API. षड्भावावि°.



महासामान्यस्वभावा। तस्याश्च [8]नित्याया [9]अप्याख्यातवाच्यत्वेन [10]क्रमरूपोपग्रहवशेन [11]साध्यस्वभावतालक्षणं क्रियात्वमुक्तम्। नामपदप्रत्याय्यत्वेन तु [12]साधनत्वम् ॥ २७ ॥

असत्यपि च [1]वस्तुतो जन्मादिभेदे व्यवहारः [2]तत्तद्रूपतया प्रसिद्धः। तथा हि ।

**पूर्वभागस्तु यज्जातात् तज्जन्म व्यपदिश्यते ।**
**आश्रितक्रमरूपेण निमित्तत्वे विवक्षिते[3] ॥ २८ ॥**

परिनिष्ठितरूपो भावो जात इति व्यपदिश्यते। अस्मात्तु पूर्वोऽवस्थाविशेषो जन्म, यद्वशादसौ जात इति व्यपदेशमासादयति। तच्च जन्म निमित्तत्वेन साधनानां सव्यापारत्वे विवक्षिते पूर्वापरीभूतं जायतेशब्दगोचरः क्रिया भवति ॥ २८ ॥

यतः

**आख्यातशब्दैरर्थोऽसावेवंभूतोऽभिधीयते ।**
**नामशब्दाः प्रवर्तन्ते संहरन्त इव क्रमम् ॥ २९ ॥**

**असौ** [1]जाताद्वस्तुनः पूर्वो भागः कारणात्मनावस्थानलक्षणो वस्तुतोऽविद्यमानक्रमोऽप्याख्यातशब्दैर्जायत इत्यस्मात् **एवंभूतः** समाश्रितक्रमः प्रतीयत इति क्रियालक्षणमनुपतत्येव। तथा हि।

पूर्वस्मा[2]त् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ ( Vāk. III. जा. 39 )

इति पूर्वोत्तरा[3]वयवभेदानुपूर्वीसमाश्रयेणैव जन्यर्थो व्याख्यातः। स एव च पूर्वभागो जन्मेति नामपदेन संहृत[4]क्रमरूपतया द्रव्यायमाणः सिद्धरूपोऽभिधीयते। आख्यातवाच्येन चाभे[5]दाध्यवसायाच्च तत्र दृष्टस्य क्रमस्योपसंहरणा[6]भिमान इति **संहरन्त** इव इति इवशब्दः। तया[7] च सर्वत्र नामाख्यातयोः सिद्धसाध्यरूपार्थाभिधानमनुसरणीयम् ॥२९॥

यथा च जन्म पूर्वभागस्वभावं तथा विनाशोऽप्युत्तरभागस्वभाव इति केषांचिन्मतमित्याह ।

**फलं फलापदेशो वा वस्तु वा तद्विरोधि यत् ।**
**[1]तदन्यदेव पूर्वेषां नाश इत्यपदिश्यते ॥ ३० ॥**

8. A नित्यताया. 9. A °त्वं न क्र°. 10. °वशनसाध्य°. 11. EP °लक्षणाक्रि°. 12. A सावनम.

28. 1. EP वस्तुनो. 2. I तद्रूपतया. 3. A prints the sentence preceding this Kārikā, this Kārikā itself and the commentary on it as part of the commentary on Kārikā 27.

29. 1. IA ( नातान्व ) ? व° 2. A सर्वस्मात् प्रत्युमा धर्मादिप्राचोत्तरं. 3. A°त्त एवमवभेद°. 4. A सङ्क्रतरूपक्रमः तया. 5. A °चायोनध्यव°. 6. I °णाभिधान, E °हाराभिमा°. 7. A तदेवं, P एव.

30. 1. IP तदन्ययैव

**फलं** कार्यरूपं कारणविरुद्धं विनाशाख्यां लभते। तद्यथा संयोगः कर्मणः, ज्ञानं वा[2] ज्ञानान्तरस्य, धर्माधर्मयोः सुखदुःखसंवेदनमित्यादि वाच्यम्। **फलापदेशो** यः फलमिति भ्रान्त्या[3] परमपदिश्यते वस्तुतोऽफलमपि। तद्यथा घटस्य कपालादयो मुद्गराभिघाताज्जायमानाः, पटस्य तन्तवः [4]शीर्णस्यानन्तर्यात् फलत्वेनाभिधीयमाना विनाशव्यपदेशमासादयन्ति। **तद्** इति बुद्धिस्थविनाश्य[5]प्रत्यवमर्शः। तस्य यो विरोधी [6]भावोऽकार्यभूतोऽपि सोऽपि विनाश इति व्यवह्रियते। तद्यथा संयोगस्य विभागः, सुखस्य[7] दुःखमित्यादि। तदेवम् **अन्यदेव** वस्तु विनाशः। न त्वपदार्थोऽ[8]भावरूपस्तुच्छः। तस्यावस्तुत्वादभाव्यत्वम्, भाव्यत्वे वा तुच्छतायोग इति चिरन्तनवैशेषिकाणां मतम्। स चाख्यातेन क्रियारूपतयाभिधीयते सक्रमो विनश्यतीति, नामपदेन तु [9]संहृतक्रमो विनाश इति ॥ ३० ॥

ननु च वस्त्वन्तरं कथं वस्तुनो विनाश इत्याशङ्क्योपपादयति।

**नैवास्ति नैव नास्तीति वस्तुनो ग्रहणाद् विना।**
**कल्पते पररूपेण वस्त्वन्यदनुगम्यते ॥ ३१ ॥**

यथा कस्यचिद्रूपस्यानुभवं विनास्तीति व्यवहारो न कल्पते तथा नास्तीत्यपीति दृष्टान्तगर्भमभिधानम्। तदयमत्रार्थः। संसर्गि[1]रूपविवेकेन न कश्चिदपि वस्तुनो व्यवहार इति यथा सत्ताभिसन्धानादिना[2] अस्तीति व्यवह्रियते तथा फलाद्युपजने नास्तिताव्यवहारोऽपि युज्यते। भावप्रतियोगी ह्यभावः। स च शून्यतारूपो न युज्यते, अकिञ्चिद्रूपस्य प्रत्येतुमशक्यत्वात्। न हि प्रत्ययश्च जायते प्रत्येतव्यं च नास्तीति युज्यते। तस्माद्वस्त्वन्तरं [3]फलाद्येव [4]विनाश इति युक्तमुच्यते। पररूपेणैव हि वस्तुनो ब्रह्मकल्पस्यान्यान्यरूपतया [6]व्यवहारावतरणम् ॥ ३१ ॥

ननु च वस्तुनो ग्रहणं विनान्धतमसे स्पर्शनेन्द्रियेण शून्यतारूपानुभ[1]वादभावोऽवसीयत इत्याशङ्क्याह।

**भावाभावौ घटादीनामस्पृशन्नपि पाणिना।**
**कश्चिद्वेदाप्रकाशेऽपि प्रकाशे[2] तत एव वा ॥ ३२ ॥**

---

2. A ज्ञानानान्तरस्य. 3. A°भाव्यापरं. 4. A °वोऽस्यानन्त°. 5. A °विनाशरूपप्र°. 6. A विरोधोऽभावो. 7. A सुखदुःख°. 8. AIP भावरूप. 9. A सद्भूतक्र°.

31. 1. A °रूपावि. 2. A °न्धानान्नास्तीति°. 3. A फलादिनं. 4. IP विशेषनाश. 5. A °स्यान्यरूपतया. 6. A °णात्.

32. 1. AD °भवोऽवस्ती. 2. A प्रकाशेन स एव.



पाणिना संस्पर्शमन्तरेणाप्रकाशे तत एव वस्तुनो ग्रहणात् प्रकाश [3]इव वस्तूनां भमावाावाववैत्येव कश्चित् प्रतिपत्ता। तथा हि सत्यप्यालोके तदभावे वा प्रमाणान्तरात् पुरोऽवस्थितं वस्तु [4]सम्भावयन् भावमवैति, तद्विरोधिनं चार्थं निश्चित्याभावमिति, वस्तुग्रहणायत्तावेव भावाभावव्यवहारौ। सर्वस्यामपि दशायां समन्धकारेऽपि [5]पूर्वप्रवृत्तवस्तुग्रह[5]णानुस्मरणनिमित्तत्वात् पाणिसञ्चारेणापि चाभावावसायो वस्तुग्रहणादेव हस्तस्या[6]स्पृष्टस्यानुभवात्। हस्तगतं हि स्प्रष्टव्यरूपमर्थान्तरविविक्तमनुभूय स्पर्शनेन्द्रियेणार्थान्तरस्याभावो निश्चीयते। तदेवं स्थितमेतद् वस्त्वन्तरं फलाद्यभाव इति ॥ ३२ ॥

इदानीं [1]दर्शनान्तराश्रयेण जन्मनाशौ विभजति।

**व्यापि सौक्ष्म्यं क्वचिद् याति क्वचित् संहन्यते पुनः।**
**अकुर्वाणोऽथवा किञ्चित् स्वशक्त्यैवं प्रकाशते ॥ ३३ ॥**

व्यापकं प्रधानतत्त्वं **क्वचि**द्देशे काले वा **सौक्ष्म्यं** तनुतामापद्यत इति सावस्था तिरोभावात्मिका नाशो नश्य[2]तीति च नामाख्याताभ्यां सिद्धसाध्यरूपतयाभिधीयते। तदुक्तम्।

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥ (Vāk. III जा. 38.)

इति। **क्वचित्** पुनस्तदेव **व्यापि** वस्तु स्वनिमित्तवशात् **संहन्यते** संघातरूपतां [3]भजते इति सावस्थाविर्भावात्मिका जन्म जायते इति च पूर्व[4]वद् व्यवह्रियते। एतच्च प्रधानस्यावस्थाद्वयमन[5]वरतप्रवृत्तिशीलरजोगुणवशाद् भवतीति क्रियारूपमनुपततीति। तदेवं निरुक्तकारमताश्रयेण भावविकाराः क्रियासामान्य[6]भूताः व्याख्याताः ॥ ३३ ॥

यद्वा निष्क्रिय एवैको व्यापकः परब्रह्माभिधानो [1]भावोऽचिन्त्यशक्तियुक्तो जन्मनाशव्यवहारमविद्यादशायां[2] वर्तयति। न तु भावतो जन्मनाशौ [3]कौचित्। तथा हि।

**सर्वरूपस्य तत्त्वस्य यत् क्रमेणेव दर्शनम्।**
**भागैरिव प्रक्लृप्तिश्च तां क्रियामपरे विदुः ॥ ३४ ॥**

सर्वपरिकल्पातीतमपि ब्रह्म समाविष्टसर्वशक्तित्वात् सर्वरू[4]पेणावभासमानं काला-

---

3. A एवं. °वौ वेत्त्येव. 4. A वयते 5. E °ग्रहणाग्रहणानुस्मरण° 6. A भावमा न (सांचोक्मांया) ? वस्तु° 7. AD °स्तव्याचष्टवानु°. 8. EIP °न्तरविवि°. 9. A स्पर्शनदर्शनेन्द्रि° 10. P °मेव व°

33. 1. E° न्तराभिप्रायेण. 2. A नास्तीति, D नस्यास्ती° 3. A आप्नोति. 4. A पुनर्व्यव° 5. A °मेकतरप्रवृतिशीलरक्षागुण°. 6. IP °न्यरूपा.

34. A. अभिभावो. 2. A विवर्तति. 3. E केनचित्. 4. IP सार्वरूप्येण.

न्यस्वातन्त्र्यशक्तिप्रवर्ति[5]तक्रमावभासं पूर्वापरीभूतावयवसमाहारात्मिकां क्रियाप्रतीति-मुपजनयति साध्यस्वभावभा[6]वविषयाम्। सिद्धस्वभावभावविषये[7]तु दिक्शक्तिप्रकल्पि-तभागभेदप्रकल्पनान्मूर्तिविभागमारचयति । तथा चा[8]प्रविभागमपि देशकालाभ्यां प्रवि-भक्तमिव चकास्तीति। [9]तत्प्रविभागानुसारिणौ जन्मनाशौ समस्तक्रियाभेदानुसारिणौ व्यावहारिकौ प्रसिद्धौ। तदेवमियं [10]विवर्तदर्शनेन क्रियाख्याता। पूर्वं तु परिणामदर्श-नेनोक्ता। अत एवात्र **क्रमेणेव** इतीवशब्दः। एकस्य हि तत्त्वादप्रच्युतस्य [11]वस्तुतः क्रमो नास्ति। तथा तु दर्शनमात्रम्। अत एव

अकुर्वाणोऽथवा किञ्चित् स्वशक्त्यैवं प्रकाशते।

इति तत्त्वादप्रच्युतस्य निष्क्रियस्य सक्रियस्येव प्रकाशनं विवर्तो द्योतितः ।। ३४ ।।

इदानीं सत्ताद्वैतदर्शनेन " षड् भावविकारा भवन्ति " इति निरुक्तकारमतमेव निगमयितुमाह ।

**सत्ता स्वशक्तियोगेन सर्वरूपा व्यवस्थिता ।**
**साध्या च साधनं चैव फलं भोक्ता फलस्य च ।। ३५ ।।**

" तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते " ( Vak. III. जा. ३४ )

तथा " सैव भावविकारेषु षडवस्थाः प्रपद्यते ' ( Vak. III. जा. ३६ )

इति जातिसमुद्देशे सर्वभावानु[1]यायिनी [2]सत्सदिति प्रत्ययहेतुः सन्मात्ररूपस्य [3]सर्वत्रानुगमा-न्महासामान्यस्वभावा सत्ता सर्वशब्दानां विषय इति प्रतिपादितम् । तथा च स्वशक्ति-रूपोपाधिनियमितशरीरा सर्वात्मकत्वमनुभ[4]वन्त्यपि सिद्धसाध्यरूपतया नामाख्यातपद-वाच्यतामनुभवति। तद्व्यतिरेकेण च पदार्थान्तराभावात् सैव विचित्रशक्तित्वाद् [5]भोग्य-भोक्तृतत्साधनरूपतया विश्वया[6]त्रामुद्वहति। सर्वत्र भोक्त्रादिषु सन्मात्रस्य संविद्रूपस्यानुग-मात्तस्यैव सत्यता। विकल्पपरिघटितस्तु नानात्वव्यवहार इति सर्वाद्वैतवादिषु समान-मेतत् ।। ३५ ।।

अधुना यत्तत् साधनसमुद्देशे
प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता ।

---

5. AD om तिंव–हारा. 6. A °स्वभावावि°, E °स्वभावरूपवि° 7. A °षयेत्यादिका क्रिया प्र° 8. EI तथा च प्रवि°. 9. A °गानुसारेण. 10. E °वमद्वयदर्श° P तदेवं विव°. 11. AD om. वस्तुतः–प्रकाशते इति तत्त्वादप्रच्युस्य.

35. 1. A °नुपातिनी. 2. A सत्ता इति. 3. A गमः स्यात् महा°. 4. A °मनुभव-त्यपि. 5. A °तत्त्वात् सा°. 6. A विवर्तया.



शक्तिरेकाधिकरणे [1]स्रोतोवदपकर्षति ( Vāk. III सा. ३३. )

इति क्रियालक्षणमुक्तं तदनुस्मारयति।

**क्रियामन्ये तु मन्यन्ते क्वचिदप्यनपाश्रिताम् ।**
**साधनैकार्थकारित्वे प्रवृत्तिमनपायिनीम् ।। ३६ ।।**

प्रवृत्तिलक्षणेयं क्रिया नित्याना[2]श्रिता
अपूर्वं कालशक्तिं वा ......( Vāk. C. का ३४ )

इत्यादिना पूर्वमेव व्याख्याता साधनशक्तिभिः सह साध्यमेकं फलं साधयतीति ताः शक्तीर्द्रव्याणां प्रवहद्रूपा सती समाकर्षयति ।। ३६ ।।

कथमस्या नित्याया साध्यत्वमिति चेदाह।

**सामान्यभूता सा पूर्वं भागशः प्रविभज्यते ।**
**ततो व्यापाररूपेण साध्येव[1] व्यवतिष्ठते ।। ३७ ।।**

प्रथमावस्थायामपूर्वादिरूपतया [2]सा प्रवृत्तिः सामान्येनाभिधीयते। परतस्तु यथास्वं साधनव्यापारोपपादितप्रविभागा साध्यमानरूपतया क्रियेति व्यवह्रियते । तथा चानुद्भिन्नविशेषरूपै[3]दशायां कारकशक्तीनां प्रवर्तिका । ततो निष्कृष्य प्रवृत्तिरिति सामान्यसमाख्यायानाश्र[4]यैव भण्यते। वि[5]शेषप्रक्रमे तु साधनसमवायिनी साध्यता-मनुभवन्ती यथायथं पचिक्रिया भिदिक्रियेत्यादि व्यवहारं [6]वर्तयति। अत एव

कारकाणां प्रवृत्तिविशेषः क्रिया " ( M. Bhā. I. p. 258, l. 11 )

इति लक्षण[7]मुद्दिष्टम् ।। ३७ ।।

**प्रकृतिः साधनानां सा प्रथमं तच्च कारकम् ।**
**व्यापाराणां ततोऽन्यत्वमपरैरुपव[1]र्ण्यते ।। ३८ ।।**

अपूर्वादिस्वभावासौ सामान्यभूता [2]प्रवृत्तिर्द्रव्याणां कारकशक्तीरादधाना **प्रकृति-रिति** भण्यते। अत एव प्रवर्तकत्वात् स्रोतसा तुल्या कथिता । एवंभूतापि च नित्यत्वा-दन्यसाधनसाध्या न भवतीति तदेव **प्रथममाद्यं कारकम्**, कारकाणामपि साधक-मित्यर्थः। तदेव च प्रवृत्तिरूपं[3] साधनभेदेषु प्रविभक्तशरीरं विशिष्टक्रियास्वभावमित्येकीयं मतम्। अन्ये तु ततः सामान्यभूतात् प्रवृत्ति[4]लक्षणात् [5]साधनभेदसमवेतानां विशिष्ट-

---

36. 1. A श्रोतो° 2. A निया आश्रिता. 3. A °क्रिनेत्या°.

37. IE साध्येवावति°. 2. AD om सा प्रवृत्तिः–साध्यमानरूपतया. 3. A °रूपे द° 4. P °नाश्रितैव. 5 A om. विशेषप्रक्रमे–भिदिक्रिया. 6. A प्रव°. 7. A उपदिष्टम्.

38. 1. A उपचर्यते. 2 A प्रकृतिर्द्र°. 3. I. P. प्रकृतिरूपं. 4. A प्रकृतिल°. 5. BP साधनभेदात् सम°.

क्रियास्वभावानां व्यापाराणामन्यत्वं भेदमभ्युपयन्तीति दर्शनविकल्पः सामान्यविशेषयो-[6]र्व्यतिरेकमतावलम्बनेनोक्तः ॥ ३८ ॥

तदेवं [1]विभक्तलक्षणा क्रियाख्यातशब्दैरभिधीयते इत्युक्तम् । [2]तत्रोच्यते—साधन-संख्याकालपुरुषोपग्रहा अप्याख्यातपदात् प्रतीयन्त इति कथं क्रिया[3]वाचि नियमेन तदित्याशङ्कयोपपादयति ।

**बहूनां सम्भवेऽर्थनां केचिदेवोपकारिणः ।**
**संसर्गे [4]कश्चिदेषां तु प्राधान्येन प्रतीयते ॥ ३९ ॥**

**बहूनामर्थानां सम्भवे** सति [5]संबन्धोऽवश्यंभावी । तत्र च न[6] सर्वे समशी-र्षिकया [7]संबन्धभाजः । अपि तु **केचिदेवोपकारिणः** अङ्गभूताः । ततोऽन्यः **कश्चिद्** उपकार्योऽङ्गीति प्रतियते । तथा च प्रधानोपसर्जनभावे सति संबन्धः प्रतिष्ठामा-सादयति ॥ ३९ ॥

ततः किमित्याह ।

**साध्यत्वात्तत्र चाख्यातैर्व्यापाराः सिद्धसाधनाः ।**
**प्राधान्येनाभिधीयन्ते फलेनापि प्रवर्तिताः ॥ ४० ॥**

व्यापाराः क्रियारूपाः [1]साध्यस्वभावाः तिङन्तैः प्रधानभावेन **अभिधीयन्ते** इति [2]साधनाद्यभिधानेऽप्याख्यातस्य क्रियावाचित्वमुपपद्यते । क्रियाप्रधानं ह्याख्यातम् । प्रधाने-न च [3]व्यपदेशा भवन्ति । **सिद्धसाधनाः** इति । सिद्धं निर्वृत्तं साधनमेषामिति कारकापेक्षया व्यापाराणां प्राधान्य[4]मुद्दीपयति । भाव्यं हि निर्वर्त्यं प्रधानं भूतापेक्षया । यद्येवं क्रियापेक्षयापि फलं प्रधानं तदर्थं प्रवृत्तेरित्याशङ्कयाह **फलेनापि प्रवर्तिताः** इति । वस्तुवृत्तेन भवतु फलं प्रधानम् । आख्यातात्तु [5]क्रियायाः प्राधान्याध्यवसायः । पचतीति हि न फलं शब्देनोपादीयते । अपि तु पदान्तरनिबन्धनं तत् । एकपद-निबन्धनेषु चार्थेषु [6]गुणप्रधानभावश्चि[7]न्त्यते । पच्यते इत्यपि कर्मणि प्रयोगे शब्दात् पाकस्यैव साध्यतया प्राधान्यं प्रतीयते । पाको निर्वर्त्यते, इति ह्यत्रार्थः । स तु पाकः फलसाधनायेति सामर्थ्यात् प्रतीयते फलं प्रत्यङ्गभावः क्रियायाः । साक्षात्तु शब्दव्यापारेण

6. A °कामनावनोक्तः

**39.** 1. A चिच्छकिल°. 2. EP अत्रोच्यते. 3. A. किया च विनियमेन. 4. A श्चिदेव. 5. AD संम्मवोऽवस्यभावात्. 6. om. न सर्वेसमशीर्षिकया. 7. A संबन्धनातः से.

**40.** 1. A साध्यमावास्तिस्वभावाः 2. A °नादभि° 3. A °देशोमवति. 4. A द्योतपति 5, AEP क्रियाया एव प्रा°. 6 E. P° याव एव चि° 7. A विद्यते.



प्राधान्यमेवास्याः । क्रियैव हि प्रधानभूता चोदिता सत्यनुष्ठीयते[8] । वस्तुसामर्थ्यात्तु फलं भवति । न तु फलाय क्रिया चोदिता, प्राधान्येन चोदनाद् यजेत इत्यादि । अत एव सैव प्राधान्याद् वाक्यार्थो वैयाकरणानामिति [9]क्रियाविवेकेऽस्माभिर्विवेचितं तत एवावधार्यम् । साधनानां तु सिद्धानां परमनुपकुर्वतामभिधाने प्रयोजनाभावात् तिङन्तेन गुणभूतान्येव [10]क्रियायां साध्यायां तान्यभिधीयन्ते । कर्मणोऽपि [11]साधनसाधारणस्य कारकत्वस्य भावात् क्रियां प्रति [12]गुणभाव एव । यत्र तु [13]तदेव फलं तत्र फलरूपानुप्रवे-शादस्य वास्तवं प्राधान्यम्, न तु शाब्दम् । एतच्च क्रियाविवेकादेव विस्तरतोऽवगन्तव्यम् । संख्यापुरुषौ साधनाधारद्रव्यधर्मत्वात् साधनद्वारेण क्रियामुपकर्वन्तौ गुणभूतौ । तत्र कालो-पग्रहौ तु साक्षादेव क्रियोपकारितया गुणभूतौ । यत्र च भावे लकारस्तत्र सङ्ख्याद्यपेक्षमेव प्राधान्यं क्रियायाः । एकपदोपात्तस्य साधनस्याभावात् संङ्खयया साक्षात् संबन्धः प्राधान्या-देव न भवति, क्रियायाः साध्यत्वाद्ध्यसौ प्रधानम् । न ह्यनिर्वृत्तं परस्याङ्गभावमुपगन्तु-मर्हति । तथा चास्या[14] भेदाभाव इति

एका क्रिया ( M. Bhā. I. p. 238 l. 10 )

इति भाष्यम् । एकशब्दश्चायं भेदाभावप्रदर्शनपरो न सङ्ख्यावचनः । असत्त्वभूतत्वेन निःसङ्ख्यत्वात् क्रियायाः ॥ ४० ॥

यद्येवं संख्यावाचिभ्यः [1]क्रियागणनावृत्तौ कृत्वसुजादयः कथं पञ्चकृत्वः पचति [2]द्विः पचतीतीत्याशङ्क्योपपदयति ।

**एकत्वावृत्तिभावाभ्यां [3]भेदाभेदसमन्वये ।**
**संख्यास्तत्रोपलभ्यन्ते संख्येयावयवक्रियाः ॥ ४१ ॥**

[4]निःसंख्या एकापि क्रिया यदा आवर्तते तदा आवृत्तिनिबन्धनं भेदं स्वतश्चाभेद मुपादाय भेदाभेदयोगेऽस्याः संख्या दृश्यन्ते । [ **संख्येयावयवक्रियाः इति ?** ] संख्येया अवयवक्रिया यासाम् । अयमर्थः । एकफलत्वादेककर्तृकत्वाच्च क्रियैका पुनः पुनः प्रवृत्तिलक्षणां चावृत्तिमनुभवति । तत्राख्यातेन [5]सकलक्रियाप्रवाहोऽभेदेनाभिधीयते । [6]आवृत्तिनिबन्धनं तु भेदमवयवाधिकरणं [7]संख्यापदमनुभवति । तथा च कृत्वसुजाद्युत्पत्तिः । न ह्यत्यन्तभेदेऽभेदे[8] वा आवृत्तिः सम्भवति । अपि तु भेदा-

8. A here inserts फलप्रत्यङ्गता तु क्रिया. 9. E. वि ( वेचि ) पञ्चितं I. विपञ्चितं. P प्रपञ्चितम्. 10. क्रियाणां न भिधीयन्ते. 11. E I P साधनस्य साधा. 12. A गुणता. 13. A om तदेव. फलं. 14. I चास्या असत्या मे° P च असत्या मे°

**41.** 1 A °णनादौ, E° णनवृत्तौ. 2. A om द्विः पचति. 3. E °त्तिसंख्याभ्यां. 4. AD om. निःसंख्या—अयमर्थः 5. A भेदोना°, E भेदेनाभि° 6. A प्रवृत्तिनि°. 7. मनुचरति. 8. A om भेदे.

भेदाभ्याम्। एवं तावत् क्रियाया: स्वत: संख्यायोगो नास्ति। पचति पचत: पचन्ति इति तु साधनगतसंख्यासम्प्रत्यय इति। इह तर्हि कथं संख्याभेदावगम: पाक: पाकौ पाका: इति। न ह्यत्र साधनमस्ति। कृदन्तै: सिद्धतयाभिधीयमानत्वात् क्रियाया: संख्यायोगो न विरुध्यते ॥ ४१ ॥

अत्र यदि सिद्धतयाभिधानं तदा —

**सिद्धस्यार्थस्य पाकादे: कथं साधनयोगिता।**
**साध्यत्वे वा तिङन्तेन कृतां भेदो न कश्चन ॥ ४२ ॥**

परिनिष्ठितरूप: पदार्थ: साधनसंबन्धं[1] नानुभवति। तथा च [2]पाकादिरिति तत्रापि साधनयोगाभावात् [3]कृत्प्रयोगे कर्तृकर्मणो: षष्ठीविधिर्नोपपद्यते। अथ कृदभिहिते पाकादौ साध्यतैव[4] तदा भाष्यकाराभिमत: कृतां तिङन्तेन भेदो[5] विरुध्येत। [6]भाष्यकारो हि पञ्चकृत्व: पचतीतिवत् पञ्चकृत्व: पाक इति प्रयोगं नेच्छति ॥ ४२ ॥

अथ पाकादे: सिद्धत्वेऽपि षष्ठ्या: साध्यतयाभिधानं यत्राख्याते स विषय इत्याशङ्क्य व्युदस्यति।

**तत्र कारकयोगाया यद्याख्यातं निबन्धनम्।**
**षष्ठ्या: सा लेन संबन्धे व्युदस्ता कर्तृकर्मणो: ॥ ४३ ॥**

“ कर्तृकर्मणो: कृति ” ( P. 2. 3. 65. )

इति [1]वचनादाख्यातमविषय एवास्या: षष्ठ्या:। अभ्युपगम्यापि तूच्यते

न लोकाव्यय .... ( P. 2. 3. 69. )

इति [2]लकारप्रयोगे प्रतिषिद्धा षष्ठीति नायमस्या विषय:। अत एव [3]कृद्ग्रहणस्यैतद्व्यावर्तनेऽनुपयोगात् तदनादरेणैतदुक्तम्। [4]शत्रादिव्यावृत्त्यर्थं तु तत्र[5]लग्रहणम् ॥ ४३ ॥

एवं तर्हि पाकादौ साधनसंबन्धकाले साध्यत्वं संख्याभेदप्रति[1]पत्तिवेलायां तु सिद्धत्वं भविष्यतीत्याशङ्क्याह।

**एकाभिधान एकोऽर्थो[2] युगपच्च द्विधर्मभाक्।**
**न सम्भवति सिद्धत्वे स साध्य: स्यात् कथं पुन: ॥ ४४ ॥**

---

42. 1. °न्धाननुभ° 2. °दिभिरिति. 3. °द् प्रयोगे. 4. A साध्यन्ते च. 5. A न्तेन न विरुध्यते. 6. A तत्रापि हि.

43. 1. A °दारावनम°. 2. I लप्रत्यययोगे. 3. A नद्ग्रणस्यै°. 4. A अतोऽना. दिवा°. 5. A सृद्ग्रहणम्.

44. 1. A °प्रतिवेला°. 2. A एवार्थौ.



**एकोऽर्थो युगपद्** विरुद्धधर्मद्वययोगी न संभवतीति सिद्धसाध्योभयरूपता पाकादेरेकप[3]दोपादानस्य नास्ति[4]। भिन्नशब्दोपादानस्तु स धर्मद्वययोगी भवत्येव पचति [5]पाचक: पाक: ? इत्यादि ॥ ४४ ॥

इदानीमेकाभिधानत्वमेवा[1]त्र नास्ति, अपि तु भिन्नाभिधानत्वमिति पाकादौ शब्दद्वयेन धातुप्रत्ययरूपेण सिद्धसाध्यरूपोभयार्थप्रतिपादनमवि[2]रुद्धमित्येतदुपपादयितुमुपक्रमते।

**एतावत् साधनं साध्यमेतावदिति कल्पना।**
**शास्त्र एव न वाक्येऽस्ति विभाग: परमार्थत: ॥ ४५ ॥**

एकशब्दोपादाने ह्यर्थेऽन्वयव्यतिरेकवशेन शास्त्रेऽपोद्धारकल्पनायां प्रकृतिप्रत्ययविभागेनार्थविभाग: शक्यक्रिय:। लोके त्वखण्ड एव शब्दोऽखण्डस्यार्थस्य वाचक इति न तत्रार्थप्रविभाग: नापि शब्दप्रविभाग: सत्यरूप:। वाक्येन[3] तत्र व्यवहाराच्च **वाक्ये** इत्याह ॥ ४५ ॥

तत्र कियत् साधनं कियत् साध्यं क्व कथं प्रकल्पते शास्त्रे इत्याह।

**आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता।**
**प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रम: ॥ ४६ ॥**

पचतीत्यादावन्वयव्यतिरेकवशेन धातुभाग: क्रियायां प्रत्ययभागस्तु कारकादौ वर्तत इति शास्त्रे परिकल्प्यते। यदाह वाक्यकार:।

‘ प्रत्ययार्थस्याव्यतिरेकात् प्रकृत्यन्तरेषु। धातोश्चार्थभेदात् प्रत्ययान्तरेष्वन्वयव्यतिरेकाभ्याम् ” (Va. 6. M. Bha. I p. 255)

इति। एवं पाकादावपि ॥ ४६ ॥

तथा हि।

**साध्यत्वेन क्रिया यत्र धातुरूपनिबन्धना।**
**सत्वभावस्तु यस्तस्या: स घञादिनिबन्धन: ॥ ४७ ॥**

भिन्नाभिधानत्वे धर्मद्वययोगे निदर्शनमत्राह।

प्रकृतिप्रत्ययानां शास्त्रेऽ[1]सकृदुपदेशादभेदाध्यवसायेनान्वयव्यतिरेकाभ्यां प्रक्रिया[2]सिद्ध्यर्थमर्थवत्ताप्रतिज्ञानाद् य एव धातुराख्याते स एवात्र कृदन्त इति तन्निबन्धनोऽप्यभिन्न: साध्यस्वभाव:। ततश्चात्र धातुभागवाच्यसाध्यार्थापेक्षितानि साधनानि

---

3. A पदेपादोनस्तु. 4. A om. नास्ति-स. 5. E om. पाचक. P om. पाक.

45. A om °मेवात्र–°नत्वमिति. 2. I °मपि सिसिद्ध°. 3. A वाक्ये तत्तत्र.

46. I. AD पचिः कल्पते.

47. I. A सकृदुप° 2. A °सा इति जा°

स्वनिमित्तं संस्कारं विभक्तिलक्षणं प्रयुञ्जत एव । धातोः परस्तु प्रत्ययो घञादिस्तस्य प्रकृत्यर्थस्य सत्त्वभावं दर्शयति। येन लिङ्ग[3]संख्याभ्यां योगः । अतश्च तिङन्तेन कृतो [4]भेदोऽप्युपपन्नः ॥ ४७ ॥

भिन्नाभिधानत्वे धर्मद्वययोगे निदर्शनमत्राह ।

**बन्धुता भेदरूपेण बन्धुशब्दे व्यवस्थिता ।**
**समूहो बन्ध्ववस्था तु प्रत्ययेनाभिधीयते ॥ ४८ ॥**

बन्धुशब्दे बन्धुता[1] भेदरूपेण वाच्यावस्थिता । बन्धूनां समूहो बन्धुतेति [2]समूहप्रत्ययेऽभेदे[3]न बन्ध्ववस्था वाच्या । न हि समूहो नाम बन्धुभ्योऽन्यः कश्चित् । एवं च यथा प्रकृतिप्रत्ययाव[4] भेदाभेदाभ्यामर्थमभिध[5]त्तस्तथा सिद्धसाध्यताभ्यां पाकादौ धातुप्रत्ययाभ्यामर्थाभिधानम् ॥ ४८ ॥

शब्दभेदाच्चात्र विषयभेदेनाविरोध इत्याह ।

**तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया ।**
**सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति ॥ ४९ ॥**

साधनान्यपेक्ष्य साध्यत्वादनिर्वृत्ता क्रिया धातू[1]पादाना । कृत्प्रत्ययापेक्षया तु[2] सिद्धतेति[3] न साध्यत्वं तं प्रति । तथा च न साधनयोग इत्यर्थः ॥ ४९ ॥

अपेक्षणीयभेदात्[1] स्वभावद्वययोगे[2] दृष्टान्तमाह ।

**राज्ञः पुत्रस्य नप्तेति न राज्ञि[3] व्यतिरिच्यते ।**
**पुत्रस्यार्थः प्रधानत्वं न चास्य विनिवर्तते ॥ ५० ॥**

राज्ञः पुत्रस्य नप्ता विजयतामित्यत्र नप्त्रपेक्षया पुत्रस्या[4]प्राधान्ये व्यतिरेकेऽपि राजापेक्षया व्यतिरेको न भवति । तथा च तदपेक्षया प्राधान्यं न निवर्तते यथा एवं पाकार्थस्यापि शब्दद्वयापेक्षे सिद्धसाध्यते[5] न विरुध्येते इत्यर्थः ॥ ५० ॥

तदपरं दृष्टान्तमाह ।

**मृगो धावति पश्येति साध्यसाधनरूपता ।**
**तथा विषयभेदेन सरणस्योपपद्यते ॥ ५१ ॥**

3. A लिङ्गसंरकाभ्यां. 4. A प्युपपद्यते, E °भ्युपपन्न.

48. 1. A बन्धुतारूपे भेदेन व्यवस्थिता. 2. A °प्रत्ययो. 3. A भेदेन. 4. A °वर्थ-भेदा° 5. A °मभिघ्नः त°

49. 1. A धातुना भानारप्रत्य° 2. IP °पेक्षा तु. 3. AEP सिद्धेति.

50. 1. A ०.पेक्ष्यते तदा तु. 2. A. 'वियोगे. 3. A राज्ञो. 4. I स्य प्रा°. 5. AM° घ्यते ते इत्यर्थः



धावतीति [1]तिङुपात्तकर्त्रपेक्षया सरणक्रिया साध्या । [2]दर्शनक्रियापेक्षया [3]साधनत्वं कर्मतामनुभवति । न ह्यत्र मृगः कर्म, द्वितीयाप्रसङ्गादिति सरणक्रियैव कर्म । तस्याश्च साधनप्रत्यक्षतायां प्रत्यक्षताभिमानात् पश्ये[4]ति दर्शनक्रियाकर्मतोपपत्तिः[5] । साधनत्वं च न साध्यावस्थायामेव, अनिष्पन्नस्य परमनुपकुर्वतः साधनत्वायोगात् । उत्तरकालं तु साधनत्वं निर्वृत्तायाः क्रियायाः क्रियान्तरं प्रत्युपपद्यते । एवं घञादिविषयेऽपि धातुना साध्यत्वेनाभिहितायां क्रियायां प्रत्ययेन सिद्धताभिधानम् । प्रकृतिप्रत्ययौ च प्रत्ययार्थं सह ब्रूत इति सिद्धतायाः प्राधान्यात् साध्यतागतावृत्त्य[6]भावात् कृत्वसुजादयो न भवन्ति । [7]कृत्यादयस्तु लकारवत् साध्यात्मत्वं भावं [8]स्वभावादाचक्षते । केवलं तु शब्दान्तरोपादानमेषां साधनमिति कृत्वोर्थप्रत्ययसंबन्धो भवत्येवैषाम् । द्विः शयितव्यं भवता । त्रिर्भुक्तं देवदत्तेन । द्विर्भुक्त्वा गतः । द्विर्दत्तवान् ॥ ५१ ॥

तदेवम् —

**लकृत्यक्तखलर्थानां तथाव्ययकृतामपि ।**
**रूढिनिष्ठाघञादीनां धातुः साध्यस्य वाचकः ॥ ५२ ॥**

सर्वत्रैवान्वयव्यतिरेकाभ्यां साध्यस्वभावार्थाभिधायित्वं धातोः । संज्ञाशब्दानामपि व्युत्पत्तिकर्मणि क्रियाया उपयोगः । तत्र लकारे क्रिया प्राधान्येनाभिधीयते । [1]कृत्यक्तखलर्थेष्वपि तथैव । निष्ठातो [2]भेदेन क्तो नपुंसकविषय उक्तः । एवं साध्यताभिधानात् [3]साधनसंबन्धो न विरुध्यते । अत्र[4] साधनसंबन्धादेव साध्यतावसायः । धातुप्रातिपदिकाभ्यां हि स्वार्थस्य सिद्धसाध्यते [5]नावेद्येते । अपि तु साधनसंबन्धायत्ता धात्वर्थस्य साध्यताप्रतीतिः । साधनविभक्तयश्च प्रातिपदिकादुत्पद्यमानास्तदर्थस्य सिद्धतामावेदयन्ते । गतमेतत् ॥ ५२ ॥

' परिदेवने श्वस्तनी भविष्यन्त्यर्थे ( Vā. 1. on P. 3. 3. 15, M. Bhā. II. p. 143 l. 18 )

इत्युपसंख्यानं

' कालविप्रकर्षात्तूपमानम् ' ( Vā. 2 on P. 3. 3. 15, M. Bhā. II. p. 143 l. 21. )

51. 1. A om. तिङ्. 2. A IMP दर्शनापे° 3. A साध्यत्व. 4. A खे यदि. 5. IP °क्रियोपपत्तिः. 6. IP °यताः वृत्त्यभा° 7. A कृदादयस्तु. 8. A भावादिविक्षते.

52. 1. A कृत्यार्थे ख°. 2. E °देनोक्तानपु°. 3. A साधनविरु° M °न्धो वि°. 4. A om. अत्र, P तत्र. 5. E नापद्येते.

इति प्रत्याख्यातम् । तत्र भाष्य उक्तम् —

‘ न [ वै ] तिङन्तेनोपमानमस्ति ’ ( M. Bhā. II, p. 143 l. 23 )

इति । तद् कथं तिङन्तेनोपमानं [1]न भवतीत्येतदुपपादयति ।

**साध्यस्यापरिनिष्पत्तेः सोऽयमित्यनुपग्रहः ।**
**तिङन्तैरन्तरेणेवमुपमानं ततो न तैः ।। ५३ ।।**

इह[2] तिङन्तार्थः साध्यस्वभावोऽपरिनिष्पन्नरूपः **सोऽयम्** इत्युपमेयेन [3]सहाभेद-कल्पनेनोपग्रहीतुं न पार्यते । तिङन्तपदैः [4]सिद्धरूपस्यैव प्रत्यायनासंभवात् । अतश्च

“ इयं नु कदा गन्ता ( M. Bhā. II. p. 143. l. 19. )

इत्यादौ क्रिया क्रियया[5] नोपमीयते । तद् यथा सिंहो माणवक इति सोऽयमित्यभेदेनाध्यवसायादिवार्थगर्भः संबन्धो नैवमत्र । असिद्धत्वादेव सोऽयमिति संबन्धस्यैवाभावात् । ततश्चेवशब्दमन्तरेण सिंहो माणवक इतिवद् अत्राभेदेनोपमानोपमेयभावो नास्ति । इवशब्दप्रयोगे तु भेदेनोपमानोपमेयभावः प्रतीयते, क्रन्दतीव गायतीति । तत्र च साध्यत्वादेव न [6]क्रियागतः सः । साधनगतस्तु यो गायति स क्रन्दतीवेति न क्रिययोः सारूप्यम् । अपि तु सर्वनाम्ना व्यापारे गुणभूतमपि साधनं प्राधान्येन प्रत्यवमृश्य सम्बध्यते । तद् यथा यः पचति तस्यापत्यमिति न तिङन्तार्थ-स्यापत्ययोगः ।

‘ लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । ’

इति तूत्प्रेक्षा नोपमा, उपमेयानिर्देशात्[7] ।। ५३ ।। ’

ननु स्वतोऽसिद्धत्वान्मा भूत् क्रियाया उपमानोपमेयभावः । [1]साधनमुखेन तु भविष्यतीत्याशङ्क्याह ।

**साधनत्वं प्रसिद्धं च तिङ्क्षु[2] संबन्धिनां यतः ।**
**तेनाध्यारोप एव स्यादुपमा तु न विद्यते ।। ५४ ।।**

तिङन्तवाच्ये विषये ये संबन्धिन उपादीयन्ते तेषां साध्यार्थापेक्षया कारकत्वं[3] निश्चितम् । अन्यथा संबन्धाभावात् । अतः पर्वतश्चलति नभश्चलति इत्यादौ पर्वतादीनां श्रुत्या तावत् साधनभावः प्रत्याय्यते । स तु यदि [4]नाम नावकल्पते इत्यध्या-

53. 1. A om. न, M °नं मे भ°. 2. A तिङन्तार्थस्वभावो. 3. A सहायेनेदंकल्पेनो° सहाभेदकत्वेनो° 4. AE °पस्यैव प्र° 5. A क्रियाया. 6. A क्रियातः साध°. 7. A श्यात्.

54. 1. °नद्वारेण. 2. A भिङ्क्षु. 3. IP कारकत्वं च नि° 4. A यदि साधनाय M यत्तु यद्निाम°



रोपितसामर्थ्याश्चलने साधनभावमुपयान्त्यगादयः, न त्वतो वाक्याच्चलतीवेत्युपमानोपमेयभावः प्रतीयते । तद्यथा [5]शक्त्यतिशयख्यापनाय कश्चिदभिधत्ते पर्वतं भिनत्ति, महोदधिं प्रतरतीति । [6]नास्माद्भिनत्तीवेत्यादिप्रतिपत्तिः । अपि तु संभावितसामर्थ्यं साधनमभिसम्बध्यते क्रियया । एवं

‘ बिभेत्यल्पश्रुताद् वेदः ’

इत्यादावध्यारोपेणैव [7]समन्वयो नोपमयेति कारकमुखेनापि क्रियायामुपमानोपमेयभावा-भावः । इत्थं च

‘ इयं नु कदा गन्ता ’ ( M. Bhā. II. p. 143. l. 19 )

इत्यादावध्यारोपेणैवोपपत्तिर्व्याख्येया । भविष्यत्सामान्ये भविष्यदनद्यतनत्वेन दीर्घकाल-तया गमनस्य विवक्षिते तत्र [8]गन्तृत्वाध्यारोपः ।। ५४ ।।

इतश्च क्रिययोरुपमानोपमेयभावो नास्तीत्याह ।

**न्यूनेषु च समाप्त्यर्थमुपमानं विधीयते ।**
**क्रिया चैवाश्रये सर्वा तत्र तत्र समाप्यते ।। ५५ ।।**

चन्द्र इव [1]दर्शनीयं मुखमस्या इत्यादावुपमानं परिपूर्णगुणं[2] प्रसिद्धम्, उपमेयं तु न्यूनगुणमिति । क्रिया तु साधनसाध्या स्वाधारे परिसमाप्ता सर्वत्र समेति नोपमाविषयः ।। ५५ ।।

अत्रोदाहरणार्थमाह ।

**येनैव हेतुना हंसः पततीत्यभिधीयते ।**
**आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते ।। ५६ ।।**

गमिक्रियां साधयन् हंसः पक्षाभ्यां पततीत्युच्यते, आतिरपि पक्षिविशेषस्ताभ्यामेव स्वपक्षाभ्यां तथैव गमिक्रियां निष्पादयन्ती पततीत्यभिधीयते इति प्रत्याश्रयपरिसमाप्तत्वात् [1]क्रियायां न्यूनाधिकभावाभावात् सजातीयत्वे सति[2] गवय इव गवय इतिवदुपमानोप-मेयभावो नास्तीत्यर्थः । आतिः पतति हंस इवेति तु साधनयोरुपमानोपमेयभावो न तिङन्तवाच्ययोः [3]क्रिययोः ।। ५६ ।।

[1]ननु सजातीययोः क्रिययोर्मा भूदुपमानोपमेयभावः । विजातीययोस्तु स्यादि-त्याशङ्क्य तत्रापि निषेधति ।

5. A °भिधास्यायनाय. 6. AD न तस्या°. 7. P संबन्धो. 8 M. गन्ताव्यापारः

55. 1. A दृश्यते. 2. A °गुणप्रसिद्धः

56. 1. A क्रियात्मनाधिकभावा°, M °धिकविभावात. 2. A ( मतिगवय ) ? इति अ°. 3. E. om. क्रिययोः.

57. 1. om. ननु साजतीययोः क्रिययोः.

**क्रियाणां जातिभिन्नानां सादृश्यं नावधार्यते ।**
**सिद्धेश्च प्रक्रमे साध्यमुपमातुं न शक्यते ॥ ५७ ॥**

भिन्नजातीयाः पचति गच्छतीत्यादयः [2]क्रियाः परस्परतोऽत्यन्ताय[3] व्यावर्तमानाः [4]सादृश्यनिबन्धनमुपमानोपमेभावं [5]नासादयन्ति । इदं तदिति सिद्धतया परामृष्टमुपमानं[6] क्रियारूपमन्यत्र साध्यस्वभावे क्रियारूपे [7]संबन्धमुपनेतुमशक्यम् । आख्यातात् प्रतीयमानायाः क्रियायाः सिद्धत्वेनायो(त्वायो?)गात् । तदेवं तिङन्तार्थस्योपमानो[8]पमेयभावाभावात्

'कालविप्रकर्षात्तूपमानम् ( Vā. 2. on P. 3. 3. 15, M. Bhā. II. p. 143 l. 31 )

इत्यस्य वार्तिकस्यायमर्थः । गमनाध्ययनयोरलसविषयतया सम्भावनायां भविष्यत्सामान्यमपि [9]दीर्घकालतयोपमाया( मया? )नद्यतनकालविवक्षायां प्रत्ययः सिद्धः । अनद्यतन इवायं भविष्यत्काल इत्यर्थः ।

लक्षणहेत्वोः क्रियायाः ( P. 3. 2. 126 )

इति तु लक्ष्यलक्षणभावस्य शतृशानच्[10]प्रयोगेण प्रतीतेर्भवति क्रियायास्तद्योगः । एवं हेतुहेतुमद्भावस्य लिङ्प्रत्ययादप्यवगतेः । इतिशब्दप्रयोगादपि हन्तीति पलायते वर्षतीति धावतीति । विशेषणविशेष्यभावोऽपि न तिङन्तवाच्यावस्थायाम् अपि तु स्वातन्त्र्येण परामर्शे सति क्रियाया उपपद्यते । तथैवोपमानोपमेयभावस्तु न सम्भवति न्यूनाधिकभावाभावात् । पचतिकल्पं पचतितरामिति क्रियासंबन्धिना( नां?) न्यूनाधिकभाव इत्याहुः । गतमेत[11]त् ॥ ५७ ॥

इदानीमिदं विचार्यते । इह धातुवाच्योऽर्थः साध्यस्वभावो घञादिवाच्यस्तु सिद्धस्वभावः इति भाष्येऽ[1]नयोर्भावयोर्बाह्याभ्यन्तरयोर्भेदोऽभिहितः । तमेव [2]दृष्टान्तोपदर्शनेन व्युत्पादयितुमाह ।

**वनं वृक्षा इति यथा भेदाभेदव्यपाश्रयात् ।**
**अर्थात्मा भिद्यते भावे स बाह्याभ्यन्तरे क्रमः ॥ ५८ ॥**

2. I क्रियायाः. 3. AD परस्परमतीव. 4. AD सादृश्यमुप° 5. E I M नासादयति. 6. A मानं रूपमन्यत्र. 7. A न्धमुप्मातुय° 8. A वात M °ययावात् क्रिया काल° 9. The text here is not clear. 10. A च् प्रत्यययोगेन. 11. IP गतमदः ।

58. 1. A तयोः 2. A दृष्टान्त प्रदर्शनेन.



वृक्षसमुदायो **वन**मित्यभेदेन कथ्यते । **वृक्षा** इति तु भेदेन नानात्वेन । तथा च भिद्यतेऽर्थस्वभावो न शब्दशक्तिमात्रकृतोऽत्र भेद इत्यात्मग्रहणम् । भेदाभेदयोरन्यत्वात् समुदायावयवौ भिन्नावेव । [3]एवं धात्वर्थो भावोऽभ्यन्तरे प्रकृतिरूपे[4] वाच्यतया भवः [5]प्राथमकल्पिकत्वाद् आभ्यन्तरः । [6]स साध्यमानावस्थतया घञादिप्रत्ययवाच्याद् बाह्यात् सिद्धरूपाद् भावाद् भिद्यते । प्रकृतिवाच्यो हि भावोऽभेदेन[7] प्रतीयते, साध्यमानावस्थस्य सिद्धधर्मसंख्यायोगाभावात् । साधनभेदप्रतीत्यैव चाख्याते भेदप्रतीतेर्धातुरभेदेनैव क्रियामाचष्टे । घञादिप्रत्ययवाच्यस्तु भावः सिद्धतयाभिधानात् [8]लिङ्गसंख्याभ्यां भेदेनैव प्रत्याय्यते पाकः पाकौ पाकाः इति । आख्याते च साध्यमानावस्थस्य भावस्य प्राधान्यात् स्वधर्मेण कालेन साधनधर्मेण च [9]प्रत्यक्तादिना पुरुषेण योगः । फलवत्त्वाच्च क्रियायाः कर्त्रभिप्रायादिनात्मनेपदादिद्योत्येन[10] फलधर्मेणोपग्रहेण योगः । घञादिविषये तु सिद्धत्वाद् द्रव्यायमाणत्वान्नैवं कालादियोगः । केवलं द्रव्यधर्मेण लिङ्गेन संख्यया च योगः । तदेवमनयोः प्रकृतिप्रत्ययार्थयोर्भावयोर्बाह्याभ्यन्तरयोर्भेदः । यस्तु लकारवाच्यो[11] भावः शय्यते स्थीयते इत्यादौ असौ धात्वभिधेयामेव साध्यतामनुवर्तते, न तु घञादाविव सिद्धरूपम्[12] । स्वात्मावस्थो हि भावः साधनात्मना सिद्धतया चासंसृष्टो लकारवाच्यः । धातुवाच्यस्तु साध्यतया युक्त इति नायं लकारः स्वार्थिकः । तद्यथा स्वात्मप्रतिष्ठे प्रातिपदिकार्थे विधीयमाना प्रथमा न स्वार्थिकत्वेन व्यवह्रियते । धात्वभिधेयसाध्यतानुवर्तनाच्चास्य भावस्य कालादिना योगः । भाव्यत्वाच्च कर्त्रा न वियुज्यतेऽयमिति द्विविधो बाह्योऽपि भावो व्यवह्रियते तिङभिहित एकः कृदभिहितोऽपर इति । तुमुन्नादिविधौ च क्रियासामान्येन सिद्धसाध्यरूपोभयधर्मानाश्रयेण उपपदमुपादीयते । तेन भोक्तुं पाकः [13]कारकस्य व्रज्येत्यादिसिद्धिः । साध्यमानावस्थमन्यदेवोपलक्षितं वा क्रियारूपं धात्वर्थमाश्रित्य तुमुन्नादिविधिरित्यदोषः । अभ्यावृत्तिस्तु भाव्यमानधर्म[14] इति सिद्धताविषये तदभावात् कृत्वोऽर्थप्रत्ययाः पाकादिप्रयोगे न भवन्ति । तदेवं घञादिवाच्यो विलक्षणो भावः । तत्र

'कर्तरि कृत्' ( P. 3. 4. 67 )

इति वचनात् कर्तरि घञादीनां प्राप्तौ

'भावे' ( P. 3. 3. 18 )

3. A om. एवं. 4. A °रूपे च वा° 5. A प्राप्यनक°. 6. A I M om. स. 7. AE भेदेन. 8. A °ङ्गण तथा संख्याकारकयोगैनैव प्रत्याख्यायते. 9. A प्रत्यस्कादिना प्ररूपेण यो°. 10. E °दाभिद्यो° 11. A कारकत्वाचोमभावः प्रश्यते स्थी. M °राच्योभेदः 12. P रूपं. MO द्धस्वभावः 13. A कारको व्रजतीत्यादि. 14. A साध्यमान° त भाव्यमान इति.

इत्यर्थो निर्दिश्यते स च प्रत्ययविधेः प्राधान्याद् गुणभूतोऽत्रेति गुणे संख्याविवक्षायां [15]यथाश्रुतस्य च लिङ्गस्य विवक्षायां वचनान्तरे लिङ्गान्तरे च प्रत्यया न स्युरिति वार्तिककारेण

"भावे सर्वलिङ्गो निर्देशः" ( Vā l. on P.3.2.18. M, Bhā. II.p. 144 l. 9 )

कर्तव्यतया चोदितः । लिङ्गग्रहणस्योपलक्षणार्थत्वात् संख्यापि गृह्यते तत्र[16] । तेन भूतो(तौ)[17] भवने[18] भावे [19]भावयोरित्यादिनिर्देशः कर्तव्यः । तथा च पक्तिः पचनं पाकः [20]पाकावित्यादिसिद्धिरित्यर्थः ॥ ५८ ॥

अत्र भाष्यकारेण

"'निर्देशे नान्तरीयकत्वाल्लिङ्गसंख्यमतन्त्रम्'" ( Cf M. Bhā. II p. 144. l. 13 )

इति सर्वतः सिद्धिरुपपादिता । तत्र कथं नान्तरीयकत्वेनातन्त्रत्वमित्युपपादयति ।

**सामान्ये भाव इत्यत्र यल्लिङ्गमुपलभ्यते ।**
**भेदानामनुमेयत्वान्न तत् तेषु विवक्ष्यते ॥ ५९ ॥**

क्रियासामान्यवचनः कृभ्वस्तय इति भवतिना अर्थनिर्देशः क्रियमाणः सर्वधात्वर्थविषयः कृतो भवतीति 'भावे' इति[2] सामान्यचोदनायां भावशब्दार्थे सामान्यरूपे भिन्नार्थप्रकृतीनां प्रत्ययानामसम्भवाद्[3] विशेषपर्यवसाने यथाविशेषं स्त्रियां भावे नपुंसके भावे इति भावसामानाधिकरण्यान्यथानुपपत्त्या [4]प्रत्ययविधेर्भूयोऽनुग्रहानुरोधान्नियतव्यक्तिगतलिङ्गसंख्योपादानमतन्त्रमविवक्षितमित्यर्थः । [5]सर्वव्यक्त्यनुयायि हि भवत्यर्थसामान्यमत्र निर्दिदिक्षितम् । तच्च निराश्रयं निर्देष्टुमशक्यमिति नान्तरीयकं [6]नियतव्यक्त्युपादानम् । अन्येषां तु व्यक्तिविशेषाणां सामर्थ्यात् सन्निधानमिति यथाविशेषं सर्वलिङ्गसङ्ख्यापरिग्रहः । सकलविशेषपरिग्रहाय सामान्यचोदनायां नान्तरीयकनियतोपात्तविशेषनिष्ठतायोगात् । तद् यथा । अयं गौः पदा न स्प्रष्टव्य इति सामान्यचोदनायां [7]नेदन्तानिर्दिष्टनियतव्यक्तिनिष्ठतैव ॥ ५९ ॥

ननु च सामान्यचोदनायां विशेषपर्यवसानाद् भवतु पाकादौ बहुप्रकारोऽपि प्रत्ययः । प्रातिपदिकार्थस्तु[1] भाव इति पुंस्त्वं कथं त्यज्यत इत्याशङ्क्याह ।

**निर्देशे चरितार्थत्वाल्लिङ्गं[2] भावेऽविवक्षितम् ।**
**[3]उपमासविधत्वाच्च भावादन्यत् पचादिषु ॥ ६० ॥**

15. A यथास्तु तस्य च त्रिलिङ्गस्य. 16. A om. तत्र, E अत्र. 17. E भूते. 18. A भावेन 19. I भावयेदित्या. 20. A पाचक.

59. 1. This does not seem to be a quotation from the M. Bhā. but a statement of the point mentioned there. 2. A इतिभावः सामा°. 3. AD om. असम्भवाद्–सामानाधिकरण्य. 4. A प्रत्ययार्थाभावानुग्रहा°. 5. A °क्त्यनुपादानमिव भ°. 6. A om. नियत. 7. P नेदन्ता निर्दि°.

60. 1. A प्रातिपदिकात्तु पाक इति पुं° 2. E लिङ्गाभावे. 3. A उपमानेविधित्वाच्च.



प्रातिपदिकार्थस्य सत्त्वभूतस्य लिङ्गरहितस्यासम्भवात् तन्निर्देशे[4] नान्तरीयकं लिङ्गोपादानम् । [5]ततश्च [6]तन्निर्देशिकमविवक्षितम् । कार्ये निरुपाधिर्भावार्थे[7] एव विधावङ्गम् । स चात्रोपमानसदृशः, धातुसामान्याद् विधेः, यथा भवतेर्भावस्तथा पचतेः पाकस्त्यजतेस्त्यागो धात्वर्थोऽत्र प्रत्ययार्थत्वेन बोद्धव्य इत्यर्थः । अतश्च भावाद् भवत्यर्थाद् अन्यदर्थरूपं विशिष्टं पचादिधातुविषये पाकादिरूपः[8] प्रत्ययार्थः । तथा भावादपरं [9]पक्तिरित्यादौ यद्यपि लिङ्गं तथापि भिन्नलिङ्गयोरुपमानोपमेयभावो न विरुध्यत इत्यर्थः ॥ ६० ॥

"पचतेर्भवतौ यत्तन्निर्दिश्यते" ( M. Bhā. II p. 145, l. 4. )

इत्यत्रैव परिहारान्तरं भाष्येऽभिहितं व्याचष्टे ।

**भवतौ यत् पचादीनां तावदत्रोपदिश्यते ।**
**न च लिङ्गं पचादीनां भवतौ समवस्थितम् ॥ ६१ ॥**

[1]पूर्वं सामान्यचोदनायां सर्वव्यक्तितात्पर्यादतन्त्रे लिङ्गसंख्ये इत्युक्तम् । इदानीं ये एते पुंस्त्वैकत्वे उपात्ते ते [2]अविवक्षिते एव सामान्यगते । सामान्यं ह्येकं व्यक्तिभेदेऽप्यनुवर्तमानमेकत्वं न जहात्येव । अन्यथा सामान्यमेव न भवेत् । अतश्च व्यक्तिविशेषाणां लिङ्गसंख्यान्तरयोगेऽपि **पचादीनां भवतौ** [3]वर्तमानं यद्रूपं सन्मात्रं पुंस्त्वैकत्वानुगतं तावन्मात्रं सामान्यमत्र निर्दिश्यते । न च विशिष्टं [4]लिङ्गसंख्यं सन्मात्रे रूपेऽस्तीति पक्तिः पचनं पाकौ पाका इत्यादौ सन्मात्रस्य रूपस्याजहत्स्वलिङ्गसंख्यस्यास्यानुवृत्तेस्तदाश्रयो विधिः सर्वत्रोपपद्यत इत्यर्थः[5] ॥ ६१ ॥

ननु च सामान्यस्य विशेषात्मकत्वाद् विशेषगतं लिङ्गं सामान्यसंबन्ध्येवेति नियतलिङ्गोपादानेऽन्यत्र कथं विधिरित्याशङ्क्याह ।

**एकश्च सोऽर्थः सत्ताख्यः कथञ्चित् कैश्चिदुच्यते ।**
**लिङ्गानि चास्य[1] भिद्यन्ते पचिरूपादिभेदवत् ॥ ६२ ॥**

**स एकोऽर्थो** भावशब्दाभिधेयः सकलधात्वर्थ[2]विषयसिद्धतासमवेतसामान्यरूपो घञादिप्रत्ययवाच्यः **सत्ताख्यः** [3]स्वशक्त्या **कैश्चिच्छब्दैः** केनचित् प्रकारेणाभिधीयते भावः सत्तेत्येवमादिभिः सामान्यशब्दैः [4]सामान्यरूपः । पाकस्त्याग इत्यादिविशेषशब्दैर्विशेषरूपः । तत्र च यथा पचे रूपं पठे रूपं स्वभाव इत्यादिव्यक्तिविशेषोपाश्रयवशात् सत्ताख्योऽर्थो भिद्यते तथा शब्दभेदेन पक्तिः पचनमित्यादिना लिङ्गानि स्त्रीत्वादीन्यस्य

4. I °शो ना°. 5. A न तस्य तत्रै°. 6. A °भवि वि°. 7. AE निरुपाधिभावार्थे. 8. P °रूपं. 9. I शक्तिरि°

61. 1. A सर्वेषा° 2. AE विवक्षिते. 3. A वर्तमानानां य°. 4. A लिङ्गं संख्या वा. 5. I °स्य जहत्°.

62. 1. A चास्या. 2. AD °द्धत्वात् तत्सम°. 3. A सा सत्ता कै°. 4. IP °भिः शब्दैः सा°.

विशिष्यन्ते । एवमपि च विशेषे [5]सर्वव्यक्त्यनुयायि व्यापकं रूपमखण्डितमिति तदाश्रयेण सर्वत्र स्वकार्यं सम्पादयति । न तु [6]नियतव्यक्तिगतेन लिङ्गसंख्यादिना धर्मेण नियम्यते । महाविषयत्वात् सामान्यस्य विशेषस्वीकारसामर्थ्यात् । [7]विशेषस्य तु सामान्यमात्मसात्कर्तुमसामर्थ्यात् स्वलिङ्गेन [8]नियमे लिङ्गान्तरे विधिं प्रापयितुमशक्तिः । तथा च भाष्यम् ।

" यच्च पचतेर्भवतिर्भवति न तद्भवतेः पचतिर्भवति । किं च पचतेर्भवतिर्भवति । सामान्यम् । किं च भवतेः पचतिर्भवति । विशेषः "

( M. Bhā. II. p. 144. l. 23. )

सामान्यविशेषभावेनान्योन्यस्वीकारा[9]सामर्थ्यमुक्तम् ( न्यस्वीकारसामर्थ्यमसामर्थ्यं चोक्तम् ? ) । भवतिर्हि सामान्यं पचिं स्वीकरोति, न तु पचिर्विशेषो भवतिमित्यर्थः ॥६२॥

संबन्धिभेदेनैक एवार्थोऽनेकरूपत्वेन प्रतिभासते इत्यत्र भाष्ये निदर्शनमुपन्यस्तं व्याचष्टे ।

**आचार्यो मातुलश्चेति यथैको व्यपदिश्यते ।**
**संबन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः ॥ ६३ ॥**

उक्तमिदं भाष्ये —

" उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं [1]गत्वाह उपाध्यायं भवानभिवादयतामिति । स गत्वा मातुलमभिवादयते । तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यं [2]गत्वाह मातुलं भवानभिवादयतामिति । स गत्वोपाध्यायमभिवादयते । "

( M. Bhā II. p. 144. l. 24 – p. 145, l, 1–3. )

इति । अत्र च यथा एकोऽर्थः कश्चित् प्रत्युपाध्यायः कश्चित् प्रति मातुलोऽभिधीयते तथा स प्रकारः **पक्तिभावयोः** बोद्धव्यः । स्वगतविशेषापेक्षया सामान्यस्वभावोऽपि पचिर्भावं[3] प्रति विशेषः[4] । भावः पुनः पक्तिं प्रति सामान्यमेव । ततश्च यथोपाध्यायशब्देन मातुलरूपतयानभिधीयमानोऽपि मातुलो वस्तुवृत्तेन [5]तत्त्वात् स्वकार्यं प्रतिपद्यते तथा भावशब्देन सामान्यवाचिना साक्षादनभिधीयमानोऽपि विशेषः सामर्थ्यादनुमीयमानसन्निधिरिति सामान्यप्रयुक्तं कार्यं प्रतिपद्यते । तथा हि नोपाध्यायरूपादन्यत्र(त्?) मातुलत्वं तथा न भावादन्यत् पचिरूपम् । सामान्यविशेषयोरत्यन्तभेदाभावात् सकलविशेषपरिहारेण सामान्यरूपानुपपत्तेरिति सर्वत्र सिद्धिः ॥ ६३ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे क्रियासमुद्देशोऽष्टमः ॥

---

5. A °क्त्रनुपापिना पापरूपमख°. 6. I °गते लि°. 7. A om विशेषस्य–सामर्थ्यात्.
8. A भिन्ने. 9. A °रसा°.

63. 1. EIMP om गत्वा. 2 EIMP o n गत्वा. 3. A पचिभावं, P पचतिर्भावं.
4. EP विशेषभावमापन्नः पुनः. 5. A सत्त्वात्.

---

# अथ कालसमुद्देशः ।

क्रियानन्तरं काल उद्दिष्टः । स हि क्रियायाः परिच्छेदकः । तत्र दर्शनान्तरलक्षितं तावत्तत्स्वरूपमाह ।

**व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।**
**नित्यमेकं विभु द्रव्यं [1]परिमाणं क्रियावताम् ॥ १ ॥**

परापरादिप्रत्ययलिङ्गो व्यापक [2]एकोऽ[3]मूर्तोऽत एवाकृतकत्वान्नित्यः कालः क्रियाव्यतिरिक्तो जन्मादिक्रियाद्वारेण भावपरिच्छेदको वैशेषिकैराम्नातः । स [4]विस्तरतस्तत एवावगन्तव्यः ॥ १ ॥

कालस्य परिच्छेदकान्तरेभ्यः परिच्छेद्यभेदेन[1] भेदमाह ।

**दिष्टिप्रस्थसुवर्णादि मूर्तिभेदाय कल्पते ।**
**क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ॥ २ ॥**

[2]मूर्तिरसर्वगतद्रव्यपरिमाणम् । स परिच्छिद्यते [3]दिष्ट्याद्यायाममानेन । तथा च मूर्तिमद्वस्तुगतमेतद् [4]दिष्टिर्वितस्तिरित्यादि । [5]एकदिग्विभागावच्छेदेन चानेन वस्तुपरिच्छेदः । एतच्च प्रमाणम्[6] । प्रस्थादिना तु सर्वतोऽवच्छेदेनारोहपरिणाहाभ्यां व्रीह्यादेः परिच्छेदः । प्रस्थः द्रोणः आढकमित्येतत् परिमाणम् । परिः सर्वतोभावे । सुवर्णादि तून्मानं गुरुत्वविशेषेण द्रव्यं परिच्छिनत्ति । सुवर्णं [7]निष्कं पलमित्यादि । एभ्यो व्यतिरिक्तः कालोऽ[8]मूर्तक्रियापरिच्छेदहेतुः । सूर्यादिसञ्चारो हि [9]कालेन मीयते मासः संवत्सर इत्यादि । संख्या तु मूर्तामूर्तस्य सर्वस्य परिच्छेदमादधाति प्रमाणादेश्च । द्वौ घटौ । बहव आत्मानः । द्वे क्रिये । एका वितस्तिः । द्वौ हस्तौ । चत्वारः प्रस्थाः । पञ्च पलानि । संख्यापि च संख्यया मीयते । द्वे विंशती । पञ्च पञ्चाशत इति ॥ २ ॥

कालेन कथं क्रियाः परिच्छिद्यन्ते इत्याह ।

**उत्पत्तौ च स्थितौ चैव विनाशे चापि तद्वताम् ।**
**निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम् ॥ ३ ॥**

---

1. 1. M. परिणामं IE परावरा° 2. A om एको. 3. AEI मूर्तो. H मूर्ति तत्वाकृ°.
4. A सविस्तरस्तु. M°रत एवा°.

2. 1. A परिच्छेदे भेदेवदेदाह. 2. A मूर्तारसद्रव्यगतद्रव्य°. 3. A दिष्ट्या आयामत्वेन.
4. A om. वितस्ति. 5. A प्रकरदिग्विभाग°. 6. $E^2$ om. प्रमाणम् ।. 7. A °र्णं कृष्णलमि°.
8. AEI मूर्तिक्रिया° 9. A विनानुमी.°

जन्मस्थितिविनाशाः[1] [2]समस्तक्रियाकलापान्तर्भाव[3]नहेतव इति तद्द्वारेण [4]जन्मादिमतां पदार्थानां निमित्तकारणं कालमाहुः । तदपेक्षो हि पदार्थानामुदयादिरवतिष्ठते प्रविभक्तशरीरः । तथा हि । [5]केचिद् वसन्ते प्रसूयन्ते, अपरे शरदि, प्रावृष्यन्य इत्यादि वाच्यम् । एवं स्थितिविनाशयोरपि[6] । [7]उपाधिभेदाच्च भिद्यमानः कालः संसर्गिषु भेदायालम् ॥ ३ ॥

यतश्चोत्पत्त्यादौ भावानां कालो निमित्तमतः ।

**तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।**
**प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ॥ ४ ॥**

[1]यन्त्रपुरुषप्रख्यं विश्वं सूत्रधारपुरुषकल्पकालप्रतिबद्धचेष्टम् । कालेन हि स्वशक्त्या भावानां [2]स्थगनोन्मज्जने जन्मनाशपर्याये विभजता सूत्रधारेणेव यन्त्रपुरुषस्य सूत्रसञ्चारवशेनोन्मेषनिमेषादिक्रियाकारिणा विश्वं प्राप्तपौर्वापर्यप्रविभागं प्रविभागलक्षणाश्चेष्टाः कार्यन्ते ॥ ४ ॥

तथाहि ।

**यदि न प्रतिबध्नीयात् प्रतिन्बधं[1] च नोत्सृजेत् ।**
**अवस्था व्यतिकीर्येरन् पौर्वापर्यविनाकृताः ॥ ५ ॥**

कालकृतप्रतिबन्धाभावाद् युगपद्भावानामुत्पत्तिः स्यादिति बीजाङ्कुरनालकाण्डादीनामानुपूर्वीनियमाभावात् सङ्करः स्यादिति कारणादुदयतामपि भावानां कालपरिवासदर्शनादवश्यमपेक्षणीयः कालो निमित्तकारणमेष्टव्यः ॥ ५ ॥

इदानीमेकत्वे विभाविते कालस्य नानात्वमुपाधिभेदनिहितमाह ।

**तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः ।**
**न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥ ६ ॥**

धर्मान्तराणि वक्ष्यमाणानि संस[1]र्गीणि क्रियारूपाणि । तद्गतैर्भेदैरेकोऽपि कालो नानात्वेन व्यवह्रियते । तथा च नानाविधकार्यजनकः[2] । सर्वत्रैव च[3] पदार्थानां परोपाधिक एव भेदः । स्वतो भेदाभेदा[4]भ्यामनिर्वाच्यत्वात् । तथा चोक्तम् ।

3. 1. A °शीसमकि. 2. E². क्रियाः, कालान्तर्भी. 3. A °र्भागत इति. 4. A जन्मनादितां (पदर्थामा). 5. A From केचित् till the end of the commentary on this Kārikā, the text is very corrupt. 6. E² °योः शब्दस्य. 7. E² वाभेदाच्च.
4. 1. AI यत्र पु°. 2. A Readings not given, being obvious mistakes.
5. 1. A प्रतिबद्धं. 2. A °पर्यविनाकृता.
6. 1. E². संवर्गिणः. 2. E² कार्यजगतः 3. AE² चनपदा°. 4. A °दास्वानिर्वा°



[5]भिन्ना इति परोपाधिरभिन्ना इति वा पुनः ।
भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते ॥ (Vāk. III. जा. 20)
इति ॥ ६ ॥

न हि भिन्नमभिन्नं वेत्युदाहरणेन व्यक्तयति ।

**नैको नाप्यनेकोऽस्ति न शुक्लो नापि चासितः ।**
**द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते ॥ ७ ॥**

[1]निरूपाधिर्द्रव्यस्वभावो व्यवहारं नापततीत्येकत्वादिसंख्यासमवायादेकादिव्यवहारः । शुक्लकृष्णरूपसमवायाच्च शुक्लकृष्णरूपतया द्रव्यमभिधीयते । एवं गोत्वादिसमवायाद् गौरित्यादिव्यवहारा बोद्धव्याः । तथा [2]कालेऽप्युत्पत्त्यादिक्रियासंबन्धवशादुत्पत्तिकालः स्थितिकालो विनाशकाल इत्यादिव्यवहार इत्यर्थः ॥ ७ ॥

अतश्च ।

**संसर्गिणां तु ये [1]भेदा विशेषास्तस्य ते मताः ।**
**स भिन्नस्तै[2]र्व्यवस्थानां कालो भेदाय कल्पते ॥ ८ ॥**

**संसर्गिणः** कालस्य संबन्धिनः सूर्यादिग्रहप्रचाररूपाः क्रियाविशेषाः । तेषां भेदेनोपहितात्मातिशयोऽसावहोरात्रपक्षमासर्त्वयनसंवत्सरयुगमन्वन्तरादिव्यवस्थाभेदमासादयति । तथाहि । दिवसकरोदयास्तमयावधिपरिच्छिन्नः कालोऽहरिति व्यपदेश्यः । तदुदयविच्छेदोपहितभेदस्तु निशा । आवर्तमानश्चाहोरात्राभ्यां पक्षादिव्यपदेशं यथायोगमासादयति । अक्षिपक्ष्मगतनिमेषोन्मेषादिक्रियोपहितभेदस्तु क्षणलवकाष्ठादिव्यवहारं वर्तयति ॥ ८ ॥

तदेवमुपाधिभेदाहितविशेषोऽसङ्करेण निमित्तभावमुपजनादिक्रियाव्यवच्छेदेन भावेषु कालः प्रतिपद्यते । तथाहि ।

**विशिष्टकालसंब[1]न्धाद् वृत्तिलाभः प्रकल्पते ।**
**शक्तीनां [2]संप्रयोगस्य हेतुत्वे[3]नावतिष्ठते ॥ ९ ॥**

वसन्तादिकाले सा[4]धनशक्तीनां प्रवृत्तिदर्शनात् तासां प्रयोजको हेतुर्निमित्तकारणं काल उन्नीयते । [5]कालप्रेरिता हि शक्तयो जन्मादिक्रिया भावानां साधयन्ति ॥९॥

तथा च

5. A gives this verse in a very corrupt form.
7. 1. A om. निरुपाधि–तथा काले. 2 E² काले ब्युत्प°, A तेव्युसूर्यादि°.
8. 1. A यो भेदो, यो भेदा. 2. A °स्तैरवस्थानां.
9. 1. E² संबन्धो. 2. M स प्र°. 3. E² हेतुत्वं ना°. 4. A सकलश°. 5. A येन काल,

**जन्माभिव्यक्तिनियमाः प्रयोगोपनिबन्धनाः ।**
**नित्याधीनस्थिति[1]त्वाच्च स्थितिर्नियमपूर्विका ॥ १० ॥**

कालेन प्रयुक्ताः कारणशक्तयोऽभ्यनुज्ञाताः सत्यो जनयन्ति कार्यमभिव्यञ्जयन्ति च । [2]सत्कार्यदर्शने नियमो जातस्याभिव्यक्तस्य च नियतकालमवस्थानम् । अत एव **स्थितिर्नियमपूर्विका** इत्याह । सापि [3]च शाश्वतरूपकालायत्ता । विनाशोऽपि विनाशकानां कालकृतशक्तिप्रयोगाणां सामर्थ्याद् भावानां कालायत्त इति । 'उत्पत्तौ च स्थितौ च' इत्यादि पूर्वोक्तमेवानेन प्रपञ्चितम् ॥ १० ॥

अन्यदपि कालकृतमाह ।

**स्थितस्यानुग्रहैस्तैस्तैर्वमैः संसर्गिभिस्ततः ।**
**प्रतिबन्धस्तिरोभावः प्रहाणमिति चात्मनः ॥ ११ ॥**

ततः कालादवस्थितस्यापि वस्तुनो वर्धकैर्विनाशकैश्चापरैः संबन्धिभिर्भावैः क्रमेणानुग्रहो वृद्धिक्षयलक्षणः[1], भावात्मनश्च **प्रतिबन्धः** स्वकार्यासामर्थ्यं **तिरोभावो**ऽदर्शनं **प्रहाणं** विनश्यत्तेत्यादयः सर्व एव विकाराः कालाधीना नियतसमयत्वात् ॥ ११ ॥

एवं च कृत्वा ये क्रमवन्तः क्रियाविशेषाः भावानां ते कालाधीनत्वात्[1] पृथक्प्रत्ययभासमानाः काल एवेति व्यवह्रियन्त इत्याह ।

**प्रत्यवस्थं तु कालस्य व्यापारोऽ[2]त्र व्यवस्थितः ।**
**काल एव हि विश्वात्मा व्यापार इति कथ्यते ॥ १२ ॥**

अनुग्राहकत्वादिभेदेन नियतस्थितिप्रसवनिरोधावस्थासु कालस्य [3]व्यवहारोऽविनाभावीति विश्वस्यैतदायत्तत्वादात्मा सूत्रस्थानीयश्चेष्टाहेतुत्वाद् **व्यापार** एवाभेदेनासौ व्यवह्रियते ॥ १२ ॥

विश्वात्मत्वमेवास्य प्रतिपादयितुमाह ।

**मूर्तीनां तेन भिन्नानामाचयापचयाः पृथक् ।**
**लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना ॥ १३ ॥**

प्राण्यप्राणिरूपाणां भावानां तेन कालेन परिणा[1]मकरणादानुपूर्व्यां[2] वृद्धिह्रासा विवेकेन लभ्यन्ते यौवनस्थाविरावस्थासु । **भेदयोगिना** इति । संसर्गिक्रियाविशेषोपहितनानात्वेनेत्यर्थः । मूर्तिग्रहणेन[3] नित्येषु [4]कालकृतोपकाराभावमाह । प्रतिबन्धाभ्यनुज्ञाभ्यां हि जन्मविनाशवन्तो भावाः काले समायतन्ते ॥ १३ ॥

---

**10.** E² °स्थितत्वा. 2. A तत्कार्य°. 3. P om. च.
**11.** AEP वृद्धिलक्षण.
**12.** 1. M. लोकाधीन°. 2. om. अत्र. 3. IMP व्यापारो.
**13.** 1. M °णादानु°. 2. AE² °र्व्यादि वृ°. 3. M °णे नि° 4. A. °षुकृत.



अन्वर्थेन नाम्नैव कालो विश्ववैचित्र्यहेतुरित्याह ।

**जलयन्त्रभ्रमावेशसदृशीभिः[1] प्रवृत्तिभिः ।**
**स कलाः [2]कलयन् सर्वाः कालाख्यां लभते विभुः ॥ १४ ॥**

जलस्योद्ध[3]रणार्थं यन्त्रमरघट्टप्रायं तस्य भ्रमः परिवर्तनं तेनावेशस्तस्यैव क्षोभः तत्तुल्याः परावर्तमानस्य कालस्य पुनः पुनर्वसन्तादिभावेनावृत्तयः ताभिरयं **विभुः** [4]व्यापको नित्योऽपि विकलयति[5] विक्षिपति **कलाः** भावपर्यायाः समुत्सृजति स्वकारणेभ्यः प्रवर्तयतीति **कालाख्याम्** अन्वर्थां लभते । अनेनैतत् सूचयति । विश्वात्मैक एव परब्रह्माभिधानः सत्यो भावः । स एव नानाविधकार्यकारितयानन्तशक्तित्वेन व्यवह्रियते । तथा च क्रमिकांश्चक्रभ्रमवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते । स **विभुः** स्वतन्त्रः । अत एव स्वातन्त्र्यशक्तिः काल इति वाक्यपदीये सिद्धान्तितम् ।

अध्याहितकलां यस्य कालशक्तिमुपाश्रिता[6] । ( Vāk I. 3. )

इत्यत्र । इहापि च सिद्धान्तयिष्यति ।

' शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम् ' ( Vāk. III. का. 62. )

इति । यथाहि भ्रामको वाहुना जलयन्त्रं [7]परिवर्तयति तथा कालशक्त्या विभुर्भावानिति ॥ १४ ॥

[1]प्रतिबन्धलक्षणापि कालप्रवृत्तिरभ्यनुज्ञयैवाक्षिप्तेति, सर्वथा कालपारतन्त्र्यं निदर्शनोपन्यासेनाह ।

**प्रतिबद्धाश्च यास्तेन चित्रा विश्वस्य वृत्तयः ।**
**ताः स एवानुजानाति यथा तन्तुः शकुन्तिकाः[2] ॥ १५ ॥**

हेमन्तादिकालभेदापन्नेन साधनशक्तयः[3] कालेन प्रतिबद्धास्ता एव वसन्तादिभावमनुप्राप्ताः[4] स एवोत्सृज[5]तीति [6]कालयतीत्युच्यते । तद् यथा । बृहत्पक्षिग्रहणोपायभूतान् सूक्ष्मपक्षिणः तन्तुः बन्धनसूत्रमेव प्रसारितं प्रवर्तयत्युत्सृजति, पुनस्तदेव सङ्कोचितं प्रतिबध्नाति । धीवरा हि पक्ष्यन्तराणां ग्रहणाय[7] सूत्रप्रतिबद्धान् पक्षिणश्चेष्टयन्ति[8] । तथा च ते सूत्रप्रतिबद्धा[9]स्तत्संकोचविकासाभ्यां प्रतिबन्धोत्सर्गावनुभवन्ति, न तूच्छृङ्खला

---

**14.** 1. M °शीतः प्र°. 2. IP काल्यन्. 3. M °स्योर्द्धवं य°. 4. M °भुर्यापते दिव्यो नि°. 5. IP काल्यति भिपति, M कलपतिक्षिपयति. 6. E² °श्रिता, M श्रित, M श्रिताम्. 7. M प्रवर्तयति.
**15.** 1. E² प्रतीपल, M प्रतिबद्धल°. 2. A °न्तिनः. 3. E² om. साधनशक्त्रयः. M °शक्तिः. 4. AE² °प्रासाः. 5. E² om. त्सृजति. 6. M विकासयति. 7. M om. सूत्रप्रतिबद्धान्–एवं काल°. 8. A °यन्ते. 9. A °न्धादस्वतन्त्रा भवन्ति न तू°.

इवोड्डीय गन्तुं प्रभवन्ति, तयेच्छायां तन्तुनाकर्षणात् । एवं कालसूत्रप्रतिबद्धाः पदार्थाः संकोचविकासलक्षणावुत्पत्तिध्वंसावनवरतमनुभवन्तीत्यर्थः । अतश्च कालप्रसेवकान्तर्गतं विश्वं प्राप्तकाले प्रसूयते प्रसूतमवतिष्ठते, अवस्थितं कृतकरणीयं विनश्यति ।। १५ ।।

कथमित्यत्रैव क्रममाह ।

**विशिष्टकालसंबन्धाल्लब्धपाकासु शक्तिषु ।**
**क्रियाभिव्यज्यते नित्या प्रयोगाख्येन कर्मणा ।। १६ ।।**

इह प्राणिनामुपभोगाय विश्वरचनाप्रपञ्च इति प्रलयपर्यवसानसमयेऽदृष्टवशात् **परमाणुषु** यथास्वं कार्यजनिकाः शक्तयोऽभिमुखीभवन्ति[1] । दर्शनान्तरे [2]प्रधाने वा मूलकारणे[3] कार्योन्मुखशक्तिषु च नित्येषु मूलकारणेषु परस्परसंश्लेषाय प्रयोगः प्रेरणाख्यः कर्मविशेषो जायते, येन सामान्यभूता प्रवृत्तिरिति पूर्वव्याख्यातसतत्वा सर्वभावगता नित्या क्रिया प्रकटीक्रियते । तथा च सव्यापाराणि कारणानि परस्परं संयुज्यन्ते ।। १६ ।।

ततश्च ।

**जातिप्रयुक्ता तस्यां तु फलव्यक्तिः प्रतीयते ।**
**कुतोऽप्यद्भुतया वृत्त्या शक्तिभिः सा नियम्यते ।। १७ ।।**

तस्यां नित्यायां क्रियायामभिव्यक्तायां सत्यां

[1]कारणेषु फलव्यक्तिः कार्यव्यक्तिः प्रजायते ।
स्वाश्रयस्वामिनिष्पत्त्यै सा क्रियायाः प्रयोजिका ।। ( Vāk. III. जा. 25–26.)

इति [2]जातेः प्रयोजकत्वमुक्तम् । नियतजातीयाभिसंधानेन [4]कारणानां व्यापारोपपत्तेः जातिः प्रयोजककर्त्री । सदसत्पक्षभेदेन दर्शनद्वयस्य पूर्वं प्रत्याख्यानादाह **कुतोऽप्यद्भुतया वृत्त्या** इति ।

अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमम् ।
भावानां प्रागभूतानामात्मतत्वं प्रकाशते ।। ( Vāk. III. सं. 81 )

इत्यत्र निर्णीतमेतत् । सा च जाता कार्यव्यक्तिः कारण**शक्तिभिर्नियम्यते** येन तत्रैव तिष्ठति । तत्संबन्धितया च व्यवह्रियते । सदसत्पक्षयोरपि च कारणानां व्यापारस्य पराकरणात् स्वात्मनि कार्यस्य प्रतिष्ठापनं नियमोऽप्यद्भुताश्चर्यभूता वृत्तिः ।। १७ ।।

---

16. 1. M °मुखीभवन्ति. 2. M न्तरप्रधाने. 3. E² °कारणेषु कार्येषु च शक्तिषु च नित्येषु पुना पर°.

17. 1. AE² प्रजायते. 2. This is supposed to be a quotation from the Jātisamuddeśa but it seems to be a mixture of stanzas 25 and 26 of that Samuddeśa. 3. M वायात प्र°. 4. AE²P कारकाणां.



अनन्तरं किं भवतीत्याह ।

**ततस्तु समवायाख्या शक्तिर्भेदस्य बाधिका[1] ।**
**एकत्वमिव ता व्यक्तीरापादयति कारणैः ।। १८ ।।**

इह तन्तुषु पट इत्यादीहप्रत्ययहेतुः समवायः पारतन्त्र्यसाम्यात् पूर्वं शक्तित्वेन व्यवस्थापितः । स नियमानन्तरं कार्यकारणयोर्भेदं तिरोधापयति । यत **एकत्वमिव** अत्र भासते । तथा च केचित् कारणव्यतिरिक्तं कार्यं नेच्छन्ति । भेदप्रत्ययविषयेभ्योऽभेदप्रत्ययविषयस्यावयविनोऽवयवेभ्यो वस्तुतो भेदान्नै[2]कत्वमिति **इव** शब्दः ।। १८ ।।

एवं प्रतिष्ठितायां कार्यव्यक्तौ—

**अथास्मान्नियमादूर्ध्वं जातयो याः प्रयोजिकाः ।**
**ताः सर्वा व्यक्तिमायान्ति स्वच्छे छाया इवाम्भसि ।। १९ ।।**

**अथ** इति समुच्चये । ऊर्ध्वशब्देनानन्तर्यस्योक्तत्वात् । कारणशक्तिभिर्यदा व्यक्तिःस्वात्मनि नियमिता तदनन्तरं निष्ठासंबन्धयोरेककालत्वात् कार्यव्यक्तिर्जातैव स्वजात्या संबध्यते प्रयोजिकया । निष्ठोत्तरकालं तु क्षणान्तरे रूपादिगुणोपजननाद्[1] इन्द्रियार्थसन्निकर्षात् संयुक्तसमवायेन रूपिद्रव्यसमवायाज्जातयः प्रकाशन्ते । तद् यथा निर्मले जले वृक्षादीनां छायाप्रतिबिम्बं [2]जलाभेदेन, एवं [3]व्यक्तेरैकात्म्यमिव प्राप्ता जातयोऽपि गृह्यन्त इति दृष्टान्तसाम्यम् । **सर्वाः** इति सत्ताद्रव्यत्वपृथिवीत्वादयः ।। १९ ।।

अतोऽनन्तरं गुणानामुत्पत्तिमाह ।

**कारणानुविधायित्वादथ कारणपूर्वकाः ।**
**गुणास्तत्रोपलभ्यन्ते स्वजातिव्यक्तिहेतवः ।। २० ।।**

कारणानुविधायित्वेन पूर्वं कारणोत्पत्तेः पश्चात् कार्योत्पत्तिमाह । तेनैकस्मिन् क्षणे निर्गुणैव कार्यव्यक्तिः[1] ततोऽवयवगुणेभ्योऽसमवायिकारणेभ्यः स्वावयविसमवायकारणसहितेभ्योऽवयविनि रूपाद्युत्पत्तिः । उत्पन्नाश्च रूपादयः स्वजाती रूपत्वादिकाः समभिव्यञ्जयन्ति । अदृष्टवशात् परमाणुषु क्रियोत्पन्ना पूर्वदेशसंयोगविभागविनाशपूर्वकं परस्परोपश्लेषेण द्व्यणुकादिप्रक्रमेण भोगसाधनान् पदार्थान् उत्पादयतीति पिण्डितार्थः । अत्र सर्वत्र क्रमाख्या कालशक्तिः सव्यापारेत्यभ्युनुज्ञेयम् ।। २० ।।

---

18. A शक्तिभेदस्य साधिका, E साधिका. 2. A भेदाभेदवत्वं, E² भेदाभेतकत्वं M भेदासत्वमेवेति.

19. 1. A °णोपजननात्. 2. P छाया प्रतिबिंबः 3. P व्यक्तिभिः

20. 1. M here inserts हेतवः कारणा.

कालकृता जन्मपर्याया भावानां व्याख्याता:। इदानीं स्थितिं व्याचष्टे।

**आश्रयाणां[1] च नित्यत्वमाश्रितानां च नित्यता।**
**ता व्यक्तीरनुगृह्णाति स्थितिस्तेन प्रकल्पते[2] ॥ २१ ॥**

यासां तावत् कार्यव्यक्तीनां नित्या आश्रया: कारणानि तासां कारणविनाशपूर्वकस्य विनाशस्याभावादवस्थितत्वम्। अतश्च परमाण्वादीनां कारणानां **नित्यत्वं** कर्तृ **ता:** कार्यव्यक्तीरुपकरोति स्थापक[3]त्वेनावस्थापनात्। अन्यथाधारविनाशान्नावतिष्ठेरन्। अनित्याश्रयाणामपि कार्यव्यक्तीनामाश्रितानां जातीनां नित्यत्वादविनाशकारणमवस्थानं स्वजातिभिरेवानुगृह्यते, तावन्तं कालं नियतजातीयतयावस्थानसम्भवात्। अन्यथाधेयानां [4]सामान्यानामपाये द्रव्याण्यव्यवहार्यत्वादस्थितक[5]ल्पानि स्यु: ॥ २१ ॥

[1]इत्थं चोत्पत्तिरिव स्थितिरपि पराधीनेत्याह।

**अनित्यस्य यथोत्पादे पारतन्त्र्यं तथा स्थितौ।**
**विनाशायैव तत् [2]सृष्टमस्वाधीनस्थितिं विदु: ॥ २२ ॥**

कारणं विनोत्पत्त्यभावात् यथासौ तत्परतन्त्रा तथा कारणावष्टम्भमन्तरेण स्वत:स्थित्यभावात् कृतकमुत्पत्त्यनन्तरमेव प्रध्वंसमियादिति **विनाशायैव तत् सृष्टं** स्यात्, नार्थक्रियार्थमित्यर्थ:। तन्मा भूदस्यापार्थकं जन्मेति कारणायत्तस्थितिकं तन्मन्यन्ते वैशेषिका: ॥ २२ ॥

ननु क्रमयौगपद्याभ्यां स्थि[1]रार्थक्रियानुपपत्तेरन्ते[2] विनाशदर्शनात् तत्रापेक्षाभावात् कृतक: सन्नित्येव विनश्यतीति स्थित्यभाव इत्याशङ्क्याह।

**स्थित:[3] संसर्गिभिर्भावै: स[4] क्रियास्वनुगृह्यते।**
**नैषां सत्तामनुद्गृह्य[5] वृत्तिर्जन्मवतां स्मृता ॥ २३ ॥**

**संसर्गिभि:** सहकारिभि: अनुगृहीतो भावोऽर्थक्रियासु योग्य:। न ह्येकं किञ्चन जनकं सामग्रीत: क्रियासिद्धिरित्येषां संसर्गिणां सहकारिणां सत्त्वमस्वीकृत्य कार्ये[6] **वृत्ति:** व्यापारो नास्ति जातानां भावानाम्। तदेवं क्रमभाव्यनेककार्यकर्तृत्वं तत्तत्सहकारिप्राप्तौ स्थितिलक्षणमुपपद्यते। तथा च स्थितिपर्यन्ताभ्यनुज्ञोपपत्ति:। यत्तु

21. 1. A$E^2$ °णां स्वनि°. 2. M प्रकल्प्यते. 3. $E^2$ समवेतत्वेन. 4. A नामाश्रयद्रव्यावेमवि, $E^2$ सामान्यण्यपहाय. M सामान्यावयवानामपाये. 5. A अवस्थितिर्न स्यात्.

22. 1. A इदानींकार्याणामुत्पत्तिरिवनित्यानामवस्थितिरपि°. 2. M om. सृष्टं–विदु: A °ष्टमर्याभावादिदंस्थितम्.

23. A °भ्यां अर्थ°. 2. A °त्तेरेतेषां. 3. $E^7$M स्थिति: 4. $E^2$ स्वक्रि° M सन् क्रि°. 5. A$E^2$ °ग्राह्य. 6. A कारणवृत्तिव्या°.



सहकारिण: किं कुर्वन्तीति चोद्यते तत्र सहकरणमेव सहकारार्थोऽतिशयादेरन्यत्र विचारितत्वाद् यथाप्रतीति स्थिर[7]त्वं समर्थितं तद्वादिभि: ॥ २३ ॥

इदानीं प्रतिबन्धलक्षणां कालवृत्तिं व्याचष्टे।

**जराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी।**
**सा शक्ति[1] प्रतिबध्नाति जायन्ते च विरोधिन: ॥ २४ ॥**

जीर्यते भावोऽनयेति जरा नाम कालस्य शक्ति: प्राण्यप्राणिसाधा[2]रण यौवनादिशक्त्यन्तरप्रतिबन्धिनी[3] कार्यव्यक्तीनां कालान्तरपरिवा[4]सावधृतार्थक्रियासु सामर्थ्यं विघ्नयति[5]। ततश्च सामर्थ्यविरोधिनोऽवस्थाविशेषा: प्राण्यप्राणिषु प्रज्ञामान्द्यशोषादय:[6] प्रादुर्भवन्ति। यत: प्रध्वंस: प्रत्यासन्न इति लक्ष्यते ॥ २४ ॥

एवं जरसाधिष्ठिते भावे

**प्रयोजकास्तु ये भावा: स्थितिभा[1]गस्य हेतव:।**
**तिरोभवन्ति ते सर्वे यत आत्मा प्रहीयते[2] ॥ २५ ॥**

यै: ( ये ? ) प्रवर्तिता: स्वकार्ये भावा: संसर्गिभि: सहकारिभि: स्थित्यंशहेतव: ते सर्वेऽस्य जराधिष्ठितस्य [3]कृतघ्ना इव सहोषिता अपि निवर्तन्ते। तेषु निवृत्तेषु कृतकरणीयस्यास्य भावस्य स्वरूपं प्रच्यवते ॥ २५ ॥

न तु विनाशकारणैरस्य किञ्चित् क्रियत इत्याह।

**यथैवाद्भुतया वृत्त्या नि[1]ष्क्रमं निर्निबन्धनम्।**
**अपदं जायते सर्वं तथास्यात्मा प्रहीयते ॥ २६ ॥**

जन्मनि सदसत्पक्षभेदेन पूर्वं कारणव्यापारस्य व्युदासादविभाविततत्त्वमविद्यमानकारणभू[2]तनिबन्धनमत एव कारणव्यापाराभावात् [3]पौर्वापर्येणांशांशिकयानिष्पत्तेरक्रमं विश्वमा[4]जायमानमुपलक्ष्यत इति पूर्वमेव विवर्तचिन्तायां निर्णीतमेतत्। एवं विनाशेऽपि। क्रियमाणतायां भावतापत्तेर्निर्निबन्धनमेव प्रहाणं कालपरिवासाधीनं[5] भावानामित्यर्थ:। तदेवं सर्गस्थितिप्रलयानां कालकृतप्रतिबन्धाभ्यनुज्ञावशेन सम्भव इति विश्वात्मन: कालस्य व्यापारोऽत्र सर्वत्रेति निर्णीतम्। तदुक्तम्

7. $E^2$ स्थितिरायं.

24. 1. A शक्ती:, $E^2$M शक्ति:. 2. A° णैवानादि:, $E^2$ °णैवायावर्णादिशक्त° 3 A °प्रतिद्वन्द्विनी. 4. A °परिपाकाद° 5. $E^2$ विघटयति. 6. A om प्रादुर्भवन्ति.

25. 1. M °तिभामस्य. 2. $E^2$ प्रतीयते. 3. A °तस्यैककल्पना इव.

26. 1. P निक्रमं. 2. °णकृतनि° 3. M om. पौर्वा–निर्णीतमेतत्. here but gives it later. 4. A $E^2$ °खमजाय°. 5. M °सादीनां.

प्रत्यवस्यं तु कालस्य व्यापारोऽत्र व्यवस्थितः ( Verse. 12. )

इति ॥ २६ ॥

इदानीमपरमपि कालानुमानहेतुमाह ।

**क्रिययोरपवर्गिण्योर्नानार्थसमवेतयोः ।**
**संबन्धिना विनैकेन परिच्छेदः कथं भवेत् ॥ २७ ॥**

इह क्रिया तावदनेकक्षणसमाहारात्मिका[1] युगपत् क्षणानामभावात् सक्रमेति कालशक्त्यनुगृहीतैव[2]। सर्वः क्रमो हि कालधर्मः। द्वयोश्च क्रिययोरुदयानन्तरध्वंसित्वे[3] समानेऽपि चिरेण कृतं क्षिप्रं कृतमिति विलक्षणः परिच्छेदो विनैकं [4]संबन्धिनमुपाधिभूतं नावकल्पते। **नानार्थसमवेतयोः** [5]इत्यनेनाश्रयभेदात् क्रियाभेदमाह। ततश्च [6]नैकक्रियानिमित्तोऽयं व्यपदेशः, पटश्चिरेण कृतो घटश्चिरेण कृत[7] इति आश्रयभेदेऽप्यनुवृत्तेः। क्रियाया भिन्नाश्रयसमवेताया भेदे सति तदनुपपत्तेः। अत एव न कार्यद्रव्यनिमित्तोऽयं व्यपदेशः, कार्यद्रव्यस्य भेदादभिन्नव्यपदेशहेतुत्वानुपपत्तेः। न च कारकादि[8] निमित्तमत्र तस्यापि भेदस्यानुवृत्तेः। तस्माद् यदत्र निमित्तं स कालः। सोऽपि चेद् भिन्नो नासावनुवृत्तः प्रत्ययः [9]स्यादित्युक्तम् **एकेन** इति। एको हि साधारण्यात् कालोऽनुवृत्तं प्रत्ययं जनयति ॥२७॥

यद्येवं विलक्षणचिरक्षिप्रादिव्यप्रदेशः कुत इत्याशङ्कयाह।

**यथा तुलायां हस्ते वा नानाद्रव्यव्यवस्थितम्[1] ।**
**गुरुत्वं परिमीयेत कालादेवं क्रियागतिः ॥ २८ ॥**

सुवर्णरजतादिद्रव्यसमवेतं गुरुत्वमेक एव तुलादण्डो रेखासूत्रसंबन्धोपहितभेदो यथा[2] पलादिभावेन परिच्छिनत्ति तथा कालोऽपि स्वशक्तियोगाद् वैश्वरूप्यमनुभवन् निमेषादिक्रियाभेदोपहितनानात्वं क्रियासन्तानं चिराचिरादिभावेन परिमिमीते। अभ्यासातिशयवतां [3]वणिजां हस्तो द्रव्याणां गुरुत्वविशेषं परिच्छिनत्तीति सोऽपि दृष्टान्तः[4]। यथासौ हस्तः एवं निरुपाधिरेक एव स्वसामर्थ्यात् कालः क्रियागतं भेदं परिच्छिनत्ति ॥ २८ ॥

एवं चैकः स कालः

---

27. 1. A° समाश्रयात्मिका. 2. P °तैवा सर्व क्रमो°. 3. M °त्वेऽभिमानेऽपि. 4. M विनैकसंबन्धिना न कल्पते. 5. M om. इत्यनेन- भिन्नाश्रयसमवेतायाः, A इत्यनेनाश्रययोर्भेदमाह. 6. A नैव क्रियाप्रयुक्तो, E नैतत् क्रि° 7. A इत्याद्यनुवृत्तेः, E² इत्याद्यौवृत्तेः 8. A न च कारणद्रव्यप्रयुक्तोऽयं. 9. M om. स्यादित्युक्त–क्षिप्रादिव्यपदेशः।

28. 1. A नाना द्रव्यं व्य°, E² व्यवस्थिति. 2. E² यथोपलादि. 3. F om. वणिजां. 4. A om. सोऽपि दृष्टान्तः। यथासौ हस्तः E² सोऽपिदृष्टः.



**जहाति सहवृत्ताश्च क्रियाः स समवस्थिताः ।**
**व्रीहिर्यथोदकं तेन हायनाख्यां प्रपद्यते ॥ २९ ॥**

अवस्थिते एकस्मिन्नेव काले नानाविधाः क्रियास्तत्सहचारिण्योऽ[1]प्ययन्ते। अतः स कालो [2]हायनाख्यां संवत्सरपर्यायां प्रपद्यते। जहाति क्रिया इति हायनः। तद्यथा व्रीहिबीजं सहावस्थितमुदकमपजहद्धायन इति व्यपदिश्यते। अत एव

हश्च व्रीहिकालयोः ( P. 3. 1. 148. )

इति सूत्रकारेणोपमागर्भ ( र्भा ? ) सहैव व्युत्पत्तिरनुशिष्टा। यथा जलैर्व्रीहिः[4] सहावस्थितैरुपक्रियते तथा कालोऽपि क्रियाभिः सहकारिणीभिर्भावानुपकरोतीति औपाधिकोऽस्य भेदः। मुख्यस्त्वभेदः ॥ २९ ॥

यदि तर्ह्यवस्थित एकः कालः, कथमस्य क्रमरूपतेत्याह।

**प्रतिबन्धाभ्यनुज्ञाभ्यां वृत्तिर्या तस्य शाश्वती ।**
**तया विभज्यमानोऽसौ भजते क्रमरूपताम् ॥ ३० ॥**

कस्याश्चित् क्रियायाः साधन[2]शक्तीनां व्यापारविघाते प्रतिबन्धः। तद्विपर्ययोऽभ्यनुज्ञा। ताभ्यामुपलक्षिता कालस्य नित्या प्रवृत्तिर्भावेषु। सततपरिणामिषु हि भावेषु[3] किञ्चिदाजायते किञ्चिदपक्षीयते इति नियतमेतत्। तथा च कार्यनिवेशी क्रमः काले समारोप्यते, न[4]त्वसौ तत्र भाविक इत्यर्थः। क्रियाधर्मो हि मुख्यः क्रमस्तदन्यत्रोपचरितः। पौर्वापर्यं हि पूर्वापरेषु वस्तुषूपाधिभूतं लक्ष्यते न तु स्वतन्त्रम्। एवं यौगपद्यमपि क्रमविरोधी धर्मः कार्यगतः काले समारोप्यते ॥ ३० ॥

समविषमरूपतापि कालस्योपचरितेत्याह।

**कर्तृभेदात् तदर्थेषु प्रकर्षापचयौ गतः ।**
**समत्वं[1] विषमत्वं वा स एकः प्रतिपद्यते ॥ ३१ ॥**

इह यदानुष्ठातारः श्रुतिस्मृतिनिबन्धनमाचारमनुतिष्ठन्ति तदा प्रकर्षमासादयन् कालः स एवैकः कृतादिर्व्यपदिश्यते। शुभसमाचाराधिकारिबाहुल्यादि[2]भिन्न इत्यर्थः। तदर्थः कर्तृसाध्यः समाचारः। यदा तु कर्तारो विशृङ्खला यथावत्समाचारमुल्लंघयन्ति तदा समाचारापक[3]र्षादपचयप्राप्तेः कलिप्रभृतिर्विषमः कालोऽभिधीयते। तदयमेकोऽप्यनुष्ठातृभेदाद् विभागमासादयति कालः ॥ ३१ ॥

---

29. 1. A जायन्ते, E² व्ययन्ते, M व्यधयते. 2. M गायना°. 3. P बीजभूतं. 4. E °लैस्त्रिभिः स° M व्रीहिभिः स°.

30. 1. P व्यवस्थितः 2. M साधना व्या° 3. A om. भावेषु. 4. M तत्रासौ.

31. 1. A M समात्तारः स्वविषमं. 2. A °दिभिरित्यर्थः, E²P °दभिन्न इ°. 3. AE² तस्मादाचारादपकर्षा°, M °चारात् प्रकर्षापच.

अन्यदप्यध्यारोपितं कालस्य विभागमाह ।

**क्रियाभेदाद्यथैकस्मिंस्तक्षाद्याख्या प्रवर्तते ।**
**क्रियाभेदात् तथैकस्मिन्नृत्वाद्याख्योपजायते ॥ ३२ ॥**

तक्षणायोविकरणा[1]दिक्रियाविशेषो[2]पकल्पिता तक्षायस्कारादिसंज्ञा यथैकस्य कर्तुः प्रवर्तते तथा विशिष्टपुष्पादिप्रसवलक्षण[3]क्रियाभेदादेकस्यापि कालस्य वसन्तादिभेदेन[4] समाख्या जायते । आदिग्रहणात् सितासितपक्षव्यपदेशोऽहोरात्रव्यपदेशः प्रदोषप्रत्यूषव्यपदेशश्च यथायथं क्रियाभेदोपहितो गृह्यते ॥ ३२ ॥

अन्योऽपि कालभेदोऽध्यारोपितो भवतीत्याह ।

**आरम्भश्च क्रिया चैव निष्ठा चेत्यभिधीयते ।**
**धर्मान्तराणामध्यासभेदात् सदसदात्मनः ॥ ३३ ॥**

उत्पत्तेः पूर्वमसदात्मा पदार्थः । उत्पन्नस्तु सदात्मा । तस्य बुद्ध्यैकत्वेन वस्तुरूपतया स्वीकारे सति विलक्षणधर्मभेदवशादारम्भादिकालो भेदेन व्यवह्रियते । तथा हि बुद्ध्याभिस[1]न्धाय पदार्थरूपं [2]योग्यसाधनोपार्जनमारम्भकालः । उपार्जितसाधनस्य करणं क्रियाकालः । कर्तव्यस्य समाप्तिर्निष्ठाकालः । तदेवं यथाकालं धर्मभेदकल्पनयारम्भादिकालप्रविभागः ॥ ३३ ॥

स च सर्वत्र समान इत्याह ।

**यावांश्च द्व्यणुकादीनां तावान् हिमवतोऽप्यसौ ।**
**न ह्यात्मा कस्यचिद् भेत्तुं[1] प्रचेतुं वापि शक्यते[2] ॥ ३४ ॥**

अवयविनां निरंशत्वादारम्भादिकालः सर्वेषां समानः । अवयवास्तु ततोऽर्थान्तरम् । परिमाणमपि[3] च गुणोऽन्य एवावयविन इति न तद्भेदे तस्य रूपं प्रचेतुमपचेतुं वा शक्यते । तस्मादवयविमात्रस्य कार्यद्रव्यस्य समानत्वान्न तद्वशेनाल्पपरिमाणानां महापरिमाणानां चारम्भादिकालो विशिष्यते, [4]अपि त्ववयविव्यतिरिक्तधर्मान्तरवशेनेत्यर्थः ॥ ३४ ॥

तदाह ।

---

**32.** 1. A °विकरणात क्रि° E² तक्षणादयो विक° 2. A शेषादुपक°. 3. M लक्षणादिलि 4. A °न्तादिसमारपामेदेनजा, E² °न्तादिभेदसमाख्याभेदेनोपजा°. M °न्तदिसमाख्याभेदो जा°.

**33.** 1. AE² बुद्धिरनुसंधानं पदार्थाः ( र्थः ) रूपादयो. 2. A तेषां यावत् साध°

**34.** 1. A कस्यचिद्धर्तं, चिद्भतुं. 2 E² This verse is mixed up with the commentary and the first half has gaps. 3. A ° रपरिमाणगुणा अन्य. 4 A °तेऽवयवन्य°.



**अन्यैस्तु[1] भावैरन्येषां प्रचयः परिकल्प्यते ।**
**शनैरिदमिदं क्षिप्रमिति तेन प्रतीयते ॥ ३५ ॥**

अल्पपरिमाणमहापरिमाणानामवयविनामन्यैर्व्यतिरिक्तैरेवावयवैर्बहुभिः प्रचयोऽल्पैरपचयश्च परिकल्प्यतेऽध्यारोप्यते । तथा च बह्ववयवोऽवयवी शनैर्निष्पद्यते, अल्पावयवस्तु क्षिप्रमित्यारम्भादिकालस्त[2]त्र विलक्षणोऽवधार्यते । [3]समवायतिरोहितभेदत्वादवयवधर्मैरवयविनो व्यपदेशः, न तु भावतः कालो भिद्यतेऽवयविनाम् ॥ ३५ ॥

यतः

**असतश्च क्रमो नास्ति स हि भेत्तुं न शक्यते ।**
**सतोऽपि चात्मतत्त्वं यत् तत् तथैवावतिष्ठते ॥ ३६ ॥**

उत्पत्तेः पूर्वमसन् भावः । तस्य निःस्वभावत्वात् पौर्वापर्येण विभागाभावात् क्रमो नास्ति । उत्पन्नस्यापि विद्यमानस्य तेनैव प्रकारेणाशक्यभेदत्वेन स्वरूपस्यावस्थानादविद्यमानः क्रम इति बुद्ध्यानु[1]सन्धाने न क्रमव्यवहारः सदसतोरित्यर्थादभिहितं भवति । भेदाश्रयो हि क्रमः । स च भेदः पदार्थस्योत्पद्यमानावस्था तत्त्वतः सदसदवस्थाद्वयरूपस्य प्रत्यव[2]स्थमसंभवीति तत्सङ्क[3]लनया पूर्वापररूपताध्यारोपः । एवं प्रथम एव क्रमः काल्पनिक इति सर्वस्तथारूपो न मुख्यः ॥ ३६ ॥

न केवलं क्रियाभेदनिमित्ताः काले एकस्मिन्नृत्वाद्याख्याः प्रवर्तन्ते, यावद् भूतादिव्यपदेशा अपीत्याह ।

**क्रियोपाधिश्च सन् भूतभविष्यद्वर्तमानताः[1] ।**
**एकादशभिराकारैर्विभक्ता[2]ः प्रतिपद्यते ॥ ३७ ॥**

उत्पन्नध्वस्ता यदा क्रिया भवन्ति तदा तदुपाधिः कालो भूत इति व्यपदिश्यते । यदा तु सन्नि[3]हितसाधनाः सम्भाव्यमानोदयाः क्रियाः तदा तदुपाधिः कालो भविष्यत्तां प्रतिपद्यते । प्रारब्धापरिसमाप्तक्रियोपाधिस्तु वर्तमानसंज्ञः । ते च भूतादयः कालविभागाः पुनरवान्तरभेदेनैकादशधा भवन्ति ॥ ३७ ॥

कथमित्याह ।

---

**35.** 1. M अन्येषु. 2. A °दिःकालवस्तुविल°, E² °कालसूत्रविल°. 3. P समुदायति.

**36.** 1. A °द्धयाभिसंधानेन क्र° °E² नेन क्र° 2 M प्रत्यवस्था संभवतीति. 3. A तस्य कल्पन्या.

**37.** 1. A °मानतां 2. A °भक्तां, M भक्तैः. 3. M तु महितसा, E² अभिहितसा°.

**भूतः पञ्चविधस्तत्र[1] भविष्यंश्च चतुर्विधः ।**
**वर्तमानो द्विधाख्यात इत्येकादश कल्पना[2]ः ॥ ३८ ॥**

भूतसामान्यं विशेषेभ्यो व्यावृत्तेरेको भूतभेद इति गण्यते । तथा चोक्तं

"सामान्यमपि यथा [3]विशेषस्तद्वत्"

इति । अद्यतनो द्वितीयो भूतभेदः । अनद्यतनस्तृतीयः । अद्यतनानद्यतनसमुदायस्ताभ्या-मन्यत्वाच्चतुर्थः । परोक्षस्त्वनद्यतनभेदो न भूतभेद इति न पृथग् गण्यते । यस्तु भविष्यन्न-प्यतिदेशाद् भूतकार्याणि लभते स पञ्चमो भूतभेदोऽध्यारोपितभूतभावो गौणः । भविष्य-त्सामान्यमद्यतनोऽनद्यतनो[4]ऽद्यतनानद्यतनसमुदा[5]यश्चेति चत्वारो भविष्यद्भेदाः । यस्तु अनद्यतनवत्प्रतिषेधाद् भविष्यत्सामान्यकार्याणि प्रतिपद्यते सोऽनद्यतनोऽपि शास्त्र-व्यवहारे भविष्यत्सामान्यमेव । मुख्यो वर्तमान एक[6]ः । तत्समीपभूत[7]स्त्वतिदिष्ट-वर्तमानभावः

वर्तमानसामीप्ये .... (?. 3. 3. 131.)

इति भूतो[8]भविष्यंश्च स द्वितीयः । तदेते शास्त्रकार्यप्रविभागार्थं कालस्य भेदाः कल्पिताः, न त्वसा[9]वियत्संख्यः । एवमन[10]न्तभेदत्वात् क्रियाभेदाद् भूतादिभेद उक्तः ॥ ३८ ॥

क्रिया चातीताऽविद्यमाना कथं भूतव्यपदेशं काले समर्पयेदित्याशङ्क्याह ।

**काले निधाय स्वं रूपं प्रज्ञया यन्निगृह्यते ।**
**भावास्ततो निवर्तन्ते तत्र संक्रान्तशक्तयः ॥ ३९ ॥**

क्रियया निर्वर्तिताः[1] पदार्था व्य[2]तीता इति भ[3]ण्यन्त व्य[4]पगतस्वरूपाः । तत्र यत्तेषां वर्तमानावस्थायां बुद्धया[5] स्वरूपं गृहीतं तत् स्थायिनि काले स्वाधारे समर्प्य[6]व्ययन्ते, यतोऽनुभूताः स्मर्यमाणावस्था [7]जायन्ते । तथा चातीतेऽध्वनि संक्रान्तशक्तयो[8] व्यवहारं स्मार्तमनुपतन्ति । एतदुक्तं भवति । भावोपाधितया कालतत्त्वं प्रख्यायते । भावाश्चानुभूतौ स्मर्यमाणावस्थास्तस्य भूतव्यपदेशमेव स्वोपाधितया कल्पयन्ति । तथा चा-

38. 1. A °धस्तेषां. 2. A °कल्पना. 3. M om. विशेष. 4. A तनस्ततत्समु°. 5. M तनशास्त्रव्यहार चला°. 6 M एवः. 7. E²M °पभूतस्तु द्वितीयोऽति, P अमुख्यभूतस्तुयोऽति°. 8. P भूतमविष्यतोश्च. 9. A न तु भाविकेयत्संख्या, E² न त्वसाविय..., M नर्थभावियत्संख्या. 10. A एवमनन्तरभेदत्वात क्रियाभेदाः क्रियाभे° E² एवा...नन्त° M एवानन्तभेदत्वाद् क्रियायेदाद् भूतादिभूत उक्तः, P एवं त भेदत्वात् क्रिय ...? भू°.

39. A° पितता—र्यद्. P.र्तता...र्थाद् 2. A अतीताः 3. A M गस्यते, P भण्यते. 4. A °अतीतस्व. 5. E² om. बुद्धया—स्मर्यमाणावस्थाः 6. E² समर्प्यते. 7.A तस्य भूतव्यपदेश कल्पयन्ति तेन चातीत°. 8. E² om. शक्यो.



भूद् घट इत्यादिव्यवहारः । अतश्चैतदेव कालसद्भावावेदकं लिङ्गम् । असत्यर्थे तद्व्यवहारा-नुपपत्तेः । कालसंक्रान्तरूपत्वेऽभूदिति व्यवहारात् कालसिद्धिः ॥ ३९ ॥

तर्हि भविष्यद्व्यपदेशोऽपि कथमित्याह ।

**भाविनां चैव यद्रूपं तस्य च प्रतिबिम्बकम् ।**
**सुनिर्मृष्ट इवादर्शे काल[1] एवोपपद्यते ॥ ४० ॥**

समर्थहेतुसन्निधानसमये संभावितोत्पत्तीनां पदार्थानां यद्रूपं बाह्यं यच्च तस्य बाह्य[2]स्वरूपस्य बुद्धौ निश्चितं प्रतिबिम्बरूपं तदाकारस्तयोर्द्वयोर्दृश्यविकल्पयोरेकत्वा-ध्यवसायत् स्थायिनि काले समारोहस्तत्र संक्रान्तशक्तित्वमिति तदध्यारोपात् काले भविष्यत्त्वमध्यवसाय बाह्येषु भावेषु तदुपाधि तद् व्यवह्रियते । [3]यथा निर्मलतले दर्पणे रूपप्रतिबिंबमव[4]साय नियतरूपनिश्चय इत्यर्थः[5] । कालादिप्रसेवकान्तर्गता एव पदार्था-श्चकासतीत्यादर्शसाम्यम् ॥ ४० ॥

एवं च कालसंक्रान्तरूपत्वाद् भावानामजस्रपरिणाम इत्याह ।

**तृणपर्णलतादीनि यथा स्रोतोऽनुकर्षति ।**
**प्रवर्तयति कालोऽपि मात्रा मात्रावतां तथा ॥ ४१ ॥**

नदीप्रवाहो यथा तृणादीनि कानिचित् प्रेरयति स्वस्थानात् प्रच्यावयति, कानिचित् पुनराक्षिप्य तत्स्थाने निवेशयति एवमजस्रप्रवृत्तिः कालो भावानाक्षिप्याक्षिप्यो-त्सृजति, उत्सृष्टानां च धर्मपरिणामान् वर्तयति[1] ॥ ४१ ॥

दृष्टान्तान्तरेण तदेव द्रढयति ।

**आविश्येवानुसन्धत्ते यथा गतिमतां गतीः ।**
**वायुस्तथैव कालात्मा विधत्ते क्रमरूपताम् ॥ ४२ ॥**

यथा प्राणाख्यो वायुः शरीरिणामन्तरव[1]यवसन्धिष्ववस्थितो गमनागमनादिचेष्टाःसाधयति तथा कालात्मा अपि भावानामात्मन्य[2]नुप्रविश्य प्रतिबन्धाभ्यनुज्ञाभ्यां निमज्जनोन्मज्जने[3] कुर्वत् क्रमं पौर्वापर्यलक्षणं प्रवर्तयति ॥ ४२ ॥

ततश्चेदं सिद्ध्यतीत्याह ।

**अयनप्रविभागश्च गतिश्च ज्योतिषां ध्रुवा ।**
**निवृत्तिप्रभवाश्चैव भूतानां तन्निबन्धनाः ॥ ४३ ॥**

40. 1. M कालसिद्धि एवो. 2. P बाह्यस्य रूपस्य. 3. M तथा. 4. E²M °म्नसम-वाय, A °म्बवत् सर्वनियत°. 5. M om. अर्थः । कालादि—कालात्मा in Kārikā 42.

41. 1. A आवर्तयति.

42. 1. M om. अवयव. 2. A °मात्मनमनु°. 3. P निमज्जनोन्मज्जनपौर्वापर्यलक्षणं.

दक्षिणायनमुत्तरायणमिति कालकृतमर्यादायत्तः प्रविभाग : । नक्षत्राणां च नियता गतिः उदयादिरूपा कालमनुपतति । महाभूतानां च सर्गप्रलयसमये जन्मविनशावाविर्भावतिरोभावलक्षणौ कालायत्तौ इति सर्वोपकारी कालो विश्वात्मेत्युच्यते ।। ४३ ।।

ज्योतींषि नक्षत्रपर्यायाणि कालप्रविभागरूपाणि नान्यत्तत्त्वमित्याह ।

**मात्राणां परिमाणा ये कालवृत्त्यनुयायिनः ।**
**नक्षत्राख्या पृथक् तेषु चिह्नमात्रं तु तारकाः ।। ४४ ।।**

[1]विशिष्टकालसंबन्धवशेन ये [2]भावानां विशिष्टाः परिणामास्ते पृथक् पृथक् विभक्ताः [3]कृत्तिकादिनक्षत्रसंज्ञाः प्रतिपद्यन्ते । तथा[4]हि चन्द्रमसा योगे पुष्यादीनां यो भावो[5] जातः स तद्व्यपदेशं लभते तिष्यः पुनर्वसुर्वा माणवक इति । अत एवात्र जातप्रत्ययस्यादर्शनमन्वाख्यायते[6] । स्वाभाविकं ह्यर्थाभिधानं शब्दानां व्युत्पाद्यते । तेन विशिष्टोपजातः पदार्थः तिष्यादिव्यपदेश्य इति भावतो मात्रापरिणाम एव नक्षत्रोपाधिः कालः । पृथक्ग्रहणात् कालस्यापि नक्षत्रसमाख्या गम्यन्ते [7]कृत्तिका रोहिणीत्यादि । स हि कालभागो भावेषूपाधिर्जनिक्रियामुखेन । तस्यैव तु ज्ञापकानि ज्योतींषि, न तु तावदेव नक्षत्रस्य रूपं चन्द्रमसा योगे तदुपपत्तेः ।। ४४ ।।

यथा च नियतकालविशेषो ज्योतीरूपैश्चिह्नैः कार्यभूतैर्ज्ञाप्यते, तथान्यैरपीत्याह ।

**[1]रुतैर्मृगशकुन्तानां स्थावराणां च वृत्तिभिः ।**
**छायादिपरिणामैश्च ऋतुधामा[2] निरूप्यते ।। ४५ ।।**

[3]ऋतवो धाम स्थानं यस्य, तदात्मकत्वे[4]न प्रतिभासात् । कालाख्या हि स्वातन्त्र्यशक्तिर्ब्रह्मणो वसन्तादिभेदेन प्रविभक्ता चकास्ति । तया चासौ नियतऋतुभेदः पुंस्कोकिलादिकूजित[5]वशेन नवनवकिसलययोगेन सूर्यादि[6]सञ्चारविशेषोपलक्ष्यमाणच्छायातपादिभेदेन [7]लतावतानप्रसूनविशेषेण चावधार्यते । तथाहि ।

सुगन्धिकुसुमामोदमत्त[8]षट्पदनिर्भरः ।
पुंस्कोकिलरवाकीर्णवनोद्देशो विभाव्यते ।।
मधुर्मधुरझं[9]कारसुखमारुतसङ्गमः ।
प्रबोधितप्रियाबाहुमञ्जरीसक्तवल्लभः ।।

44. 1. M विनष्ट° 2. M भूतानां. 3. P om कृत्तिकादिन 4. AE तथापि. 5. A भागो. 6. P has °ख्याय followed by dots indieating gaps. 7. A °न्ते इति कालो रोहि° P. om. गम्यन्ते 8. EM °ाधिजवितक्रि°

45. 1. M तत्रैव मृ°. 2. M नाम नि°. 3. M रुतयो. 4 A °कत्स्तेन. 5. A °जित नवनव°. 6. M °र्यादिविशेषो. 7. E² om लता–वधार्यते. 8. E² om मत्तषट्पदनिर्भरः. 9. A मधुर्मधुकरामोदी सु°, E² प्रयोगकालेऽपि रूपस्य कर्तुरवतस्यैकारवसुख. सुमधुरसाकार



मल्लिकामोदरुचिरो घर्मार्तगजकम्पितः[10] ।
प्रकम्पिपवनः[11] शुष्कलताकुसुमसञ्चयः ।।
शुष्यदास्यपिपा[12]सार्तप्राणिसङ्करगह्वरः ।
प्रतप्तपांसुनिचयो ग्रीष्मः सोष्मा विभाव्यते ।।
प्रशान्तातपसञ्चारा नीरदाच्छादिताम्बराः ।
जलाप्लावितभूभागाः सञ्चारविषमाः क्वचित् ।।
मयूरकेकारवपूरिताशा लतागृहान्तःस्थितकामिसंघाः ।
उत्कण्ठितप्रोषितदत्तकम्पा वर्षा विभाव्यन्त इह क्रमेण ।।
हंसानां निनदेन पद्मनिचयैर्लाक्षाद्रवोद्भासिभि–
र्नैर्मल्येन दिशां विशुद्धधवलैरभ्रैर्नभोलाञ्छनैः ।
शालीनां परिपाकशोभिवपुषां हृद्यैर्मृगाणां गतैः
संभाव्या शरदभ्रमु[13]क्तविमलव्योमस्फुरत्तारका ।।
प्रसूनैस्तत्रत्यैर्दिशि दिशि चकासद्भिरमलै–
र्जडिम्ना सन्नाङ्गैः पशुभिरथ काकैर्वनगतैः ।
निशानां विस्तारैरभिमततमैः कान्तमनसां
हिमैर्हेमन्ताख्यः समय इह[14]लक्ष्यः स्फुटवपुः ।।
हिमप्रपातस्थगितोरुमार्गो विशीर्णपर्णः शिशिरोऽपि लक्ष्यः ।
शीतार्तसीदच्छकुनिप्रकाण्डो नीहारधारावृतभूमिपृष्ठः ।।
प्रफुल्लकुन्दप्रकरप्रचारस्तुषारसङ्घातविभेददक्षः ।
वहत्यजस्रं शिशिरो नभस्वान् यत्राभितः स्फीततरुप्रकर्षः ।। ४५ ।।

इदानीमद्वैतवादेऽपि कालोपयोगं भावानामाह ।

**निर्भासोपगमो योऽयं क्रमवानिव दृश्यते ।**
**अक्रमस्यापि विश्वस्य तत् कालस्य विचेष्टितम् ।। ४६ ।।**

संबन्धसमुद्देशे प्रदर्शितदिशाऽक्रमं ब्रह्मविवर्तरूपं विश्वम् । तस्य यदिदं क्रमेणावभासनं तत् कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञासामर्थ्यम् । कालाख्या हि ब्रह्मशक्तिरविद्यैव क्रमावभासकारितया जीवात्मसु सफलेति ब्रह्म[1]काण्ड एव निर्णीतम् । एवं तावत् प्रथमः कालव्यापारोऽत्र क्रमावभासः ।। ४६ ।।

10. AM घर्मार्क° E² °मजजीवित, M °घर्मार्करुचिगार्चिततः P has a gap after धर्मार्त. 11. P°वनाशु°. 12. M °स्याविक्षार्तप्रा°. 13. M° भ्ररक्तवि°. 14. AE² इव.

46. 1. M ब्रह्मनिव°.

तदनन्तरोऽपि कालभेद औपाधिक इत्याह ।

**दूरान्तिकव्यवस्थानमध्वाधिकरणं यथा ।**
**चिरक्षिप्रव्यवस्थानं कालाधिकरणं तथा ॥ ४७ ॥**

दूरोऽयमध्वा निकटोऽयमिति कर्तृगतिभेदेनाध्वनि व्यवस्था, न तु मार्गभेदोऽत्र कश्चित् । य एव हि मन्दगतीनां दूरः स एव चतुरचेष्टानामासन्नोऽध्वा । एवं[1] स्थायिन्यपि काले प्रचितसन्तानक्रियोपाधिः चिरमिति व्यवस्थानम् । अपचितसन्तानक्रियोपाधिः क्षिप्रमिति ॥ ४७ ॥

इदानीं पूर्वोक्तोऽपि भूतादिभेदः कालस्य क्रियोपाधिः । विशेषमत्र वक्तुं पुनः प्रतिपाद्यते ।

**तस्याभिन्नस्य कालस्य व्यवहारे क्रियाकृताः ।**
**भेदा इव त्रयः सिद्धा याँल्लोको नातिवर्तते ॥ ४८ ॥**

अभिन्नेन कालेन व्यवहर्तुमशक्यत्वाल्लोके **त्रयो भेदा इव** परमार्थत एकत्वात्, क्रियोपाधयः प्रसिद्धाः तस्य भूतभविष्यद्वर्तमानाख्याः । क्रियाव्युपरमे भूतः, सम्भावितायां क्रियायां भविष्यन्, क्षणप्रवाहरूपेण प्रवर्तमानायां तस्यां [1]वर्तमानः । मुख्य[2] एवायम् ॥ ४९ ॥

कथमस्य भेदो न भवतीत्याह ।

**एकस्य शक्तयः तिस्रः कालस्य समवस्थिताः ।**
**यत्संबन्धेन भावानां दर्शनादर्शने सताम् ॥ ४९ ॥**

कार्यभेदे[1] न कारणभेदानुमानम्, श[2]क्तिभेदादेव कार्यभेदोपपत्तेः । कालाख्यस्य जगत्कारणस्य मुख्यो भेदो नास्ति । तथाहि । वर्तमानशक्तिसंबन्धेन भावानां सतामेवाभिव्यक्तिर्जन्म । अतीतानागतकालशक्तिसंबन्धेन तु सतामेव तिरोभावोऽदर्शनमनभिव्यक्तिर्विनाशः प्राक्प्रध्वंसाभावरूप इति शक्तिभेदात् कार्यभेदोपपत्तौ कालभेदकल्पना निर्निमित्ता ॥ ४९ ॥

दर्शनादर्शने एव शक्तिप्रविभागेन विभजति ।

**द्वाभ्यां स किल शक्तिभ्यां भावानां वरणात्मकः ।**
**शक्तिस्तु वर्तमानाख्या भावरूपप्रकाशिनी ॥ ५० ॥**

47. 1. E[2] एवमवस्थायिनि. M एवमव्यवस्थायिनि.
48. 1. AE[2] om वर्तमान. 2. M मुख्या.
49. 1. P कार्यभेदे का. 2. M has शक्तिभेदानुमान before शक्तिभेदादेव.



अतीतानागतशक्तिभ्यां[1] वरणं तिरोधानं[2] भावानां सतां कालः करोति । वर्तमानशक्त्या दर्शने भावरूपप्रकाशनम् ॥ ५० ॥

ननु यथानागतशक्तिकृतावरणानां पुनरभिव्यक्तिर्वर्तमानशक्तिसंबन्धो दृश्यते तथातीतशक्तिकृतावरणानामपि कथं न भवतीत्याशङ्क्याह ।

**अनागता जन्मशक्तेः शक्तिरप्रतिबन्धिका ।**
**अतीताख्या तु या शक्तिस्तया जन्म विरुध्यते ॥ ५१ ॥**

जन्मसहच[1]रिताया वर्तमानशक्तेरनागतशक्तिरविरोधिनी प्रतिबन्धं न करोत्युदये । स्व[2]काले हि तया सा प्रतिबद्धा । समर्थहेतुसम्पाते तु वर्तमानशक्तेरुदयानुकूल्यमनागतशक्तिर्भ[3]जते । यस्य हि कालान्तरे वर्तमानता स एवानागतः कथ्यते । अतीतशक्त्या तु जन्मशक्तिर्वर्तमानाख्या **वि[4]रुध्यते** एव न हि मृतस्य पुनर्जन्मेति[5]नातीतेऽध्वनि पतितमाविर्भवति वस्तु ॥ ५१ ॥

ननु शक्तिमदाश्रिताः शक्तयः शक्तिमानिव सदा संनिहिता इति सदैव तद्योगे भावानां युगपद् [1]विरुद्धरूपदर्शनादर्शनप्रसङ्ग इत्याशङ्क्याह ।

**तमःप्रकाशवत्त्वेते त्रयोऽध्वानो व्यवस्थिताः ।**
**अक्रमास्तेषु भावानां क्रमः समुपलभ्यते ॥ ५२ ॥**

भूतभविष्यद्वर्तमानाख्यास्त्रयः कालविभागा अध्वान इवाध्वानः । यथा ह्यध्वसु गन्तारो गमना[2]गमनादिप्रबन्धं वर्तयन्ति तथैतेषु भावाः परिणाममनुभवन्तो गतागतप्रबन्धमुपर[3]चयन्ति । भविष्यदध्वनि य एव स्थितः स एव वर्तमानाध्वनि पतित्वातीतेऽध्वनि पुनः पतति । तथा च त्रैयध्विकाः पदार्थाः परिणामवादिभिरभ्युपगम्यन्ते । यदुक्तं पातञ्जले

धर्मास्त्र्यध्वानः ( Vyāsabhāṣya on Y. Dar. III. 13. )

इति । यद्यपि चैते त्रयः शक्तिविशेषाः कालात्मन्यक्रमा एवावस्थिताः तथापि तमः[4]प्रकाशरू[5]पत्वादाधेयेषु भावेषु प्रवृत्तिं वर्तयन्तो दर्शनादर्शनाभ्यां सदसद्रूपोपकल्पनया पौर्वापर्यं विदधति । तद्यथा त्रयः सत्त्वरजस्तमोलक्षणगुणा नित्यत्वाद् युगपदवस्थाना

50. 1. M om भ्यां वरणं—अतीताख्या तु या in the next कारिका. 2. E[2] निरोधावनं.
51. 1. M °न्मसहिताया.: 2. M स्याकाले. 3. M लीयते. 4. A निरु°. 5 M नातीतातेऽध्वनि.
52. 1. M °पद्धेरूपदर्शनं इत्याह. 2. M गमनदिप्र°. 3. M उपचयन्ति. 4. Mताः प्रकाशयन्ति. 5. M om रूपत्वदाधेयेषुभावानुपरचयन्ति.

अपि अङ्गाङ्गिभावोपगमनेन यथायथं स्ववृत्त्युल्लासे विचित्रपरिणामाद् भावानुपरचयन्ति तथेमे कालभेदाः स्वशक्तिमाहात्म्याद् भावभेदेषु क्रमोपरचनचतुरा इत्यर्थः ॥ ५२ ॥

तमःप्रकाशरूपत्वमेव विभजति[1] ।

**द्वौ तु तत्र तमोरूपावेकस्यालोक[2]वत् स्थितिः ।**
**अतीतमपि केषाञ्चित् पुनर्विपरिवर्तते ॥ ५३ ॥**

अतीतानागतावध्वानौ भावावरणहेतुत्वात् तमःस्वभावौ । [3]वरणं हि तमोधर्मः ।

' गुरु वरणकमेव तमः ' ( Sānkhya-Kārikā. 13. )

इत्युक्तम् । वर्तमानोऽध्वा प्रकाशतुल्यः सत्त्वसदृशः ।

' सत्त्वं लघु प्रकाशकमिष्टम् ' ( Sānkhya Kārikā 13. )

इति । रजस्तु प्रवृत्तिसामान्यं कालस्वरूपं सर्वत्रान्वयि । प्रतिबन्धाभ्यनुज्ञाभ्यां प्र[4]वर्तकं प्रेरणारूपं रजः कालात्मकमेव । त्रैगुण्यपरिणामात्मक[5]त्वं च ब्रह्मदर्शनेऽपि कालस्योपपन्नमेव शक्तिरूपस्यापि । ज्ञानक्रियाशक्ती[6] हि जीवात्मनि गुणत्रयम् । तत्रैव च कालशक्तिस्ताद्रूप्यातीतशक्तिर्जन्मशक्तेः प्रतिबन्धिकेति पूर्वमुक्तम् । केचित्तु मन्यन्ते-अतीताध्वपति[7]तमपि पुनः कालान्तरे जगत्परि[8]वर्तेषून्म[9]ज्जति । कृतपरिनिष्ठिता हि भावाः प्रधान[10]प्रसेवकान्तर्गता यथाकालमुद्दर्शयन्त्यात्मा[11]नं पुनः प्रलये तत्रैव विरोभवन्ति । पञ्चाधिकरणदर्शनस्थानां सांख्यानामयमागमः[12] । इत्थं चात्र दर्शने सुतरां त्रैयध्विकत्वमुपपद्यते, सर्वेषामपि त्रिष्वप्यध्वसु सञ्चारात्[13] । प्रबन्धप्रवृत्ते जगति पूर्वमतीतानां वर्तमानता नास्ति । जगत्परिवर्तेऽपि न तदेवावर्तते, अपि तु तत्सदृशमित्यतीतशक्तेर्वर्तमानशक्तिविरोधः पूर्वमुक्तः । इह तु

' नाभावो विद्यते सतः ' ( B. Gitā II. 16. )

इति तिरोभूतं पुनस्तदेवावर्तते इति दर्शनान्तरं[14] कथ्यते । तदेवं धर्मधर्मिणोः कथंचिद् व्यतिरेकमभ्युपगम्य स्थायी धर्मी वर्तमानो धर्मास्तु त्र्यध्वान इतीदं दर्शनमुक्तम् ॥५३॥

इदानीं धर्मधर्मिणोरव्यतिरेकं भाविकमाश्रित्य धर्मिणो युगपदपि व्यपदेशत्रयं धर्मद्वारकं प्रवर्तते इति महाभाष्यमतमाह ।

53. 1. M विभाग इति. 2. A °स्यानेकवत् स्थि°, M °क ह्यालोकवत् स्थितः 3. P आवरणं. 4. A प्रवर्तमानं. 5. P °णामाश्च तस +++ वदर्शनेऽपि. 6. AE[2] °शक्तिर्हि P°शक्तिमिर्जा. 7. P °ध्ववर्तिनोऽपि. 8. P परावर्तेषु. 9. P °षूद्भवन्ति. 10. A E प्रधानसेव° 11. M om पुनः कालान्तरे—उद्दर्शयन्त्यात्मानं. 12. P ( ममभ्युप ) गमः 13. AE[2] संचार प्रबन्ध°. 14. P दर्शनात्.



**युगपद्वर्तमानत्वं तद्धर्मा प्रतिपद्यते ।**
**केषांचिद्वर्तमानत्वाच्चैति [1]तद्वदतीतताम् ॥ ५४ ॥**

ते अतीतवर्तमानानागतरूपा धर्मा यस्यासौ **तद्धर्मा** धर्मी **युगपद्** एकवारमेव **वर्तमानत्वम्** सांप्रतिकत्वं प्रतिपद्यते । धर्मस्य वर्तमानत्वात् त[2]दव्यतिरिक्तो धर्मी तथा **वर्तमानत्वाच्च** अनन्तरामपि **अतीततां तद्वद्** वर्तमानत्ववद् **एति** युगपदेवातीततामप्यासादयति । कस्यचिद्धर्मस्यातीतत्वात्तद[3]व्यतिरिक्तो धर्मीत्यर्थः । एवं कस्यचिद्धर्मस्यानागतत्वादनागततामप्येति । तदेवं धर्मी स्थायी भाव[4]तः सदैव वर्तमानोऽपि धर्मत्रैविध्यात् सकृदपि त्र्यध्वा व्यवह्रियते । अव्यतिरिक्ताश्च संनिवेशवद्धर्मा इत्यन्यत्र स्थापितम् ॥५४॥

नन्वतीतवर्तमानयोर्विरोधात् कथमेकत्र समावेश इत्याशङ्क्याह ।

**हेतूपकारादाक्षिप्तो वर्तमानत्वमागतः ।**
**शान्तहेतूपकारः [1]सन् पुनर्नोपैति दर्शनम् ॥ ५५ ॥**

यदा संरब्धा हेतवः कार्योपकारमारभन्ते तदा तत्सामर्थ्याज्जायमानो भावो दर्शनपथमवतरन्नर्थक्रियाः सम्पादयन् वर्तमान इति व्यपदिश्यते । उपर[2]तकारणव्यापारस्तु परिसमाप्तकरणीयोऽद[3]र्शनमनुपतन्नतीतः । यदा तु हेतवो नोपकाराय संरब्धास्तदानागतः । इत्येकस्यापि परोपाधिप्रकल्पितो व्यपदेशभेदोऽविरुद्ध इत्यर्थक्रियासदसत्त्वनिमित्तो व्यप[4]देशभेदः । ननु यदेवार्थक्रियाकारि तदेव परमार्थसदित्यतीतेऽध्वनि तदभावात् कथं सत्त्वम् । न वयमर्थक्रियानिमित्तं सत्त्वमुपेमः[5], अपि तु स्वरूपेण सन्तः[6] पदार्थाः । स्वरूपं चैषां गुणत्रयमयम् । तस्य च नित्यस्य[7] नास्ति विनाशः । सर्वत्र सर्वदानु[8]गमात्, वीतपञ्चकेन साधितत्वात् । तदुक्तम्—

' तदेतत् त्रैलोक्यं व्यक्तेरपैति, न सत्त्वात् '

इति ॥ ५५ ॥

अतीतानागतयोरध्वनोर्भावस्यादर्शनं समानमभिप्रेत्य केचित् संक्षेपरुचयः कालस्य शक्तिद्वयमेव[1] प्रतिबन्धाभ्यनुज्ञापर्यायमभ्युपयन्तीत्याह ।

**द्वे एव कालस्य विभोः केषांचिच्छक्तिवर्त्मनी ।**
**करोति याभ्यां भावानामुन्मीलननिमीलने ॥ ५६ ॥**

54. 1. M om तद्वदतीताम् ( in the Kārikā )—सांप्रति. 2. M तद्व्यति. 3. P तद्व्यति° 4. A तावत्.

55. 1. P स तु°. 2. A उपकृतपरिसमाप्तक°. 3. A°यो दर्शनमनुप°, M °नपथमघतरं तर्थक्रियानुपतन्नतीयः. 4. P व्यपदेशः 5. AE[2] ब्रूमः 6. A सतां पदार्थानां स्वरूपेण++ जुषां. 7. A E[2] सत्यस्य, M नित्य.नित्यस्य. 8. P °नुग्रहात्.

56. 1. P कालस्य द्वयमेव.

प्राक्प्रध्वंसाभावयोर्भावस्यादर्शनमविशिष्टमिति एकैव तत्कारिणी[2] कालस्य सर्वभा[3]वग्रहिष्णुरूपस्य शक्तिः प्रतिबन्धलक्षणा। द्वितीया त्वभ्यनुज्ञालक्षणा भावाभासविधायिनी सर्वभाव[4]प्रभविष्णुरूपस्य । तदेवं कालतत्त्वं व्याख्यातम् ॥ ५६ ॥

अत्र तु केचिद् विप्रतिपद्यन्ते—अभिन्नेन कालेन व्यवहर्तुमशक्यत्वाद् य एव तद्भेदोपाधिः क्रियादिः परिकल्प्यते स एव व्यवहारनिमित्तं किमदृश्यमानेनानुपपन्नेन कालात्मना कृत्यमिति [1]वदन्तः । यदि च परिकल्पितरूपेण कालेन विना व्यवहारदौस्थ्यं तदीदृशमस्तु कालतत्त्वमिति । तद्दर्शनेनाह ।

**कलाभिः पृथगर्थाभिः प्रविभक्ते स्वभावतः ।**
**केचिद् बुद्ध्यनुसंहारलक्षणे ते प्रचक्षते ॥ ५७ ॥**

भिन्नाः क्रियाः [3]संकलनाबुद्ध्यानुसंह्रियमाणाः सङ्कल्प्यमानाश्चिरक्षिप्रादिव्यपदेशस्य निमित्तं भवन्ति, एवमहोरात्रादिव्यपदेशस्य । तथा च बुद्ध्या संकलनमा[4]त्रमेवाबहिस्तत्त्वं चिरादिकालरूपं विलक्षणमेव व्यवतिष्ठते । तथाहि चिरकालस्यावान्तरप्रविभागेन भिन्ना एव कलाः स्वांशाः परिकल्प्यन्ते । एवं क्षिप्रकालस्याहरादिकालस्य च । न तु क्रियोपाधिवशादयं चिरा[5]दिभेदः । पूर्वोक्तनयेन बुद्धेः स्वयं भेदात् । स एव च स्वविषये सङ्कल्प्यमाने क्रियासन्ताने समारोप्यते । बुद्धिधर्मो हि विषयरूपानुपातीति दृष्टमेतत् । विषयभूतलक्षणगताल्पत्वमहत्त्ववशेन चिरादिभावो बुद्धिसङ्कलनस्य कालरूपस्य व्यवह्रियते इत्येतावत् कालतत्त्वम् ॥ ५७ ॥

नास्त्यन्यो बाह्यः कश्चित् काल इति बौद्धप्रायाः । भवत्वेवं नास्माकं विप्रतिपत्तिरत्रेत्याह ।

**ज्ञानानुगतशक्ति वा बाह्यं वा सत्यतः स्थितम् ।**
**कालात्मानमनाश्रित्य [1]व्यवहर्तुं न शक्यते ॥ ५८ ॥**

ज्ञाने बुद्धावनुगतास्तदा[2]काराः शक्तयश्चिरक्षिप्रवर्तमानादिभेदरूपा यस्यासावेवंविधो बुद्ध्यनुसंहारमात्रस्वभावो वास्तु[3]कालो बाह्यो वा कश्चित् प्रविभक्तवर्तमानादिशक्तिः पारमार्थिको द्रव्यपदार्थः । नास्माभिर्दर्शनविवेकः प्रारब्धः, किन्तु शाब्दे व्यवहारे यदङ्गं, तत्परीक्ष्यम् । अस्ति च भिन्नकालः शाब्दो व्यवहारोऽभूदस्ति भविष्यतीति । तत्र यथायोगमविचारितरमणीयः कालोऽभ्युपगन्तव्य इत्यर्थः ॥ ५८ ॥

2. P तत्कारणका° 3. P सर्वप्रभविष्णु° 4. P सर्वप्रभ°.

57. 1. M om वदन्तः—कालतत्त्वमिति. 2. A$E^2$ स्वमतिपरि° 3. MP क्रिया(:)लक्षणाः 4. A$E^2$ °नं क्रमो वा बहि°. 5 M क्रियाभेदः

58. 1. M व्यवहारं न, 2. A$E^2$ तथाकाराः. 3. A$E^2$ वस्तुकालो, P वा तस्माद्.



तथा हि कैश्चिद् भावेभ्यो व्यतिरिक्त एव कालोऽभ्युपगत इत्याह ।

**तिस्रो भावस्य भावस्य केषाञ्चिद् भावशक्तयः ।**
**ताभिः स्वशक्तिभिः सर्वं सदैवास्ति च नास्ति च ॥ ५९ ॥**

[1]पारमर्षनये सततपरिणामिषु भावेषु[2] सत्त्वरजस्तमसां शक्ति[3]मात्रमतीतादिकालभेदसमाख्यम्[4] । तथा च सर्वेषां भावानां गुणत्रयमयत्वाच्छक्तित्रययोगित्वे यथायथं शक्त्युद्भवानुद्भवाभ्यां सदसत्त्वेन व्यवहारः ॥ ५९ ॥

तथा हि ।

**सत्त्वादव्यतिरेकेण तास्तिस्रोऽपि व्यवस्थिताः ।**
**क्रमस्तास्तदभेदाच्च सदसत्त्वं न भिद्यते ॥ ६० ॥**

भावादव्यतिरिक्तास्ता एव शक्तयः **क्रमः** इत्युच्यन्ते । आविर्भावतिरोभावौ हि वर्तमानादिशक्तिसमन्वयवशाद् भावाः प्रतिपद्यमानाः क्रमरूपमात्मनि दर्शयन्तीति शक्तयस्ता एव तात्पर्यतः [1]क्रमः । अव्यतिरेकेऽपि च भावाच्छक्तीनां सदा भाववदवस्थानेऽपि वृत्तिवैचित्र्यात् सङ्करो न भवति । दर्शनादर्शने हि तत्रासां [2]व्यापारः । स च विलक्षणः । तद्वशादेव च सदसत्त्वव्यवहार इति सोऽपि [3]भावतो न विभिद्यते । अतीतानागतावस्थस्य हि दर्शनमप्रवृत्तं न सत्त्वमिति दर्शनाभाव एवासत्त्वव्यवहारात् सत्त्वस्य च तदानीमपि विद्यमानत्वात् **सदसत्त्वं न भिद्यते** ॥ ६० ॥

यतः

**दर्शनादर्शनेनैकं दृष्टादृष्टं तदेव तु ।**
**अध्वनामेकता नास्ति न च किञ्चिन्निवर्तते ॥ ६१ ॥**

वर्तमानशक्त्या प्रकाशनं दर्शनं संवेदनम्, अतीतानगतशक्तिभ्यां तु तिरोधानमदर्शनमसंवेदनम्, तयोः परस्परपरिहारेणावस्थानाद् नैकत्वमिति कार्यभेदादध्वभेद एव न सङ्करः । यत्पुनस्तद्वस्तु दृष्टं [1]सददृष्टमतीतं च तदेकमेव[2] धर्मिरूपम्, धर्माणामागमापायाभ्यामपि धर्मिणस्तत्त्वादप्रच्युतेः । अतश्चात्र भावादभिन्नानामप्यध्वनां वर्तमानादिरूपाणां कार्यसाङ्कर्याभावादेकत्वसङ्करो नास्ति । यतश्च [3]सद्रूपमत्यन्तनिरन्वयध्वंसं नोपपद्यते, तिरोभावमात्रं तु । ततः सदसत्त्वं न भिद्यते, सत्त्वादसत्त्वस्य भेदो नास्ति, सत्त्वमेव हि तिरोभूतमसत्त्वमिति व्यवह्रियते, न त्वभावो नाम कश्चिन्निरूप्य[4] इत्यर्थः । तदुक्तं पातञ्जले—

59. 1. M परमार्थनये. 2. AE om. भावेषु. 3. M om. शक्तिमात्रं. 4. P °माख्या.

60 1. $E^2$ तात्पर्यक्रम. 2. M व्यवहारः 3. M भावो न भिद्यन्ते.

61. 1. A दृष्टमदृष्टमतीतं च, $E^2$ दृष्टं सदृष्टमतीतं च. 2. A तदेकरूपमेव. $E^2$ तदेकमेव रूप. 3. A$E^2$ तद्रूपम°. 4. P °श्चोरूप ३°.

"[न] धर्मी त्र्यध्वा धर्मास्त्र्यध्वानस्ते तल्लक्षितास्तां तामवस्थां प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्ते" (Vyāsa-bhāṣya on Y. Dar. III. 13)

इति। तथा चानागतलक्षणं हित्वा वर्तमानलक्षणं प्रतिपन्नो न चानागतातीताभ्यां वियुक्त इति ॥ ६१ ॥

इदानीं यथासम्भवं कालतत्त्वे मतान्तराण्युपसंहरति।

**शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम्।**
**प्रथमं तदविद्यायां यद्विद्यायां न विद्यते ॥ ६२ ॥**

कालाख्या स्वातन्त्र्यशक्तिर्ब्रह्मण इति तत्रभवद्भर्तृहरेरभिप्रायः। व्याख्यातारस्तु कारणशक्तिरेव काल इति व्याचक्षते। तथा हि बीजशक्तिरङ्कुरोपजननमभ्यनु[2]जानती काण्डप्रसवं च तदानीं प्रति[3]बध्नती कालका[4]र्यकरणात् कालः। एवमङ्कुरादिशक्तावपि यथोत्तरमनन्तरकार्यजननाद् व्यवहितकार्यप्रतिबन्धाच्च कालतत्त्वं बोद्धव्यम्। एतच्चायुक्तमिति लक्ष्यते। नियतकारणा हि भावाः स्वकारणसन्निधाने भवन्ति नान्यथेति कारणसामर्थ्यमेवेदम्। तत्र तु नियतकालत्वात् सहकारी कालस्तदन्य एव [5]युक्तः। कारणपरम्परया भावानामुत्पद्यमानानां च क्रमदर्शनाच्च क्रमाख्या कालशक्तिर्भावोपा[6]धिरित्येवोपगन्तव्या। ततश्च भावभेदावभासने प्रभुः स एव तत्र तदनुयायिक्रमावभासनेऽपीति स्वतन्त्रस्य चिदात्मन एव जीवात्मगतेयं शक्तिः कालाख्या युक्ता। तथा[7]ह्युक्तं वाक्यपदीयेऽस्माभिः। अत एवैतद्दर्शनानुगुणदर्शनान्तरमाह—**आत्मा** पुरुषो जीव एव [8]काल एव जीवस्तस्यैव क्रमावभासात्। स हि यथातत्त्वमर्थान् प्रत्येतुमसमर्थः स्वाभासकालानुसारेण तत्र क्रममध्यवस्यति। ततश्च ततः कालभेदप्रक्लृप्तेः स एवोपचारेण कालाख्यां प्रतिपद्यते। स एव हि कालशक्तिरविद्याशक्तिसहचारिण्याः फलभूमिः। तददृष्टादिवशेनैव च भावेषु प्रतिबन्धाभ्यनुज्ञे। अन्ये तु विग्रहवतीं महाप्रभावां देवतां कालत्वेन प्रतिपन्नाः। अत्रापि चिद्रूपस्य ब्रह्मणः शक्तिर्देवतैव सकलजगद्ग्रासघस्मरेत्येतदानुगुण्यमेवेतीदमेवात्र सिद्धान्तरूपं दर्शनम्। अत एवैतत् कालदर्शनम्—' अविद्यायां संसारहेतुभूतायां प्रथमं भेदावभासमयो हि संसारः, भेदश्च देशकालाभ्याम्, तत्र च कालभेदो जगत्सृष्टेराद्यः। अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव चकास्ति इति कृतनिर्णयं वाक्यपदीये शब्दप्रभायामस्माभिस्तत

---

5. M om. न द्रव्यान्तरतः.

**62.** 1. P °पक्षे भि. 2. A B[2] °नुजानाति. 3. AE[2] प्रतिबध्नाति, M प्रतिबध्नीति, 4 AE[2] कार्यकारणात्, M कारत्मकार्यकारणात्. 5. P प्रोक्तः. 6. AE[2] यावोपाधिरूपा. M भावरूपा. 7. A प्रागुक्तं, ME[2] विभक्तं. 8. P °जीव एवा कालान्तरस्य च क्रमा°.



एवावगमनीयम्। निष्क्रमं हि ब्रह्मतत्त्वं विद्यामयमकालकलितमविद्यावशात् क्रमरूपोपग्रहेण यथायथं विवर्तते इति कालानुवेधात् पदार्थानां क्रमेण प्रत्यवभासोऽनादिसिद्धजीवात्मगतः, सर्वस्य भेदजातस्याविद्यामयत्वात्। काले[9]ऽपि दर्शनभेदेन यो[10]ऽयं विभागः सोऽप्यविद्याविजृम्भित एव। आविर्भूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्या[11]पगमाद्यमप्यपैति। अतश्चात्र युक्तायुक्ततया विचारणं प्रयासमात्रफलमेव। व्यवहारे सर्वस्यैवासत्यतया तत्त्वव्यवस्थयानु (स्थानु?) पपत्तेरित्यत्र तात्पर्यार्थः। तदेवं जन्मवतां पदार्थानां व्यवहारे काल उपयोगीति स्थितम्। कथं तर्हि नित्यानां शब्दानां कालकृतो ह्रस्वत्वादिभेदः। कल्पित इति ब्रूमः। तद् यथा चिरमिदं [12]कृतं क्षिप्रमिदं कृतमिति ज्ञानयोः स्वतः समानकालत्वेऽपि विषयगतप्रचयापचयाभ्यां कालभेदप्रतिभास इव स्वात्मनि लक्ष्यते तथा ह्रस्वादावपि शब्दतत्त्वस्य [13]नित्यत्वात् समानकालत्वेऽपि समुपचरितः कालभेदः ॥६२॥

**अभेदे यदि कालस्य ह्रस्वदीर्घप्लुतादिषु।**
**दृश्यते भेदनिर्भासः स चिरक्षिप्रबुद्धिवत् ॥ ६३ ॥**
**ह्रस्वदीर्घप्लुतावृत्त्या नालिकासलिलादिषु।**
**कथं प्रचययोगः [1]स्यात् कल्पनामात्रहेतुकः ॥ ६४ ॥**

वास्तवे ह्रस्वादौ कालस्या[2]भेदेऽपि चिरक्षिप्रज्ञानवदुपचरिते कालभेदे समाश्रीयमाणे ह्रस्वस्य पुनः पुनरुच्चारणे नालिकायाः पानीयस्रुतिरल्पा, ततस्त्रिभागाधिका दीर्घस्योच्चारणावृत्त्या, ततो[3]ऽपि प्लुतस्य त्रिभागाधिकेति योऽयं प्रकर्षसंबन्धः सलिलस्रुतेः स कथं कल्पनामात्रकृतकालभेदात्, स्वतः कालविभागशून्याद् ह्रस्वादिभेदाद् भवेत्। ह्रस्वादीनां [4]ह्यभिन्नकालता पारमार्थिकी, कल्पिता तु भिन्नकालता। न च कल्पनाकल्पितोऽर्थोऽ[5]र्थ[6]क्रियास्वन्वयीति ह्रस्वादिसमुच्चारणे सलिलस्रुतिरेकरूपैव स्यात्। आदिग्रहणादन्येषां भावानां निष्पत्तिभेदो[7] ह्रस्वादिसमुच्चारणे दृश्यमान उदाहार्यः। तस्मात्तत्त्वत एव भिन्नकाला ह्रस्वादयः शब्दा इति कालवृत्त्यनुरोधान्नित्यत्वव्याघात इत्यर्थः ॥६३, ६४॥

अत्र समाधिः।

**अभिव्यक्तिनिमित्तस्य प्रचयेन प्रचीयते।**
**अभिन्नमपि शब्दस्य तत्त्वमप्रचयात्मकम् ॥ ६५ ॥**

---

9. E[2] कालेनापि. 10. A योऽयमनृतप्रविभागः, M योग्य...विभागः, M धर्मतप्रविभागः. 11. AE[2] °स्थानवग°, M °स्थागमा°. 12. M om, कृतं क्षिप्रमिदं कृतमिति. 13. AE[5] पक्षेऽपि समुत्पदित : का°

**63, 64.** 1. P °योग्यः. 2. AE[2] विभेदे. 3. AE[2] यत्रापि प्लु°. 4. AE[2] तद्भिन्न- 5. AE[2] कल्पनार्पितो. 6. AE[2] °र्थः क्रिया° 7. A° त्तिभावो, E[2] °त्तिभागे.

शब्दस्य ह्रस्वादिभेदभिन्नस्यापि नित्यत्वात् कालावच्छेदाभावेऽपि तदभिव्यञ्जकध्वनिग्रामस्योपचयापचयाभ्यां कालभेदाद् व्यङ्ग्यव्यञ्जकयोर्भेदानवधारणाच्छब्देऽपि कालभेदाव[1]धारणम् । प्राकृता हि ध्वनयः शब्दस्वरूपसंभेदेन[2] श्रूयमाणाः स्वगतं कालभेदं तत्रावभासयन्ति । न हि व्यञ्जकध्वनिविवेकेन शब्दतत्त्वग्रहणम् । '[3]अन्त्येन ध्वनिना सह बुद्धौ शब्दोऽवभासते ' इत्युक्तम् । ततश्चाभिव्यञ्जकाधीनत्वाच्छब्दतत्त्वोपलम्भस्य यथाव्यञ्जकं[4] तद्धर्मः स्वरूपनिवेश्येवेति भिद्यते नालिकासलिलस्रुतिः । अत एव

तपरस्तत्कालस्य (P. 1. 1. 70. )

इति ध्वनिगतकालाध्यासादुपपद्यते । [5]वैकृतध्वनिजनितस्तु वृत्तिभेदो न भेदक इति निर्णीतमेव पूर्वकाण्डे । वक्ष्यते चाग्रे—

" सर्वश्च ह्रस्वदीर्घानुनासिकत्वादिधर्मव्रातः शब्दात्मनि व्यञ्जकाधीनः "

इति । ब्रह्मकाण्ड एव विस्तरेणोक्तम्—

नादस्य क्रमजन्मत्वान्न पूर्वो न परश्च सः ।
अक्रमः क्रमरूपेण भेदवानिव जायते ॥ ( Vāk. I. 48. )

इत्यादि । तदत्र चिरक्षिप्रज्ञानवन्नायमस्वरूपसमवायी कालभेदो येनाभेदस्य भाविकस्य भावात् कार्यभेदो न स्यादित्युच्येत[6] । अपि[7] तु व्यङ्ग्यव्यञ्जकयोः शब्दनादयोरविवेकेन श्रोतृभिरभेदा[8]ध्यवसायाद् व्यञ्जकमन्तरेण शब्दस्वरूपाव्यवस्थानादन्तरङ्गध्वनिनिहितः कालभेदो व्यवहाराङ्गमेवेत्यर्थः । न हि यथा ज्ञानस्य विषयस्तथा शब्दस्य ध्वनयः । विषयाकारस्य शता[9]द्यात्मकस्य ज्ञानाकाराद् विवेकेन संवेदनाच्छब्दध्वनीनां चाविवेकात् । पूर्वपक्षे तु स्वरूपानिवेशी गजनिमीलितेन भेद[10]निर्भासः शङ्कितः । तथा च कार्यभेदानुपपत्तिश्चोदिता ॥ ६५ ॥

न केवलं ह्रस्वदीर्घादावेव शब्दतत्त्वमभिन्नं यावत् सर्वत्रैव पदवाक्यविषय इत्याह ।

**एवं मात्रातुरीयस्य भेदो[1] दाशतयस्य वा ।**
**परिमाणविकल्पेन शब्दात्मनि न विद्यते ॥ ६६ ॥**

मात्रायाश्चतुर्थस्य भागस्यापचिततरध्वनिव्यङ्ग्यस्य, दश अवयवा येषां ते दशतयाः समुदायाः ऋगात्मानः तेषां समूहस्य दाशतयस्य चतुष्टयात्मकस्य वेदराशेः

65. 1. P °भेदानवधारणम्. 2. AE² °देनेव. 3. Cf Vāk. I. 84. 4. P °कस्तद्ध° 5. A विकृत°. 6. P च्यते. 7. AE² अनुव्यं° 8. AE² °भेदो व्यव°. 9. A शब्दा. द्यात्म°, M शधात्मिका. 10. AE² स्वरूपभेदावभासः.

66. 1. AE² भेदे.



प्रचिततरध्वनिव्यङ्ग्यस्य कालपरिमाणभेदेन विशेषो नास्ति । [2]द्वयोरपि शब्दयोर्नित्यत्वेन समानत्वाद् व्यञ्जकगतः केवलं कालभेद इत्यर्थः । तद्यथा हस्तिमशकज्ञाने स्वरूपेणैकरूपेऽप्याकारोपप्लवाद् विलक्षणे इवानुभूयेते एवं शब्दात्मा स्फोटस्वभावः सर्वत्र पदवाक्यविषयेऽवि[3]लक्षणोऽभिव्यञ्जकभेदाद् विलक्षण इव चकास्ति ॥ ६६ ॥

यदि तर्हि ध्वनिभेदाद् ह्रस्वादिभेदः कार्यभेदाभिधायिवृत्तिभेदोऽपि कथं स्यात् । ततश्च द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यं स्यादित्याशङ्क्याह ।

**अनुनिष्पादिकल्पेन[1] येऽन्तराल इव स्थिताः ।**
**शब्दास्ते प्रतिपत्तॄणामुपायाः प्रतिपत्तये ॥ ६७ ॥**

प्राकृतध्वनिभिरभिव्यक्ते शब्दतत्त्वेऽनुरणनरूपा ये पश्चात्कालभाविनो ध्वनयः सन्तानेन वर्तन्ते श्रोत्रान्तराल इव स्थिताः[2] शीघ्रसन्तान[3]वर्तनात्ते श्रोत्रदेशमनुप्राप्ताः शब्दप्रचयग्रहणहेतुतां श्रोत्र[4]गुणात् प्रतिपद्यमाना द्रुतादिवृत्तिभेदं रचयन्ति । ततश्च ते शब्दतत्त्वाद् बहिर्भूता न भिन्दन्ति तत् । तदुक्तम् —

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ ( Vāk. I. 77. )

इति । वार्तिकेऽप्युक्तम् —

" सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते " ( Vā 5, on. P. I. 1. 70. M. Bhā. I. p. 184. l 13 )

इति । तदेवं जन्मवतां कालेनानवच्छेदाद् नित्यानां शब्दानां तदनुपपत्तिं चोदयित्वा व्यञ्जकगतत्वेन समर्थितम् ॥ ६७ ॥

इदानीं प्रकृतमेव कालस्य परोपाधिकं भेदव्यवहारं दर्शयति ।

**विशिष्टमवधिं तं तमुपादाय प्रकल्पते ।**
**कालः कलावतामेकः क्षणमासर्तुभेदभाक् ॥ ६८ ॥**

कलावतां सावयवानां अनित्यानां भावानामवच्छेदकः कालो नियतपदार्थोदयाद्यवधिपरिग्रहेण[1] लवमुहूर्तादिविभागव्यवस्थामासादयति ॥ ६८ ॥

तथापि नैषा व्यवस्था भाविकीत्याह ।

2. M om. द्वयोरपि—इव चकास्ति. 3. P° येऽपि विल°

67. 1. AE.² दितत्त्वेन. 2. A. स्थित्वा. 3. P. °न्तानावर्तनात्. 4. A श्रोत्रदेशं, E² श्रोत्र.....M श्रोत्रेणा. 5. AE² बहुभूनान्न.

68. 1. M has some blank space after °ग्रहे.

**बुद्ध्यवग्रहभेदाच्च व्यवहारात्मनि स्थितेः ।**
**तावानेव क्षणः कालो युगमन्वन्तराणि वा ॥ ६९ ॥**

क्षणसन्तानो यावान् सङ्कलनाबुद्ध्यैकत्वेन गृह्यते[1] तावानेकः कालो मासादिरूपो व्यवस्थाप्यते। अपचयकाष्ठागतस्तु क्षण इत्युपचयकाष्ठाप्राप्तो मन्वन्तरमित्यादीति भावतो द्रव्यभूतस्यैकत्वेऽपि कालस्य कल्पनेयं बौद्धी। बुद्ध्यनुसंहारकालपक्षे तु मुख्यैवेयम् ॥ ६९॥

ननु नालिकास्रुत्या क्षणाहोरात्रादिकालव्यवहार इति सैवास्तु कालः, किमपरेण तेन कल्पितेनेत्याशङ्क्याह ।

**प्रतिबन्धाभ्यनुज्ञाभ्यां नालिकाविवराश्रिते ।**
**यदम्भसि प्रक्षरणं तत्कालस्यैव चेष्टितम् ॥ ७० ॥**

घटिकोदरवर्तिनः[1] पयसश्छिद्रान्निःसरतो यत् कस्यचिद् भागस्य पूर्वं निस्सरणमपरस्य तदैवानिस्सरणं तत् कालकृतशक्तिप्रतिबन्धाभ्यनुज्ञासामर्थ्यम् । अन्यथा गुरुत्वादम्भोऽवयवी[2] समस्तावयवव्यापी[3] युगपन्निर्गच्छेत् । क्रमेण तु निस्सरणात् कालोऽत्र सव्यापारो व्यतिरिक्त इति नाम्भःस्रुतिरेव कालः । तत्परिच्छेदिका त्वसौ । सा हि निमेषक्रियया प्राणप्रवाहेण बुद्धिक्षणसन्तानेन वा [4]परिच्छिन्ना तदपरकालपरिच्छेदायालम् । निमेषादिरपि सूक्ष्मेण[5] क्रमरूपेण कालेन परिच्छिन्न इति क्रमाख्या कालशक्तिः सूक्ष्मरूपानुस्यूता सर्वभावेष्वशक्यप्रतिक्षेपानुभूयमानत्वात् । सर्वा हि संवित् क्रमरूपाच्छुरितेति अक्रमं परं तत्त्वमग्नीषोमस्वभावं सोमसूर्यादिरूपविवर्तदशा[6]वलम्बनेनाविरतपरिवर्तं प्राणिनामनुग्रहोपघाताय जग[7]दण्डवृत्तिमातनुते । एतच्च वाक्यपदीये विस्तरेणास्माभिर्निर्णीतम् ॥ ७० ॥

कालस्य तर्ह्येकरूपत्वाच्छिद्रापचयोपचयाभ्यामम्भःस्रुतेस्तद्भेदः कथमवधार्यत इत्याशङ्क्याह ।

**अल्पे महति वा छिद्रे तत्संबन्धे न भिद्यते ।**
**कालस्य वृत्तिरात्मापि तमेवास्यानुवर्तते ॥ ७१ ॥**

अल्पेन नालिकाच्छिद्रेणाम्भःसंबन्धे सति कालस्य व्यापारः प्रतिबन्धाभ्यनुज्ञालक्षणो न भिद्यते। नापि महता छिद्रेणाम्भःसंबन्धे सति[1] । एवमपि च कालात्माभिन्नरूपोऽपि

69 1. E[2] गृह्यते न गृह्यते.

70. 1. P °र्तिनीम्मसश्छिद्रा°. 2. AE[2] °येवि. 3. AE[20] °व्यापि. 4. A °वाऽपरिच्छिन्नतद°. 5. AE[2] सूक्ष्मेण रूपेण कालेन. 6. AE[0] दशाल°. 7. A जगदन्तमावृत्ति°. जगदन्धतृ°.

71. 1. AE[2] here insert : कालस्य व्यापारः प्रतिबन्धाभ्यनुज्ञाने कालस्य वृत्तिरात्मापि and om. एवमपि च कालात्माभिन्नरूपोऽपि.



तमेव छिद्रसंबन्धम् **अनुवर्तते** । तदनुवर्तनाच्चायमल्पच्छिद्रे प्रतिबन्धाभ्यनुज्ञाबाहुल्याद् दीर्घः कालोऽवधार्यते । अयमर्थः । अभेदेऽप्यत्र कालस्य छिद्रविशेषसंबन्धो[2]पधीयमानो भेदोऽवधार्यत इति । अत एव घटिकावरुद्धमम्भो न पतति । छिद्रमुक्तं तु पततीति किं कालेन कृत्यमिति न वाच्यम् । मूलभूतस्य कालव्यापारस्याप्रत्याख्येयत्वात् । ये एवोपहितप्रतिबन्धाभ्यनुज्ञे [3]कालकृते ते एव घटिकावयवच्छिद्राभ्यामनुविधीयेते । यथा बीजस्याङ्कुरजननप्रतिबन्धाभ्यनुज्ञे कालकृते कुसूलक्षेत्राभ्यां पोष्येते। अत **एवात्मापि तमेवास्यानुवर्तते** इत्युक्तम् । दृष्टस्य हि कारणस्य काल[4]शक्तेश्च परस्परमानुगुण्यात् [5]सहभावान्नैकतरावलम्बनेनेतरप्रतिक्षेपो न्याय्यः ॥ ७१ ॥

किं बहुना, स्वशक्तिवैचित्र्यादभिन्नोऽपि कालात्मा सर्वत्र भावेषु भेदमादर्शयतीत्याह ।

**आक्रीड इव कालस्य दृश्यते यः स्वशक्तिभिः ।**
**बहुरूपस्य भावेषु बहुधा तेन भिद्यते ॥ ७२ ॥**

कालमुखप्रेक्षित्वाद् भावानामसौ प्रभुरेतैराक्रीडैराक्री[1]डमानस्तदुन्मज्जननिमज्जने [2]डोलादिक्रीडावत् सम्पादयन् वर्तमानादिरूपवैचित्र्येण स्वसामर्थ्याध्यासितमात्मभेदमुद्दर्शयति ॥ ७२ ॥

तथा हि ।

**त्वचिसारस्य वा वृद्धिं तृणसारस्य वा दधत् ।**
**तावद् तद्वृद्धियोगेन कालतत्त्वं विकल्पते ॥ ७३ ॥**

**तावत्** एव तत्परिमाणमेव **कालतत्त्वं** प्रतिबन्धाभ्यनुज्ञामात्रहेत्वभिन्नं वंशस्य वेणोः क्रमेण[1] फलप्रसवपर्यन्तां **वृद्धिम्** उपचयं सम्पादयत् ततोऽधिकतरां तालस्य वृद्धिं जनयत् तेन वृद्धिसंबन्धभेदेन भावेष्वाक्रीडभूतेन भिद्यते । तथा च वंशस्य वृद्धिपर्यन्तः कालोऽल्पः तालस्य तु भूयानवतिष्ठते । एवमन्यत्रापि भावेषु जन्मस्थितिविनाशावस्थाभेदसंबन्धेन काल[2]विभाग उदाहार्यः ॥ ७३ ॥

यदि तर्ह्यवस्थाभेदात् कालभेदः अवस्थाविनाशादपि तस्य विनाशे नित्यत्वं न स्यादित्याशङ्क्याह ।

2. A °न्धादवधी°. 3. M om. कालकृते. 4. AE[2] काण्डश°. 5. M सहभाव्य, P साहभाव्ये.

72. 1. AE[2] om. आक्रीडमानः. 2. A भेदादिक्रीडा°. P डोलाक्रीडावत्, M दोलादिक्री°

73. 1. om. क्रमेण, E[2] कर्म..... 2. M कार्यभाग.

**व्यतिक्रमेऽपि मात्राणां तस्य नास्ति व्यतिक्रमः ।**
**न गन्तृगतिभेदेन मार्गभेदोऽस्ति कश्चन ॥ ७४ ॥**

कालाधिकरणत्वाद्भावानां तदवस्थानां चाप[1]गमेऽपि नाधारापगमः । यथा गन्तॄणां तद्गमनानां चोपरमेऽपि मार्गोऽध्वा नापैति । क्रियाव्युपरमादेव हि वसन्तादिकालोपरमो व्यवह्रियते परम् । न वस्तुतः कालोऽपैति, नित्यत्वात् ॥ ७४ ॥

तथा हि ।

**उदयास्तमयावृत्त्या ज्योतिषां लोकसिद्धया ।**
**कालस्याव्यतिपातेऽपि ताद्धर्म्यमिव लभ्यते ॥ ७५ ॥**

सूर्यादिसञ्चारोपनीतविभागः कालात्मेति तदपगमादेवानपयन्नपि व्यपगत इवावधार्यते गतमहो व्युष्टा रजनी निर्गतः शिशिर इति ॥ ७५ ॥

यतश्च ज्योतिर्गत्या कालनानात्वव्यवहारः ततः सैव काल इत्यर्वाग्दर्शनाः केचिन्मन्यन्त इत्याह ।

**आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।**
**भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥ ७६ ॥**

उदयावधिरस्तमयावसानः सूर्यसञ्चारो दिवसः । अस्तमयादिरुदयपर्यवसानो रात्रिः कालः । स च पञ्चदशावृत्तिः पक्षः । त्रिंशत्कृत्वो मासः । चन्द्रमसः सकलनक्षत्रातिक्रमो मास इत्येवं वा कल्पना । बृहस्पतेरेकराशिसञ्चरणं संवत्सरः । एवमन्येषामपि ग्रहनक्षत्राणां ज्यौतिषशास्त्रप्रसिद्धेन गतिप्रचारभेदेन युगमन्वन्तरकल्पमहाकल्पादिप्रविभागः कालोऽनुसर्तव्यः ॥ ७६ ॥

तदेवमेषां क्रिया कालः प्रसिद्धा सती क्रियान्तरमप्रसिद्धं परिमापयतीत्याह ।

**क्रियान्तरपरिच्छेदप्रवृत्ता या क्रियां प्रति ।**
**निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते ॥ ७७ ॥**

सूर्यादीनां गतिप्रचारो दिवसादिशब्दवाच्यः, गोदोहादिक्रियाविशेषश्च परिच्छिन्नपरिमाणत्वात् तदपराप्रसिद्धपरिमाणा[1]स्यादिक्रियाविशेषपरिच्छेदहेतुत्वात् कालाख्यामासादयति । दिवसमधीते, रात्रिमधीते, गोदोहमास्ते । **क्रियान्तरपरिच्छेदप्रवृत्ता** इत्यनेनैव गतत्वात् **क्रियां प्रति** इति पुनर्वचनमपेक्षाभेदेन क्रियायाः कालत्वानियमख्यापनार्थम् । तथा चान्यतः प्रसिद्धपरिमाणो गोदोहनादिरपि देवदत्तादिगता[2]स्यादिक्रियाः[3] परिच्छिन्दन् भवत्येव कालः ॥ ७७ ॥

74. 1. E² चावगमं विना.
77. 1. A° णा स्यादिति क्रि° 2. A °तास्याादि° 3. M °यामपरि°



अन्तर्मुखोऽपवरकान्तर्गतः सूर्यादिसञ्चारं नालिकास्रुतिं चानवधारयन् कथं कालप्रविभागमवैतीत्याह ।

**ज्ञाने रूपस्य संक्रान्तिर्ज्ञानेनैवानुसंहृतिः ।**
**अतः क्रियान्तराभावे सा क्रिया काल इष्यते ॥ ७८ ॥**

अन्तर्मुखोऽपि [1]प्रकृतां काञ्चिदेव प्राणप्रवाहादिरूपां क्रियां बुद्धौ संक्रान्ताकारामवैति । बुद्ध्यन्तरैश्च तान्[2] बुद्धिनिवेशिनः क्रियाक्षणान् सङ्कलयति । तथा[3] च बाह्यक्रियाभावेऽपि बुद्धिनिवेशिनीयं क्रिया[4] बाह्यापरक्रियापरिच्छेदकत्वात् काल इत्युच्यते । तथा हि भूयसीनां बुद्धीनामुदये बाह्ये चिरकालत्वमवैति, अल्पीयसीनामुदये क्षिप्रकालत्वमिति । प्राणचारेण[5] कलयन्त्येवार्थान् योगिनः, अन्येऽपि प्राणक्षण[6]गणनयेति प्रसिद्धमेतत् । तथा हि षष्ट्युत्तरशतत्रयावधिप्राणप्रचारनालिकाकलनया सहस्राण्येकविंशतिः षट्शतानि चाहोरात्रगणनामाहुः ॥ ७८ ॥

यदि तर्हि क्रियातिरिक्तो नास्ति कालः तदा सत्ताख्यायाः क्रियायाः सत्तान्तरेण क्रियाभूतेन योगाभावात् भूता सत्तेति कथमुच्यत इत्याशङ्क्याह ।

**भूतो घट इतीयं च सत्ताया एव भूतता ।**
**भूता सत्तेति सत्तायाः सत्ता भूताभिधीयते ॥ ७९ ॥**

भूतो घट इत्यत्र कस्य[1] भूतत्वम् । न तावद् घटस्य, तस्य द्रव्यात्मकत्वात् कालेनासंस्पर्शात् । क्रियाणां साध्यस्वभावानामधि[2]करणभूतेन कालेन संबन्धात् । धातुवाच्या तु सत्ताख्या क्रिया भूतेति निष्ठाप्रत्ययेनावेद्यते । सा तु सत्तात्र घटसमवायिनीति पारम्पर्येण घटेन सम्बन्धो न तु साक्षाद् द्रव्यकालयोः व्यतिरिक्तकालदर्शनेऽप्यस्ति संबन्धः । क्रियामुखस्तु सः । एवं **भूता सत्ता** इत्यत्रापि शाब्देन धातुवाच्यान्या सत्ता क्रियारूपा, अन्या च प्रातिपदिकवाच्या द्रव्यायमाणेति सत्तान्तरयोगे धातुवाच्यसत्ताभूतत्वद्वारेणैव द्रव्यायमाणसत्ताभूतत्वसम्प्रत्यय इति न काचिदनुपपत्तिरित्यर्थः । नित्याया अपि सत्तायाः स्वाश्रयोपधानेन भेदे सति तद्द्वारेण त्रिकाल्योगोऽविरुद्धः । गतमेतत् ॥ ७९ ॥

इदानीं कालस्वरूपे निर्णीते तदाश्रयः शास्त्रे व्यवहारो विचा[1]र्यते ।

'वर्तमाने लट्' (P. 3.2.123.)

78. 1. A तत्कृतां. 2. A तां. 3. A तया च. 4. A बाह्यापरक्रियापरक्रियापरि°. M om. बाह्यापरक्रिया. 5. A प्राणप्रचारेण, M प्रकर्णचारेण. 6. A प्राणनक्षण°, E² प्राणलक्षणग°
79. 1. om. कस्य, E² तस्य. 2. P °मपि करण°,
80. 1. A निर्धार्यते,

इत्यत्रोक्तम्

" नित्यप्रवृत्ते च कालाविभागात् " ( Vā. 2 on P. 3.2. 123. M.Bhā. II, p. 123, 1.5 )

इति। नित्येष्वर्थेषु कालविभागाभावाद् वर्तमानत्वानुपपत्तेः शासितव्या भवन्ती[2]।
5 ननु च सम्प्रतितनत्वं वर्तमानत्वं भूतभविष्यत्प्रतियोगि। नित्येषु चाविच्छेदेन प्रवर्तमानेषु भूतभविष्यतोरभावात् सुतरां तदुपपत्तिः। अत्रोच्यते। इहेमे कालनिमित्ता व्यपदेशाः परस्परव्यावृत्तशरीराः कालकृतोपकाराणामेव भावानां युक्ताः। ते च जन्मवन्तः। तत्र हि नियतावधिजन्मपरिग्रहे[3]णैतदुपपत्तिः। तथा हि साधनसन्निधानेऽभिमुखोत्पत्तयो भाविनः। साधनादवाप्तजन्मानो यावदवस्थानं वर्तमानाः व्यपगत-
10 शरीरा भूताः। तदयं वर्तमानव्यपदेशो भूतभविष्यदवधिमध्यवर्ती यत्र भूतभविष्यन्तौ न स्तः तत्र नैव सम्भवति। तदुक्तं भाष्ये

भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानः... ( M Bhā. II. p. 123, l. 7. )

इति। यत्र हि भूतभविष्यन्तौ तत्र तत्प्रतियोगी वर्तमान इत्यर्थः। नित्येषु च भूतभविष्यतोरभावात् तदभावः। प्रक्रमापेक्षया च भवन्ती शिष्येत्युक्तम्। सर्व
15 एव तु कालप्रत्ययाः शिष्याः। अत एवाह

' कालाविभागात् ' ....

इति। एवं च कृत्वात्र कालावच्छेदाभावात् कालोपाधिरूपा क्रियैव नास्ति। सा हि कालोपाधिः सक्रमा साध्यमानस्वभावा। तदभावश्चात्रेति क्रियाकारकोपाधिनिबन्धना सर्वैव व्यवस्था वक्तव्येत्युक्तं भवति। अत्र परिहार उक्तः।

20 ' सन्ति च कालविभागाः ' ( Vā. 5 on P. 3. 2 123, M.Bhā. II. p. 123, l. 164 )

इति। [4]'स्थास्यन्ति पर्वतास्तिष्ठन्ति, अस्थुरिति। पुनश्चोदितम्—

' किं शक्यन्त एते शब्दा प्रयोक्तुम् इति सन्ति कालविभागाः। "
( M. Bhā. II. p. I23, l. 18 )

25 इति। अयमभिप्रायः। [5]'कालविभागादेवैषां शब्दानां प्रयोगोऽसिद्ध इति चोद्ये कथमेव एव निश्चायकः कथ्यत इति। अत उक्तम् —

' नावश्यं ( शब्द[6] ) प्रयोगादेव' ( M. Bhā. II. p. 123, l. 19. )

इति। पूर्वापरीभूतस्याख्यातात्[7] प्रतीतेः शब्दप्रमाणकानां तत एवार्थव्यवस्थानाद्

2. E² भवति. 3. A° ग्रहे नैतदुपपत्तिः 4. This refers to M. Bhā. which has तिष्ठन्ति पर्वताः, स्थास्यन्ति पर्वताः, तस्थुः पर्वता इति ( M. Bhā II. p. 123. l. 17 ). 5. P कालावि°. 6. A² इयं प्र° 7. AE² °स्याप्रती°



भवेदपि शब्दप्रयोगः कालविभागे प्रमाणं किन्त्ववधीर्यापि तमत्रार्थ एव कालविभागः प्रतिपाद्यत इत्यर्थः। तदाह —

" भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेरधिकरणम् "
( M. Bhā. II. p. 123. l.19. )

इति। एतद्भाष्यं व्याचष्टे -- 5

**परतो भिद्यते सर्वमात्मा तु न विकल्पते।**
**पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते॥ ८०॥**

पर्वतनद्यादीनामपि नित्यानामपरतत्सहचरितपदार्थगतसत्तोपाश्रयेण[8] सत्ताभेदात् कालभेदोपपत्तिः। सर्वमेव हि भावजातमुपाधिसंसर्गवशेन भिद्यते न तु स्वरूपेणेति

' भिन्ना इति परोपाधिः ' ( Vāk. III. जा. 20. ) 10

इत्युक्तमेव। राज्ञां हि[9] क्रियाः पर्वतादिस्थितेर्भेदकत्वाद् आश्रयत्वेन व्यवह्रियन्ते। यथा हि राजक्रियाणां त्रैकाल्यं क्रमिकत्वं साध्यमानता च तथा तत्सहचरितानामपि पर्वतादीनां स्थितेस्तदध्यारोप[10] इति गौणस्त्रिकालविषयः प्रयोगोऽत्रोपपन्न इति न्याय्या भवन्ती॥ ८०॥

अथवा राजक्रियासाहचर्येण वर्तमाना स्थितिः [1]'प्रत्यवस्यमाश्रयोपकारमनुभवन्ती 15 पर्वतादीनां [2]'स्वयमेव भिद्यते। सहचरितक्रियाभेदेन तु भेदस्तस्याः सारूप्यादनधिगतसतत्त्वो ज्ञाप्यत इत्याह।

**प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः।**
**साहचर्येण भिद्यन्ते सरूपावयवक्रियाः॥ ८१॥**

विसदृशस्वभावा अवयवक्रिया येषां व्यापाराणां ते पचिभिदिक्रियारूपाः 20 प्रसिद्धभेदा भिन्न[3]काला विलक्षणा एव प्रतीताः। अधिश्रयणादयो हि पच्यवयवा विलक्षणाः, एवमुद्यमनादयो भिद्यवयवाः। ये तु सदृशावयवक्रियाव्यापाराः पर्वतादेरात्मभरणलक्षणस्थितिरूपाःते सादृश्यादेव दुरवधारभेदा राजक्रियाभि[4]र्विसदृशसन्तानाभिरवधृतविभागाभिः सहचरिताभिः कालभिन्ना ज्ञाप्यन्ते। अतश्च ता राजक्रियाः परिच्छेदकत्वादाधारभूताः पर्वतादिस्थितेः कालत्वेन व्यवह्रियन्ते। सूर्यादिसञ्चारविशेषोपलक्ष्य- 25 माणभेदाश्चापि पर्वतादिस्थितयः राजक्रियाणामुपलक्षणत्वात्। प्रसिद्धतरा हि राज्ञां

8. M om. अपरतत्सहचरितसत्तोपाश्रयेण– साध्यमानता च तथा. 9. AE. विक्रिया. 10. AE² ° पात्.

81. 1. M पर्यपस्थ°. 2. AE² °दीनां ( तत् ) सहचरितानां भेदेन तु सत्य ( त्या ) स्तस्या। सारूप्यादनमि ( धि ) गतं ज्ञाप्यत इत्याशङ्क्याह. 3. AE² कालविलक्षणा एव प्र° M भिन्नकालाक्षगा एव. 4. AE² °क्रियाविसदृ°

क्रिया भाष्य उक्ताः । आधारावष्टम्भेन स्थितेः प्रतिक्षणमुपजनात् समाश्रितक्रमत्वे क्रियात्वमप्यविरुद्धम् । तथा हि

'जन्मैवाश्रितसारूप्यं स्थितिः' ( Vāk. 111. क्रि 26 )

इत्युक्तम् । नित्यानामपि चाधारेण प्रतिक्षणं ध्रियमाणत्वमविकल्पितपौर्वापर्यमेव जन्मसमाख्यां प्रतिपद्यते । शाब्दे च व्यवहारे शब्दार्थोऽर्थ इत्याख्यातात् सक्रमः प्रतीयमानोऽर्थः क्रियालक्षणमनुपतत्येव ॥ ८१ ॥

उक्तमिदं वार्तिके

"प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात्" ( Vā. I. on P. 3. 2. 123 M. Bhā. II. p. 123. l. 2. )

इति । [1]प्रवृत्तक्रियस्य मुख्यफलानवाप्तेर्यदा विरामो न भवति, अथ च क्रियान्तरारम्भात् सा प्रवृत्ता क्रियातीता, तदा वर्तमानप्रत्ययो वक्तव्यः । [2]इह वसामः । इह पुष्यमित्रं याजयामः इति । क्रियान्तरे प्रवृत्तो [3]याजयन्नप्येवं प्रयुङ्क्ते दक्षिणादिमुख्यफलानवाप्तेश्च याजनाभिसन्धेरविरतः । अत्र समाधिरुक्तः

'न्याय्या त्वारम्भानपवर्गात्' ( M. Bhā. II. p. 123. l. 9. )

इति । मुख्यस्य फलस्या[4]नभिनिर्वृत्तेस्तत्पर्यन्तत्वाच्च क्रियायाः क्रियान्तरव्यवधानेऽप्यनपवृक्तैव क्रियेति वर्तमानप्रत्ययो भवन्ती न्याय्या । अथान्तरा क्रियान्तरैर्विच्छेदादवर्तमानत्वमभिमतमत्र चकास्ति[5] तदा

'अस्ति च मुक्तसंशये विरामः' ( Vā. 4. on P. 3. 2. 123. M. Bhā. ) p. 123. l. 12 )

इत्युक्तम् । भुङ्क्ते इत्यादावपि हि वर्तमाने निस्संशयोऽस्त्येवावान्तरक्रियाव्यवधिः । तथा हि

"सोऽप्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबति ।"
( M. Bha II p. 123 l. 14)

इति भाष्य उक्तम् । तदेतद् व्याचष्टे ।

**व्यवधानमिवोपैति निवृत्त इव दृश्यते ।**
**क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ॥ ८२ ॥**

---

82, 83. AE[2] प्रवृत्तफलानवाप्तेर्यदा विरामो भवति. 2. Cf. M Bha. II. p. 123 l, 3. 3. M यजन्नप्येवं. 4. A °लस्यान्तपर्यन्त°. 5. A नास्ति, E[2] चान्ति, M तदान्ति.



**न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते ।**
**सर्वत्र हि क्रियान्येन सङ्कीर्णेवोपलभ्यते[6] ॥ ८३ ॥**

पूर्वापरीभूतावयवसमाहारात्मको[7] भुज्यादिक्रियासमूहोऽन्तरालपतिताभिर्हाससङ्कथनादिक्रियाभिरतीतानागतलक्षणानां व्यवधानमिव प्राप्नोति । तृप्तिफलत्वाच्च भुजेरेकः सन्तानो व्यवस्थित एवेति इवशब्दः[8] न हि समूहव्यवधानम्[9], अपि तु [10]°क्षणानाम् । न च तावन्मात्रं क्रियास्वरूपम् । अनागतावयवाभावं चाभिप्रेत्यातीतावयवकल्पनया **निवृत्त इव** स क्रियासमूहो दृश्यते । एवमपि [11]चान्तरालक्रियाभिरवयवद्वारेण विच्छिन्नस्वभावोऽसावा फलप्राप्तेरनुवर्तनादविरतोऽवस्थित एव वर्तमानस्वभावः । न केवलं भुज्यादिरेव, यावद्धाससंकथनादिरपि क्रियान्तरैर्व्यवधीयत एव । अक्षिनिमेषादे (दिभिः?) रपि व्यवधानम्, अन्ततः प्रश्वासोच्छ्वासादेरपि भावात् । विश्रम्य विश्रम्य च क्रियारम्भात् **सङ्कीर्णेव** न तु सर्वथा सङ्कीर्णा, आ फलप्राप्तेर्विरामाभावात् । अन्तरालक्रियाणामवश्यंभाविनीनां सहकारित्वस्यायोगात् । सन्दर्शनादिफलपर्यन्तः क्षणसमूहः क्रिया । तत्र च भौतिकव्यापारोपरमेऽप्यन्तरा[12] सन्दर्शनप्रार्थनादेर्मानसव्यापारस्य यावत् फलाधि[13]गमस्तावदविराम एव । एवं भोजनादेरप्यविरतत्वाद् वर्तमानता सिद्धा ॥ ८२, ८३ ॥

एवं तावत् फलावसानः समूहः क्रियेति फलान्तर[1]हेतुक्रियान्तरव्यवधानमुपेत्यापि वर्तमानत्वं समर्थितम् । यद्वान्तरालप्रवृत्तं क्रियान्तरं भिन्नजातीयमेव न भवतीत्याह ।

**तदन्तरालदृष्टा वा सर्वैवावयवक्रिया ।**
**सादृश्यात् सति भेदे तु तदङ्गत्वेन गृह्यते ॥ ८४ ॥**

तस्या भुज्यादिक्रियाया मध्यवर्तिनो ये क्रियाभेदा हसितादयस्ते भुज्यादेरवयवा एव, गुणव्यापाररूपा आचमनादिवदुपकारकत्वात् । ततश्चाचमनादिभिः **सादृश्यात्** सत्यपि हासादीनां क्वचिदसन्निधानेऽपि भुजिनिर्वृत्तेः प्रसिद्धतरैर्दध्युपसेचनादिभिरङ्गैर्भेदे भुज्यङ्गत्वेन ग्रहणं यथा द्विपुरुषवाह्ये भारे [2]तृतीयस्योपनिपततः । तुशब्दोऽप्यर्थे । सुहृदो हि निर्वृतचेतसः परस्परं हाससङ्कथनादि कुर्वाणा एव भुजिं प्रतिपद्यन्ते । तदेवमत्र प्रत्यवयवं क्रियासमाप्ति[3]मादिकर्मणि

"न्याय्या त्वाद्यपवर्गात्" ( Vā. 5 on P. 3. 2. 102, Bhā. II. p. 114. l. 4. )

---

83. as part of the commentary. 7. AE[2] °तसमावय° 8. E[2] °शब्देन हि. 6. AE[2] give Ka.
9. A °धाने. 10. M लक्षणानाम्. 11. M° चाक्रि°. 12. A °रालदर्श° 13. AE[2] °फलावग°, P फलाभिग°

84. 1. AE[2] फलान्तहे° 2. AE[2] भा अस्योपनि° 3. A °तिराचमनादि°.

इति निष्ठासमर्थन[4]न्यायेनाभिप्रेत्य पूर्वपक्षः प्रवृत्तः। फलपर्यन्तक्रियासमूहाश्रयेण तु सिद्धान्त इति स्थितम् ॥ ८४ ॥

इदानीं सर्वत्रैव वर्तमानत्वं क्रियाया अनुपपन्नमित्याक्षिपति।

**सदसद् वापि वस्तु स्यात् तृतीयं नास्ति किञ्चन।**
**तेन भूतभविष्यन्तौ मुक्त्वा मध्यं न विद्यते ॥ ८५ ॥** 5

साध्यमानावस्था क्रिया भण्यते। तत्र च यः क्षणोऽतीतः स [1]सन् सिद्धस्वभाव इति क्रिया तत्रातीता। यश्चासन्[2] स साध्यः स भावी क्षण इति तत्र भविष्यदुपाधिका क्रिया। न चान्योऽस्ति कश्चित् क्षणः सदसदुभयरूपः। विरुद्धस्वभावस्यैकत्वविरोधात्। ततश्च वर्तमानता धात्वर्थविशेषणं नोपपद्यते। तदुक्तं भाष्ये

10 अनागते न पतसि अतिक्रान्ते च [3]काक न।

यदि सम्प्रति पतसि कृत्स्नो लोकः पतत्ययम्। हिमवानपि चलति

( M. Bhā. II. p. 124. 13 )

इति। परोक्षा क्रिया फलेनानुमीयमानातीतत्वात् कथं वर्तमानप्रत्ययेनोच्येत। एवं हिमवानपरिदृष्टसंयोगविभागक्रियाकार्यः [4]कस्मान्न पततीति वर्तमानप्रत्ययेन 15 व्यपदिश्येतेत्यर्थः ॥ ८५ ॥

साध्यमानावस्थत्वमेव क्रियायाः स्वेन रूपेण सत्त्वं वर्तमानत्वमिति चेदाह।

**निर्वृत्तिरूपमेकस्य भेदाभावान्न कल्पते।**
**सदसद् वापि तेनैकं क्रमरूपं कथं भवेत् ॥ ८६ ॥**

एक[1]स्यार्थात्मनो विभागाभावान्निष्पत्तिरूपं क्रमरूपत्वं क्रियालक्षणं नास्ति। तथाहि 20 सद्वा वस्तु स्याद् असद्वा। तत्र सद् विद्यमानत्वादेवानिर्वर्त्यमा (नम?) नाश्रितक्रमरूपम्, असदप्यसत्त्वादेव तदवस्थायामनाश्रितनिर्वृत्तिरूपं कथं क्रमिकं स्यात्। न ह्यसतः सर्वधर्मशून्यस्य कश्चित् क्रमः। तृतीयराश्यभावाच्च निर्वर्त्यमानं क्रमिकं क्रियारूपं नास्तीति कथं[2] तद् वर्तमानं स्यात् ॥ ८६ ॥

अथोच्यते। बह्वः क्षणाः समाश्रितपौर्वापर्याः क्रियेति सा फलोपजनात् प्राग् 25 वर्तमानतामासादयेदिति। तदपि न। यतः

---

4. A °र्थनेन न्याय्येत्यभि°.

85. 1. A² स च सि°, E² स सवनसि°. M. समसि. 2. AE² यश्चयाससा° 3. A का कथा. 4. AE² तस्माच्च.

86. 1. E² एतस्या° 2. M किम्.



**बहूनां चानवस्थानादेकमेवोपलभ्यते।**
**यथोपलब्धिस्मरणं तत्र चाप्युपपद्यते ॥ ८७ ॥**

क्रमजन्मानोऽवयवा विप्रकीर्यमाणस्वभावाः, न युगपत्कालभाविनः। ततश्च सन्निहित एक एव [1]क्षणः समुलभ्यत इति तस्य भेदाभावात् क्रमाभावः। अथ बह्वः क्रमिका युगपत् स्मर्यन्त इत्युच्यते, तदपि न। यस्मादनुभवपूर्वकं स्मरणमेकस्य च 5 क्रमा[2]नुभवो न वृत्त इति कथं स्मरणमपि तत्र क्रमावेदकं स्यात् ॥ ८७ ॥

न चापि बहूनामेकक्रियात्मकत्वं युज्यत इत्याह।

**सदसद्रूपमेकं स्यात् [1]सर्वस्यैकत्वकल्पने।**
**निर्वृत्तिरूपं[2] निर्वृत्तेः सामान्यमथवा भवेत् ॥ ८८ ॥**

अतीतानागतानां सदसद्रूपाणां क्षणानामेकक्रिया[3]त्मत्वाभ्युपगमे सर्वस्य 10 वस्तुनः सदसद्रूपमयं विरुद्धमेकत्वं प्रसज्येत। न चैतद्युक्तं विरुद्धानामनुभवेनैकत्वबाधात्। यद्वा बहूनां भिन्नानामेकत्वविरोधात् कश्चिदन्वयी स्वभाव एकः कल्पयितव्यः। तथा च **निर्वृत्तेः** निष्पद्यमानायाः साध्यस्वभावायाः क्रियायाः **निर्वृत्तिरूपं** निष्पत्तियोग्यत्वं प्रत्येकं क्षणानामेकक्रियात्मकत्व[4]रूपं सामान्यं भवेत्। तथा चैका क्रिया न सिध्येदित्यभिप्रायः। बहूनां ह्यन्वयी कश्चित् स्वभावोऽङ्गीकृतः क्रियात्मा, न तु बह्व एका 15 क्रियेति क्रियाव्यक्तेरभाव[5] एव। भिन्नानामेव हि क्षणानां निर्वृत्तिरूपान्वयो न तु प्रत्येकं क्रियाव्यक्तिस्वभावता तेषां सिध्यति। ततश्च कथं वर्तमानाः क्रियाः ॥ ८८ ॥

अत्र समाधिमाह।

**कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत् तथा।**
**आत्मतत्त्वेन गृह्येत सा चास्मिन् वर्तमानता[1] ॥ ८९ ॥** 20

[2]इहैकत्वं क्रियायाः क्षणसमुदायरूपायाः कल्पितम्। तथा हि—एकफलोद्देशेन प्रवर्तमाना नियतपौर्वापर्याः [3]क्षणाः क्रियेति फलभेदादसावेका एवं यथायथं फलभेदेन भिद्यते क्रिया। अत्र च सदसत्त्वेऽपि क्षणानां [4]वर्तमानतोपपद्यत एव। न हि सत्त्वं वर्तमानतालक्षणं किन्तु प्रारब्धापरिसमाप्तत्वम्[5]। तच्च यावतः क्षणसमूहस्य फलावधिप्रवृत्तिः [6]तावतः प्राक् फलोपजनादभेदेनाध्यवसितस्यास्त्येव। कार्योत्पत्तौ च स एव 25

---

87. 1. E² M लक्षणः 2. M क्रानुभवो.

88. 1. AE² सर्वश्चैक°. 2. E² रूपा. 3. P °ला त्मत्वा°. 4. E² P °त्मकत्वं रूपं. 5. AE² °केर्भाव एव.

89. 1. M वर्तमान. 2. M om इहैकत्वं–सदसत्त्वेऽपि क्षणानां. 3. A °र्थक्षणाः, E² नियतः पौ°. 4. M वर्तमानत्वं. 5. AE² °माप्तत्वं. 6. A कालतः कालोपजननाद्. तावत् प्रार्थनोपजवात्

समर्थः । स च मनोव्यापारपूर्वभावी कायव्यापारपर्यन्तः साधनसंरम्भफलानुमेयः । तत्र च स्वेन क्रमात्मकेन धर्मेण [7]युक्तं तत्समूहरूपं यद् **आत्म**[8]**तत्त्वेन** आत्मीयेन विद्यमानेन स्वभावेन **गृह्येत** [9]तदा तस्यैवंविधस्य येयं विद्यमानता **सा वर्तमानता । वा**–शब्दो वक्ष्यमाणापेक्षया विकल्पद्योतकः । अयमर्थः । नियतपौर्वापर्यः समूहस्तावत् क्रमिकः । [10]तस्य च सदसद्रूपकत्वेऽपि [11]फलावधि परस्परमध्यस्तक्रमः [12]स्वकाले सन्निहित एकैकोऽपि क्षणो वर्तमानतामनुभवति । यद्यपि च नासावेकः क्रमिक इति न क्रिया तथाप्यपरक्षणगतः क्रमः तत्रानुभववासनया निश्चीयत एवेति न कश्चिद् दोषः । तदुक्तं भाष्ये

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद् विचेष्टितम् ।

तद[13]पेक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ॥ ( M. Bhā. II. p 124, l. 8 )

इति । फलकामना मानसो व्यापारो भौतिकक्रियाप्रवृत्तौ हेतुः । क्रियार्थं[14] विचेष्टितं साधनानां [15]संरम्भः । सामान्यविशेषभावेन[16] च तदर्थता । एवञ्च मानसव्यापारपूर्वकः कायव्यापारः फलावसानोऽभेदेनाध्यवसितो वर्तमानक्रियास्वभावः स्ववाचकशब्दप्रतिपाद्य इति स्फुटमुक्तम् ॥ ८९ ॥

वाशब्दसूचितं पक्षान्तरमाह ।

**क्रियाप्रबन्धरूपं यदध्यात्मं विनिगृह्यते ।**
**सङ्क्रान्तबिम्बमेकत्र तामाहुर्वर्तमानताम् ॥ ९० ॥**

पूर्वं क्षणसमूहस्यैकत्वमेकफलोद्देशेन समर्थितम् । इदानीं सङ्कलनाबुद्ध्युपारूढस्य बुद्ध्याकाररूपत्वेन [1]भाविकमेकत्वमुच्यते । तथाहि–विप्रसृतावयवः क्रियाकलापो ज्ञानस्वभावे सङ्क्रान्ताकार एकस्मिन् यदावधार्यते तदा तस्मादेकज्ञानादभेदात् [2]तद्वद् वर्तमान एकश्च निश्चीयते । क्रमेणानुभूतानामपि च सङ्कलना भवत्येवानुभववासनायाः प्रत्यासन्नत्वात् । अन्यथा समुदायादिविज्ञानाभावः । अनुभवपूर्वकत्वं हि स्मरणस्य नियतं न तु क्रमेणोपलब्धं युगपन्न[3] स्मर्यते, शतादिप्रत्ययाभावप्रसङ्गात् । बुद्ध्याकारस्य च [4]बहीरूपत[5]याध्यवसायाद बाह्यमेकं वर्तमानं [6]क्रियारूपं व्यवह्रियते । तत्सिद्धौ च तदपेक्षयातीतानागतसिद्धिर्नान्यथेति सिद्धं क्रियायाः कालत्रयविशेषणम् । गतमदः ॥९०॥

---

7. M युक्ते, P मुक्त इति. 8. A E² यदात्मकेनार्मा° 9. A ज्ञातस्यैवं°, E² om. तदा—वाशब्दो वक्ष्यमाणां. 10. AE² सर्वस्य. 11. E² स्थलावधि. 12. P सकल; 13. M Bhā. has तत् समीक्ष्य. 14. AE³ क्रियात्वं. 15. AE² om. संरम्भ. 16. AE² °भावः । न च तदर्थता.

90. 1. E² P भाविकत्वमे. 2. AE² M तद. 3. P युगपत् स्म° 4. AE बुद्धिरूपतया. 5. M om. ध्यवसायात्—सिद्धं क्रिया° 6. P om. क्रियारूप.



इह क्रियातिपत्तौ लृङ्विधाने भूतभविष्यन्तावुपादीयेते । तयोरनुपपत्तिं चोदयति ।

**क्रियातिपत्तिरत्यन्तं क्रियानुत्पत्तिलक्षणा ।**
**न च भूतमनुत्पन्नं न भविष्यत्तथाविधम् ॥ ९१ ॥**

'यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यद्' इति कमलकाह्वानशकटापरिभवनलक्षणायाः क्रियाया अतिपत्तिः साधनशक्तिवैकल्यान्नियतानुत्पत्तिः । न चानुत्पन्नं क्रियास्वरूपं भूतं भविष्यद् वा शक्यते[1] व्यवस्थापयितुम् । उत्पन्नस्य हि सत्तातिक्रमो भूतः, समर्थसाधनसन्निधाने सम्भावितोत्पत्तिश्च भविष्यन् । अत्र च साधनाभावात् सम्भावितापि नोत्पत्तिः । अत एवात्यन्तग्रहणेनानुत्पत्तिर्विशेषिता ॥ ९१ ॥

अत्र भूतभविष्यद्व्यवहारं समर्थयते ।

**प्राग्विरुद्धक्रियोत्पादान्निर्वृत्ते वा विरोधिनि ।**
**व्यापारेऽवधिभेदेन विषयस्तत्र भिद्यते[1] ॥ ९२ ॥**

यदि कमलकनाह्वास्यन्न शकटं पर्याभविष्यदित्य[2]परिभवस्य[3] निमित्तं समर्थसाधनाह्वानं भविष्यदसम्भावयन्नेवमभिधत्ते । एवं चाह्वानविरोधिनः [4]कमलकदेशान्तरगमनादपरिभवविरोधिनः शकटगुरुतरभारारोपाच्च[5] पूर्वमप्रतिद्वन्द्विनो भविष्यत्त्वे कालस्यापेक्ष्यस्य भेदाद् [6]अवच्छेदात् क्रियातिपत्तेरपि भविष्यद्विषयो विभज्यते । शकट[7]परिभवस्य क्रियारूपस्य निष्पत्तिः कमलकाह्वानाभावात्, तदाह्वानं च देशान्तरगमनान्न सम्पत्स्यत इति तस्य भविष्यतोऽसम्भावनायामत्यन्तानुत्पत्तिलक्षणस्य क्रियातिपत्तिरूपस्यापि भविष्यत्ता । यदि हि समर्थसाधनाह्वानं भविष्यति तदा क्रिया संपत्स्यते इति तस्या भविष्यत्त्वे तदत्यन्ताभावोऽपि भविष्यन् । तथा यदि स तेन ब्राह्मणार्थिना दृष्टोऽभविष्य[8]दुताभोक्ष्यताप्यभोक्ष्यत, न तु भुक्तवानित्यत्राभोजनस्य भोजनप्रतिद्वन्द्विनो व्यापारस्यातीतत्वात् क्रियातिपत्तेरप्यवधिभेदादतीतविषयतया भूतत्वेन व्यवहारः । गतमेतत् ॥ ९२ ॥

इदानीं कालप्रसङ्गेनायथाकालप्रत्ययविधानार्थं

धातुसंबन्धे प्रत्ययाः (P. 3. 4. 1).

इति सूत्रं विचारयति ।

**व्यभिचारे निमित्तस्य साधुत्वं न प्रकल्पते ।**
**भाव्यासीदिति सूत्रेण तत्कालेऽन्यत्र शिष्यते ॥ ९३ ॥**

---

91. 1. E² शक्यते.

92. M विद्यते. 2. AE² °त्यत्र प° 3. M om. स्य निमित्तं—°देशान्तरगमनादपरिभव 4. AE² om. कमलकदेशान्तरगमनादपरिभवविरोधिनः. 5. A °रोपा:. 6. AE² om. अवच्छेदात्. 7. AP शकटापरि°. 8. A °ष्यत्तदाऽभोक्ष्यत न तु.

इह यथास्वं नियत एव काले प्रत्यया विहिता इति स्वकालव्यभिचारे कालान्तरे तेषां साधुत्वं न स्यात् । तद्यथा '**भाव्यासीत्**' '[1]अग्निष्टोमयाज्यस्य पुत्रो जनिता' इत्यादौ भावीति भविष्यत्काले प्रत्ययोऽन्वाख्यातः आसीदिति[2] भूतकालेन [3]संबन्धं न यायात् । तथा [4]अग्निष्टोमेनेष्टवान् इति भूते प्रत्ययोऽन्वाख्यातो जनितेति भविष्यत्कालेन संबद्धो[5] न स्यादिति सूत्रारम्भः । धातूनां स्वतःसंबन्धाभावात् तदर्थोऽत्र धातुरित्युक्तः । [6]भेदाधिष्ठानत्वाच्च संबन्धस्य वृत्तौ अनेकसंख्यान्तर्भावः । साधनद्वारेण च धात्वर्थान्तं विशेषणविशेष्यभावलक्षणः संबन्धः[7] । प्रत्ययाधिकाराच्च प्रत्ययपरिग्रहे सिद्धेऽधात्वधिकारविहितप्रत्ययस्यापि मतुपो वर्तमानकालसत्तोपाधिपरित्यागे कालान्तरेऽपि सति धातुसंबन्धे साधुत्वं यथा स्यादिति पुनः प्रत्ययग्रहणस्य प्रयोजनमुक्तं भाष्ये

'गोमानासीत्, गोमान् भवितेति' (M. Bhā, II, p. 165, l. 3)

इति । तदेतत् सूत्रं वार्तिके प्रत्याख्यातम्

'धातुसंबन्धे प्रत्ययस्य यथाकालविधानात् सिद्धम्' (M Bhā. II. p.168, l.3)

इति । यथास्वं कालेषु प्रत्ययाः पदसंस्कारदर्शने विहिता इत्यन्तरेणाप्येतत् सूत्रं सिद्धमिष्टमित्यर्थः ॥ ९३ ॥

अत्रोच्यते ।

**स्वकाल एव साधुश्चेत् कालभेदे गतिः कथम् ।**

[1]भाव्यादिशब्दस्य स्वकाले संस्कारेऽङ्गीक्रियमाणे सत्यासीदिति प्रयोगसंबन्धे कालान्तरप्रतीतिः कुतस्त्या । अत्राप्युक्तं वार्तिके इति ।

'[2]उपपदस्य तु कालान्यत्वम्' (Vā. 2. on P.3. 4. 1. M Bhā, II p. 168, l.9)

इति[3] उपपदस्य विशेषणस्य विशेष्यसंबन्धात् तत्कालत्वं वाक्यादवसीयत इति वाक्यार्थोऽसौ पदसंस्कारवेलायामसंनिहितो नाङ्गम् ।

एतद् व्याचष्टे ।

**वाक्यार्थादतदर्थेषु विशिष्टत्वं न सिध्यति ॥ ९४ ॥**

सोऽर्थो वाक्यार्थपर्यालोचनागम्यो येषां पदानां न भवति तेषु **अतदर्थेषु** [4]वाक्यार्थायोग्यार्थेषु सत्सु वाक्यार्थस्य तैरव(रनव ?)च्छेदाद् विशिष्टत्वं न भवति । तथा च

93. 1. M om. अग्निष्टोमयाज्यस्य—न यायात् । तथा. 2. E² om. दिति भूत° –अग्निष्टोमेनेष्ट. 3. A. संबद्धो न स्यात्. 4. A तथेष्टवान् इति भूते प्रत्ययेऽन्वाख्याते. 5. A संबन्धो. 6. M भेदानुष्ठानाच्च. 7. M om. संबन्ध.

94. 1. E² भव्यादि°. 2. A om. the Vārttika. 3. A पदस्य तु°. 4. A °र्थयोगार्थेषु, M वाक्यार्थायोग्येषु.



भावीत्यस्य भूतकालानुपादानाद् आसीदित्यनेन संबन्धाभावाद् वाक्यार्थो विशिष्टो नावतिष्ठेत । तस्मादेकवाक्यतावशाद् विशेष्यकालानुवृत्तौ विशेषणस्य सिद्धायां नार्थः [5]सूत्रेणेत्यर्थः ॥ ९४ ॥

प्रत्युत सूत्रारंभे विवक्षितोऽर्थो न प्रतीयेतेत्याह ।

**तदर्थश्चेदवयवो भाविनो भूततागतिः ।**
**न स्यादत्यन्तभूतत्वमेवैकं तत्र सम्भवेत् ॥ ९५ ॥**

यद् यस्माद् वचनाद्भावि कृत्यमासीद् इत्यादौ वाक्ये**ऽवयवो** भावीत्यादिर्विशेषणभूतः, प्रधानभूताख्यातविषयभूतकालाभिधायी व्यवस्थाप्यते तदा भविष्यतः कृत्यस्य या भूतकालता प्रतिपिपादयिषिता सा न विज्ञायेत । केवलमासीदित्यनेन भूतताया गमिताया अपि भावीत्यनेन पुनःश्रुतितुल्येनावधारणं प्रतीयेत । तथा च यदिदं कृत्यं कर्तव्यरूपं वस्तु तदासीदेव भूतमेवेति वाक्यार्थोऽवतिष्ठेत । न चैष विवक्षितः । तस्मात् स्वकाल एवान्वाख्यानात् वाक्यार्थपर्यालोचनाद् **भाविनो भूतता[2]गतिः** सिध्यति । विवक्षिता भाव्यवस्याप्यस्य कृत्यस्यातीता[3] । सम्प्रतीदं वर्तमानं जातम् । त्रैयध्विका हि पदार्थाः पूर्वमुपपादिताः । तथा च भविष्यदध्वनोऽतीताध्वप्रवेशो न्याय्यः । यथोक्तं भगवता व्यासमुनिना

अवश्यंभाविनं[4] नाशं भावित्वाद् विद्धुपस्थितम् ।
अयमेव हि ते कालः पूर्वमासीदनागतः ॥

इति ॥ ९५ ॥

नन्वेवं स्वकालेऽन्वाख्यातस्य वाक्यार्थात् कालान्तरावगतावप्युपात्तकालत्यागप्रसङ्गः । न प्रसङ्ग इत्याह ।

**विशिष्टकालता पूर्वं तथापि तु[1] विशेषणे ।**
**आश्रयात् सोऽन्तरङ्गत्वात् तत्र साधुर्भविष्यति ॥ ९६ ॥**

पदान्तरसंबन्धात् पूर्वं भाव्यादिशब्दस्य विशिष्ट एव स्वकाले व्युत्पादितत्वात् साधुत्वम् । विशेषणेऽपि च तस्य पदान्तरसंबन्धे तथैव **विशिष्टकालता** । यस्मादजहदेव स्वकालयोगं तत्र विशेष्यकालमनुवर्तते । भाविनो हि भूतता । अतश्च योऽसावाश्रितः स्वकालः संस्कारनिमित्त[2]त्वेन तस्य पूर्वमेवाश्रयणादन्तरङ्गत्वे सति तत्रैव **साधु[3]ः**

5. A °णे णेति तदर्थः ।

95. 1. P तथा. 2. E² भूता गतिः 3. A संप्रति सा वर्तमानता जाता E² °तीतसम्प्रतीतं. 4. A अवस्यंभाविनो.

96. 1. AE² न. 2. A° त्तत्वे, E² °मित्तः 3. AE² साधुशब्दो.

शब्दो भाव्यादिः पदान्तरयोगेऽपि। न तु स्वकालत्यागः, तद्गतत्वेनैव वाक्यार्थाद् विशिष्टतागतेः। एवमग्निष्टोमयाज्यस्य पुत्रो जनितेत्यत्र भूतस्यैव भाविता [4]वाक्यार्थात्। सूत्रारम्भे त्वत्यन्तं भविष्यत्तैव[5] गम्येतेति प्रत्याख्यातं सूत्रम् ॥ ९६ ॥

वार्तिकाभिप्रायेण केचित्तु समर्थयन्ते। कथमित्याह।

**आमिश्र एव प्रक्रान्तः स पदार्थस्तथाविधः[1]।**
**केवलस्य विमिश्रत्वं नित्येऽर्थे नोपपद्यते ॥ ९७ ॥**

इह प्रयुक्तानां शब्दानामन्वाख्यानाद् व्यवहाराय शब्दप्रयोगाद् वाक्यमेव तदङ्गमन्वाख्येयम्। तथा च पदान्तरार्थसमन्वययोग्यपदार्थापोद्धारपूर्वकं पदानामनुशासनाद् वाक्यावधिकेऽन्वाख्याने प्रथमत एव सर्वः पदार्थो विशिष्टः **आमिश्रः** [2]एवोपात्तः यादृशो वाक्यप्रयोगादवसीयते। इतरपदार्थसमन्वयनिरपेक्षं तु पदानुशासने केवलस्य[3] पूर्वमवस्थितस्य पश्चादितरपदसमन्वये विशिष्टतायां नित्यः शब्दार्थसंबन्धो विरुध्येत।

सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः[4] क्वावतिष्ठताम् ॥ (Vāk. II. 15)

इत्यादि चात्र दूषणमुक्तम् ॥ ९७ ॥

एवं सामान्येनाभिधाय एतदेव प्रकृते योजयति।

**शुद्धे च काले व्याख्यातमामिश्रे न प्रसिध्यति।**
**साधुत्वमयथाकालं[1] तत् सूत्रेणोपदिश्यते ॥ ९८ ॥**

भावीति भविष्यति भूतेनासंसृष्टे प्रत्ययः साधुरुक्तः[2]। स भूतसंसृष्टे न प्राप्नोति प्रथममेवापेक्षिते। तस्मात् सूत्रेण व्यामिश्रे काले प्रत्ययविधानमुपपद्यते ॥ ९८ ॥

विशेषाभावात् तर्हि भूतकालोऽप्यासीदिति भावीत्येतद्भविष्यकालसंमिश्रे कस्मात् साधुर्न भवतीत्याह।

**आख्यातपदवाच्येऽर्थे निर्वर्त्यत्वात् प्रधानता।**
**विशेषणं तदाक्षेपात् तत्काले व्यवतिष्ठते ॥ ९९ ॥**

'भूतं [1]भव्यायोपदिश्यते'

इत्याख्यातवाच्या क्रिया साध्यमानस्वभावा सर्वत्रैव वाक्यार्थभूता प्रधानम्। नामपदवाच्यं तु सिद्धस्वभावं कारकं गुणभूतम्। प्रधानानुयायिनश्च गुणाः। न तु गुणानुयायि प्रधानमित्याख्यातवाच्येनार्थेन स्वोपकारायाक्षिप्तो नामपदवाच्योऽर्थो गुणभूतस्तत्कालमनुविधत्ते। एवं च न्यायेनैव समन्वयान्यथानुपपत्त्या (समन्वयस्याप्युपपत्त्या ?) गुणप्रधानसन्निधावेकस्मिन् वाक्ये प्रधानानुयायित्वाद गुणानां प्रधानानुग्रहाय तत्कालस्यापि स्वकालापरित्यागेनैवानुवर्तनात् भाव्यासीदित्यादिप्रयोगे सिद्धे नार्थः सूत्रेणेति।[2] एतदुक्तं भवति। आमिश्रत्वं हि सर्वत्र संबन्धे सति पदार्थानां यथायोगं विशिष्टमस्त्येव। केवलं पदान्तरप्रयोगं विना न निश्चीयते तदित्येतावता सामान्येऽर्थे पदं वर्तते, विशेषेऽर्थे वाक्यमित्युच्यते। न तु त्यागग्रहौ कौचित् ॥ ९९ ॥

4. M °क्यार्थः 5. M भावितैव.
97. 1. P °विधिः. 2. M भावोपात्तः. 3. A om. केवलस्य. 4 A निवृत्तेः.
98. 1. AE[2] °कालः 2. A साधूक्तः.
99. 1. AE[2] भाव्यायो°, M भवितव्ययो.



तथा[1]विधे चार्थे पदसंस्कारादामिश्रेऽपि प्रक्रम एव वृत्तः संस्कारः। न हि कालान्तरव्यतिभिन्ने स्वकाले निषेधोऽस्ति प्रत्ययस्य। तस्मान्नार्थोऽत्र यत्नेनेत्याह।

**सम्प्रत्ययानुकारो वा शब्दव्यापार एव वा।**
**अध्यस्यते विरुद्धेऽर्थे न च तेन विरुध्यते ॥ १०० ॥**

इह वचनेनार्थानां स्वभावातिक्रमाभावात् कालान्तरे साधुत्वानुशासनमात्रात् तत्र प्रतीतिर्नोपपद्यत इत्यकिञ्चित्करं सूत्रम्। सङ्गतिस्तु गुणप्रधानभावेन समन्वयोपपत्तेः प्रधानकालानुरोधेनैकवाक्यतावशेन [2]दर्शिता। अथवा यथास्वं कालेष्विव संबन्धेऽप्येते प्रत्ययाः। अध्यारोपेण तु समन्वयः। तथाग्निष्टोमयाजीत्यनेन भूतविशिष्ट एवार्थः प्रत्याय्यते। जनितेत्येतत्संबन्धे तु स भूतकालावच्छिन्नो ज्ञानाकारोऽनुपपद्यमानो **विरुद्धे** तस्मिन् भविष्यति काले **अध्यस्यते** समारोप्यते। योऽयं भविष्यन् कालो जनितुः तत्र जन्मोत्तरकालमग्निष्टोमकरणयागसमाप्तिमाश्रित्याधुनैव भूतकालोऽयमुपात्तः। तेनायमर्थः। सोऽस्य पुत्रो जनिता योऽग्निष्टोमेन यष्टेति। यद्वा शब्दस्याग्निष्टोमयाजीत्यस्य व्यापारः स्वार्थाभिधानलक्षणो भविष्यति कालेऽध्यस्यते। उत्पत्स्यमानस्यार्थस्यानेन प्रतिपादनानुपपत्तेर्भावी व्यापारोऽस्य। सोऽस्य पुत्रो जनिता यो जातोऽभिवृद्धोऽग्निष्टोयमाजीतीमं व्यपदेशं लप्स्यत इत्यर्थः। तदेतदुक्तं भाष्ये

कदा चैवं व्यपदेक्ष्यते। यदानेनेष्टं भवति। (M. Bhā. II. p. 168, l. 15)

इति। तदित्थं **सम्प्रत्ययानुकारेण शब्दव्यापारेण वा** अध्यस्यमानेन सोऽर्थो विरुद्धत्वाभिमतो **न विरुध्यते**। नास्त्यत्र समन्वयविरोध इत्यर्थः ॥ १०० ॥

एतदेव निदर्शनेन व्युत्पादयति।

**भूतं भविष्यदित्येतौ प्रत्ययौ वर्तमानताम्।**
**अत्यजन्तौ प्रपद्येते विरुद्धाश्रयरूपताम् ॥ १०१ ॥**

2. AE[2] °णेत्येतदु°
100. 1. P तथा विधेयार्थे. 2. AE[2] °शेनादर्शि.

तद्वस्तु भूतं भविष्यदन्यद् इत्येतौ प्रत्ययौ ज्ञाने समुत्पद्यमानौ स्वतो वर्तमानकालावपि विषययोः स्वकालविरुद्धयोर्भूतभविष्यतोराकारं धारयतो यथा एवं [1]स्वकालापरित्यागेन कालान्तरेऽध्यारोपोऽत्र युक्त [2]इत्यर्थः । सङ्गृहीतसाध्यान्वयभूतभविष्यदाकारौ हि प्रत्ययौ भूतभविष्यद्रूपतया स्वाकारमध्यवस्यतोऽपरित्यक्तवर्तमानस्वसंवेदनरूपौ[3] । एवमग्निष्टोमयाजीति सम्प्रत्ययानुकारोऽपि स्वकालमजहदध्यारोपविषयस्य विरुद्धस्य भविष्यत आश्रीयमाणस्य रूपं प्रतिपद्यते । न [4]ह्यध्यस्यमानं स्वरूपं जहाति गोत्वमिव वाहीके ॥ १०१ ॥

इदानीं कालप्रसङ्गेन वर्तमानसारूप्यं विचारयति ।

**अध्वनो वर्तमानस्य यः शेषो य उपक्रमः ।**
**तद् वर्तमानसामीप्यं शास्त्रे भेदेन दर्शितम् ॥ १०२ ॥**

आ फलसमाप्तेः [1]क्रियाप्रबन्धोऽव्युपरतो[2] वर्तमानः काल इत्युक्तम् । तस्य च यः शेषः समाप्तत्वेऽपि संस्कारानुवृत्तिलक्षणः तद् भूतविषयं वर्तमानसामीप्यम् । [3]यश्च प्रारम्भो मानसः सङ्कल्पो वर्तमानस्य तद् द्वितीयं भविष्यद्विषयं वर्तमानसामीप्यम् । तत्र कायव्यापारादर्शनाद् वर्तमानतानवसाये भूतभविष्यत्स्वभावे [4]वर्तमानप्रत्यया अतिदिश्यन्ते । वावचनात् पक्षे भूतभविष्यत्प्रत्ययानामनुशासनान्नेदं वर्तमानमेव सद् भेदेनोपादीयते । अत्रापि पूर्ववत्[5] स्वकाल एव गच्छामीत्यादिपदस्य संस्कारः । अतो हि वर्तमानस्यैव प्रतीतिः । पदान्तरप्रयोगे तु तत्कालेऽध्यारोपः । वावचनात् पक्षेऽध्यारोपितरूपाश्रयाद् भूतभविष्यत्प्रत्यया भवन्तीति नार्थो यत्नेन ॥ १०२ ॥

प्रार्थनास्वभावाशंसा प्रतीतिविशेषत्वाद् वर्तमाना प्रत्युपस्थिता कथं
....भविष्यत्काला (M. Bhā. II. p. 158 l. 18 )

इति भाष्येऽभिहितेत्यत आह ।

**आशंसा वर्तमानापि विषयेण भविष्यता ।**
**भाष्ये भविष्यत्कालेति कार्यार्थं व्यपदिश्यते ॥ १०३ ॥**

ज्ञानस्वभावत्वाद् वर्तमानकालापि प्रार्थ्यमानस्य विषयस्यानागतत्वाद् विषयधर्मेण भविष्यत्कालाशंसा व्यपदिष्टा । तथा च भूतप्रत्ययलक्षणं कार्यं भविष्यति विषयेऽति[1]देष्टुं युक्तम् ॥ १०३ ॥

---

**101.** 1. A स्यकालेविषयाप°. 2. A °र्थः । स्वगृहीतसाध्यान्वयिभू°, M °र्थः । गृहीतः साध्यान्वयः तभवि°. P °र्थं संगृहीतः साध्यान्वयः भूत°. 3. AE² °रूपेण. 4. A अध्यवस्यमानं.
**102.** 1. P क्रियान्न्धो. 2. A अनुपरतो. 3. P यश्चारंभो. 4. A om. वर्तमानप्रत्यय– °शासनान्नेदं 5. AE² om. पूर्ववत्.
**103.** 1. A अतिदिष्टमति, E² P निर्देष्टुं.



यदि विषयधर्मेणापि व्यपदेशो भवति तदेष्यमाणस्यानागतत्वादिच्छापि भविष्यत्काला स्यादिति तत्र चिकीर्षतीति वर्तमानकालप्रत्यया अप्यतिदेष्टव्या इत्याशङ्क्याह ।

**इच्छा चिकीर्षतीत्यत्र स्वकालमनुरुध्यते ।**
**भविष्यति प्रकृत्यर्थे तत्कालं नानुरुध्यते ॥ १०४ ॥**

चिकीर्षतीत्यत्र येयमिच्छा सन्नन्तधातुवाच्या सा प्रधानम् । तदुपसर्जनभूता करोतिक्रिया तद्विषयः । तस्योपसर्जनस्य भविष्यत्कालत्वेऽपि सनः प्रकृतिभूतधातुवाच्यस्य प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति सन्नन्तधातुवाच्याया इच्छाया वर्तमानत्वात् स एव कालोऽनुवर्त्य इति सिद्धो वर्तमानप्रत्ययः । न हि प्रधानं गुणाननुविधत्त इति गुणभूतकरोतिक्रियाकालानुवृत्तिरत्र नास्ति ॥ १०४ ॥

आशंसायामपि स्वकालानुवृत्तिः कथं न भवतीत्याह ।

**आशंस्यमानतन्त्रत्वादाशंसायां विपर्ययः ।**
**प्रयोक्तृधर्मः श[1]ब्दार्थे शब्दैरेवानुषज्यते ॥ १०५ ॥**

यथेच्छा प्रत्ययार्थत्वात् प्रधानं नैवमाशंसा । न हि सा प्रत्ययवाच्या, अपि तु तद्विषय एवाशंस्यमानः प्रत्ययाभिधेयः । प्रयोक्तृधर्मो ह्याशंसा, न शब्दार्थः । तथाहि- उपाध्यायश्चेदागतो व्याकरणमधीतमेवेत्याशंस्यमानमुपाध्यायागमनं [2]व्याकरणाध्ययनं च प्रत्ययवाच्यं [3]तन्त्रं प्रधानमिति तत्कालानुवृत्तिरेव न्याय्या । एतदाशंसिना तु प्रयोक्त्रा वाक्यमिदं प्रयुक्तमिति गम्यमानत्वमाशंसायाः । कथं तर्हि प्रयोक्तृधर्म आशंसा शब्दसंस्कारनिमित्तम् । शब्दार्थो हि शब्दसंस्कारनिमित्तं न्याय्य (नान्य ? ) इत्याशङ्कायोक्तम्

**प्रयोक्तृधर्मः शब्दार्थे शब्दैरेवानुषज्यते**

इति । अध्यारोप्यते प्रयोक्तृधर्मः प्रयोज्यस्य शब्दस्याभिधेये शब्देनैव । तस्मिन् हि प्रयुक्ते गम्यते स धर्मः प्रयोक्तरीति गम्यमानत्वादा[4]बाधादिवद् युक्तं शब्दसंस्कारनिमित्तत्वमस्य । पुरुषधर्मेष्वपि हि शास्त्रमधिकृतमिति विचारितं वाक्यपदीये । गतमेतत् ॥ १०५ ॥

इह वार्तिककारः पपाठ ।

'अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात्' ( M. Bhā. II. p. 159 l. 21 )

इति । अनिर्वृत्ते कार्ये भूतप्रत्ययाः वक्तव्या इत्यर्थः । तद्यथा–

'देवश्चेद् वृष्टो निष्पन्नाः शालयः' ( M. Bhā, II, p. 159, l. 23 )

---

**104.** 1. AE² °ऽनुपाल्य, M कालोऽनुवर्तते, P कालेनानु°.
**105.** 1. M om. शब्दार्थे. 2. M om. व्याकरणाध्ययनं. 3. A तत्र. 4. A °दाधारादिवद्.

इति । निष्पन्नसदृशार्थोऽनिष्पन्न इति पर्युदासेन योग्यहेतूपनिपाते सम्भाव्यमाननिष्पत्तिरुच्यते । तेनानागतमात्रे भूतप्रत्यया न भवन्ति । अनिष्पन्न इत्युक्तेऽपि चानिष्पन्नत्वादिति हेतुप्रदर्शनम् । उपचारेणायं प्रयोगो न वेदितव्य इत्यर्थः । अनागतरूपेणैवानुपचरितातीतावस्थेन कार्यमत्र प्रतीयत इत्युपसंख्येयो भूतप्रत्यय इत्यर्थः । अत एव भाष्यम्–

'तत्र भवितव्यं [1]निष्पत्स्यन्ते शालयः ( M. Bhā. II. p. 159. l. 23 )

इति भविष्यत्[2]प्रत्ययस्यैव युक्ततामाह । अस्य प्रत्याख्यानम्–

'सिद्धं तु भविष्यत्प्रतिषेधात्' (Vā. 3. on P. 3.3 133, M. Bhā. II, p. 159, l. 24)

इति । 'देवश्चेद् वृष्टः सम्पत्स्यन्ते शालय' इति केनचिदुक्ते मैवं वोचः, सम्पन्नाः शालय इत्येवं ब्रूहीति भविष्यद्वाचिनः शब्दस्य लोके प्रतिषेधो दृश्यते । भूतवाचिन एवत्वम्यनुज्ञानमिति वार्त्तिकार्थः । तदेतद् कथं भवतीति वार्तिकाभिप्रायमाचष्टे–

**अप्शालिबीजसंयोगे वर्तते निष्पदिर्यदा ।**
**तत्रावयववृत्तित्वाद् भविष्यत्प्रतिषेधनम् ॥ १०६ ॥**

इह निष्पत्तिर्धात्वर्थः समग्रसाधनसम्पत्तौ फलोपजनो[3] मुख्यः । स यदावयवमात्रे जलशालिसंबन्धमात्रेऽध्यारोप्यते तदा तावन्मात्रस्य वर्षमात्रेण सम्पत्तेरतीतो धात्वर्थ [4]इति सिद्धा भूतप्रत्ययाः । भविष्यत्प्रत्ययानामयमविषय एव जलशालिसंयोगस्य निष्पत्तेरिति भविष्यतः प्रतिषेधो युक्तः ॥ १०६ ॥

यदा तु मुख्य एव निष्पत्त्यर्थः तदात्र कथं भूतकालतेत्याह ।

**फलप्रसवरूपे तु निष्पदौ भूतकालता ।**
**धर्मान्तरेषु तद्रूपमध्यस्य परिकल्प्यते ॥ १०७ ॥**

समग्रसाधनसन्निधानसाध्ये यदा [1]निष्पत्तिलक्षणे धात्वर्थे फलजन्मपर्य[2]न्ते निष्प[3]दिर्धातुर्वर्तते तदा पूर्वेषु कार्यनिष्पत्तेरन्येषु कारणाश्रितेषु बीजोदकसंयोगाहितातिशयेषु धर्मेषु तद् कार्यनिष्पत्तिरूपमध्यस्यते[4] । तेषामतीतत्वात् फलप्रसवस्याप्यतीतता परिकल्प्यत इति सिद्धा भूतप्रत्ययाः ॥ १०७ ॥

प्रकारान्तरेणोपचारमाह ।

---

106. 1. The M Bhā has संपत्स्यन्ते. 2. M om. प्रत्ययस्यैव—तदेतद् कथं भवतीति. 3. A फलोपधानेन मुख्येन. 4. A त्वर्थसिद्धा भूतता.

107. 1. M P निष्पदिल° 2. E[2] om पर्यन्ते-°वर्तते. 3. A निषेधोऽनुवर्तते. 4. A °स्य तेषा°.



**उपयुक्ते निमित्तानां व्यापारे फलसिद्धये ।**
**तत्र रूपं यदध्यस्तं तत्कालं तत् प्रतीयते ॥ १०८ ॥**

सामग्रीसाध्यत्वात् कार्यस्य बहूनि निमितानि सापेक्षाणि जनकानि । तेषां फलजन्मनि यो व्यापार उपकारस्तस्योपयुक्तत्वात् फलस्य यद्रूपं [1]भाव्यपि तत्र तस्मिन् हेतूपकाररूपं तदध्यस्तं तस्य हेतुव्यापारस्यातीतत्वादतीतकालत्वे तदभेदापन्नं [2]तत्फलमपि **तत्कालम्** अतीतकालमवसीयते । पूर्वं कारणधर्मेषु फलस्याध्यारोपः, इह तु फले कारणधर्माणामिति विशेषः । उपचारप्रयोजनं तु कारणानामत्र सन्र्यन्तरत्वप्रतिपादनम् । एतेन च

'हेतुभूतकालसम्प्रेक्षितत्वाद्वा' Vā. 4. on P. 3.3. 133. M. Bhā. II. p. 160, l. 3)

इति द्वितीयं प्रत्याख्यानवार्तिकं विवृतम् । निमित्तस्य वर्षस्य योऽतीतः कालः स कार्येऽध्यस्यते । [3]कारणान्तरापेक्षाभावप्रतिपादनाय प्रतीयत इत्यर्थः । निष्पन्नत्वे निष्पन्नकार्याणि शालयः कथं तदानीमेव न कुर्वन्तीति चोदयित्वोक्तम्–

'अन्यदिदानीमुच्यते' ( M. Bhā. II. p. 160. l. 6. )

इति । यद्यर्थक्रियाकरणं शालीनां निष्पत्तिः तदा कोष्ठस्था अपि न निष्पन्नाः स्युः, अर्थक्रियायां भुजिलक्षणायामवहननाद्यपेक्षणात् ॥ १०८ ॥

अथ हेतूपकारसमाप्तिमात्राधीना निष्पत्तिः तदा यथायथं हेतूपयोगनिष्पत्तौ [1]निष्पत्तिव्यवहारः सिद्ध इत्याह ।

**निष्पत्तावववधिः कश्चित् कश्चित् प्रतिविवक्षितः ।**
**हेतुजन्मन्यपेक्षातः फलजन्मेति चोच्यते ॥ १०९ ॥**

इह कश्चिद् बीजसलिलसंयोगमात्राधीनां निष्पत्तिं शालीनां मन्यते । कश्चिदुत्तरकालभाव्यातपादिसंयोगजनितोपकारपरम्पराधीनाम् इति निष्पत्तिहेतुरनवस्थितः । कारणस्य ह्युपकारविशेषख्यापनायैवमुच्यते । तत्र च प्रथमतरनिमित्तगतोपकाराधिक्यकल्पनायां निमित्तान्तरव्यापारापह्नवेन तावत एव हेतोर्जन्मनः फलजन्मव्यवहारः । आतपादिसंयोगलक्षणहेतुजन्मनो वेति तस्यातीतत्वात् [2]फलमप्यतीतताव्यवहारयोग्यम् । एष चोपचाराश्रय एव व्यवहारो हेतुभूतकालसंप्रेक्षाया इति नर्तेऽध्यासाद् भवत्यसौ । जलबीजसंयोगमात्रं तु [3]निष्पदिवाच्यमाश्रित्य पूर्वः परिहारः । अत्र निष्पद्यर्थो गौणः । उत्तरत्र तु परिहारे निष्पद्यर्थो मुख्यः । [4]कार्यकारणयोस्त्वभेदाध्यासः । इति विकल्प उपपन्नः ॥ १०९ ॥

---

108. 1. P भावित° 2. AE[2] तस्याः फ°. 3. AE[2] °न्तराभावप्र°.

109. 1 A °त्तौ भूतोपयोगनि°. 2. P °तीतव्य° 3. AE[2] निष्पदिपरिहारमाश्रि° 4. E[2] om. कार्यकारणयोः—सिद्धमित्युपदिश्यते ॥ ११० ॥

सामग्रीसाध्यत्वात् कार्यस्य कथमेकसाधनसम्पत्तिमात्रे सम्पत्तिः स्यादित्येतत् चोद्यं विचारयितुमाह ।

**अबहिस्साधनाधीना सिद्धिर्यत्र विवक्षिता ।**
**तत् साधनान्तराभावात् सिद्धमित्युपदिश्यते ॥ ११० ॥**

अन्तरङ्गे कस्मिंश्चित् साधने सन्निहिते ततोऽन्यस्य बहिर्भूतस्य साधनस्यापेक्षातिरस्कारेण विवक्षितं साध्यं [1]सत्कल्पं सिद्धमेवेति लोके व्यवहारः प्ररूढः। तदनुसारेणैव च शास्त्रे व्यवस्थोपपत्तिः ! [2]लोकप्रसिद्धस्यैव शब्दार्थव्यवहारस्य शास्त्रेणानुगमात् । तथा च यथाविवक्षं कालत्रययोगेनात्र व्यवहारः सिद्ध इति ॥ ११० ॥

निगमयति–

**तस्मादवधिभेदेन सिद्धा मुख्यैव भूतता ।**
**अनागतत्वमस्तित्वं हेतुधर्मव्यपेक्षणे ॥ १११ ॥**

निश्चितो योऽवधिः कारणं तस्य भेदेन यथाभेदं तत्र कार्यस्याध्यासात् तद्वदतीतता मुख्या। कारणे हि [1]कार्योपचारः, न तु भूतस्य कालस्य। यदा तु हेत्वन्तरस्य भाविकार्यजननव्यापारोऽपेक्ष्यते तदा मुख्येनैव रूपेणानागतत्वं भविष्यत्त्वं कार्यस्य। यदा तु[2] हेत्वन्तरस्य प्रत्यासन्नकार्यजननव्यापारो विवक्ष्यते तदा व्यापारप्रबन्धस्य फलावधेरेकत्वेन पूर्वोक्त[3]रसदसदवयवात्मकस्यापि सत्त्वात् वर्तमानत्वमिति प्रयोगत्रयं सिद्धं निष्पन्ना निष्पत्स्यन्ते निष्पद्यन्ते शालय इति। गतमेतत् ॥ १११ ॥

अपरमपि वार्तिककारः पपाठ–

'अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात्'

(Vā. 5. on P. 3. 3. 133, M. Bhā. II. p. 160, l. 10)

इति। भवन्त्या लड्विभक्तेरर्थे वर्तमाने काले भूतभविष्यदर्थास्तिङ्विभक्तयो वक्तव्याः। वर्तमाने हि लडेव स्यात्। तत्र भवन्त्यर्थ इत्युक्तेऽपि कर्तुर्विद्यमानत्वादिति हेतूपादानं प्रयोगकालावधृतं सत्त्वं शब्दनिबन्धनं न तु वास्तवमेवेत्येतत्प्रतिपादनार्थम्। [1]कूपोऽभूदभवद् बभूव[2] भविष्यति भवितेति प्रयोगकालेऽपि [3]कूपस्य [4]कर्तुरविनष्टस्यैवोपलम्भादित्यर्थः। तथा चैतद् व्याख्यानभाष्यम्–

110. 1. AE² M संकल्पसि° 2. E² om. लोकप्रसिद्धस्यैव–हेतुधर्मव्यपेक्षणे.

111. 1. A कार्यस्यैवो°. 2. A तु तस्य हेत्व°. 3. AE² पूर्वोक्त स°. 4. E² रूपे.

112. 1. E² रूपे. 2. P om. बभूव. 3. E² रूपस्य. 4. AE² °र्तुरवगतस्यै°



'कूपोऽनेन कदाचिदवधृतो[5] न चास्यापायं पश्यति'

(M. Bhā. II. p. 160. l. 14)

इति विद्यमानत्वं सम्प्रत्यवध्रियमाणत्वमेव व्याचष्टे। अत्र प्रत्याख्यानम्–

'सिद्धं तु यथास्वकालं समुच्चारणात्' (M. Bhā. II. p. 160. l. 19.)

इति। आत्मीयेष्वेव कालेषु यथायोगं तिङ्विभक्तीनां प्रयोगोऽयम् न तु वर्तमान एवेति नार्थ उपसंख्यानेनेत्यर्थः। एतदेव साधयितुमुक्तम्

'अवात्वात्' (Vā 7 on P. 3. 3. 133. M. Bhā. II. p 160, l. 19.)

इति। अविकल्पस्यादेशां प्रयोगाणामात्मीय एव काले समुच्चारणम्। वर्तमाने ह्येषां साधुत्वोपसंख्याने तत्रैव सर्वास्तिङ्विभक्तयः पर्यायेण दृश्येरन्। न च दृश्यन्त इत्युक्तम्

'असिद्धविपर्यासश्च' (Vā. 8 on P. 3. 3. 133, M. Bhā. II. p 160, 21.)

इति। असिद्धं च वैपरीत्यमित्यर्थः[6]। न हि कश्चित् कूपोऽभूदिति प्रयुयुक्षिते कूपो भविष्यतीति प्रयुङ्क्ते। तस्मादविकल्पितात् प्रयोगादसङ्करेण च प्रयोगाद् यथास्वं काले तिङ् विभक्तीनामुच्चारणं सिद्धम् ॥

तदेतत् कथमुपपद्यत इति वार्त्तिकाभिप्रायमाचष्टे।

**सतामिन्द्रियसंबन्धात् सैव सत्ता विशिष्यते ।**
**भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥ ११२ ॥**

इह पदार्थानां सर्वो व्यवहारः संसर्गिधर्मान्तराच्छुरणेनेत्युक्तमेव। ततश्चात्र येयं कूपसत्ता सा गृहीता सती शब्दप्रयोगस्य निमित्तभावमापद्यते, अगृहीताया असत्कल्पत्वादिति ग्रहणोपाधिर्व्यवहारमवतरति। ग्रहणं चेन्द्रियार्थसन्निकर्षनिमित्तमिति पथि [7]कूपस्येन्द्रियेण सन्निकर्षो यत्र भावी तत्र भविष्यन्ती सत्ता व्यवह्रियते। यत्र तु भूतः सः, तत्र भूता। यत्र तु सम्प्रतितनः तत्र वर्तमानेति त्रिकालविषयाः प्रयोगाः सामान्यविशेषभूता अपि सिद्धाः। विप्रकृष्टे हीन्द्रियसंबन्धेऽतीते [8]भूतविशेषविषया लङादयः। विप्रकृष्टे चागामिनि भविष्यद्विशेषविषया लुडादयः ॥ ११२ ॥

ननु च यथा भूतभविष्यद्विभक्तयो वर्तमान[1]विषयं नावगाहन्ते तथा सापि तद्विषयान् नावगाहेतेति कूपोऽस्तीति प्रयोगो भूते भविष्यति चेन्द्रियसंबन्धे न स्यादित्याशङ्क्याह ।

5. M Bhā. has दृष्टः. 6. AE² °त्यनेन द्वि. 7. M पथिकरूपस्य. 8. M om. शेषविषया–प्रयोगो भूते भवि.

113. 1. AE² वर्तमानविभक्तेर्वि°

**अस्तित्वं वस्तुमात्रस्य बुद्धया तु परिगृह्यते ॥**
**यः समासादनाद् भेदः स तत्र न विवक्षितः ॥ ११३ ॥**

इन्द्रियसंवन्धासंवन्धनिमित्तस्य भूतभविष्यल्लक्षणस्य भेदस्याविवक्षायां [2]मनसा सन्मात्रं रूपमभिसन्धायास्तीति प्रयोगः सामान्येनात्रोपपद्यत इत्यर्थः । विशेषास्तु परस्पर-
5 विरोधिनो न सङ्कीर्यन्ते ॥ ११३ ॥

किं वात्रौपाधिकेन सत्ताया भेदेन, तात्त्विक एव सत्ताया भेदः प्रत्यवस्थित इत्याह ।

**योगाद्वा स्त्रीत्वपुंस्त्वाभ्यां न किंचिदवतिष्ठते ।**
**स्वस्मिन्नात्मनि तत्रान्यद् भूतं भावि च कथ्यते ॥ ११४ ॥**

" न कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्धते यावदनेन वर्धितव्यमपायेन
10 वा युज्यते " ( M. Bhā. II. p. 198. l. 8. )

इति स्त्रीसूत्रे भाष्यम् । तत्रोपचयः पुंस्त्वम्, अपचयः स्त्रीत्वमिति लिङ्गसमुद्देशे वक्ष्यति ।

'उत्पत्तिः प्रसवोऽन्येषां नाशः संस्त्यानमिष्यते । '( Vāk. III. लि. 27. )

इति । एवं स्त्रीत्वपुंस्त्वाभ्यामपचयोपचयाभ्यामजस्रप्रवृत्तिभ्यां सर्वभावानां संवन्ध इति प्रतिकलमन्योन्यरूपसदृशप्रवन्धरूपभावमध्येऽवस्थाभेदगतस्त्रिकालयोग उपपद्यत एव
20 तात्त्विकः। अतश्चान्यदेवातिक्रान्तेन्द्रियसंवन्धं भूतं रूपम्, अन्यदेव च भविष्यदिन्द्रियसंवन्धं भावि, अन्यदेव च वर्तमानेन्द्रियसंवन्धम्। अभेदेन तु बुद्धया समीक्ष्य रूपसामान्यमस्तीति वर्तमानप्रत्ययवाच्यं सिद्धम् ॥ ११४ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे कालसमुद्देशो नवमः ॥

2. AE[2] आभा( पा )समात्रं.
114. 1. AE[2] तन्यते.

---

# अथ पुरुषसमुद्देशः

तिङभिहितेन भावेन कालपुरुषोपग्रहसंख्या अभिव्यज्यन्ते इति स्थिते कालं परीक्ष्य पुरुषं परीक्षते ।

**प्रत्यक्ता परभावश्चाप्युपाधी कर्तृकर्मणोः ।**
**तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ॥ १ ॥** 5

प्रतिपुरुषं प्रतिनियतं वाञ्चति चेष्टत इति प्रत्यङ्, अन्तर्यामी जीवात्मा । स हि प्रतिदेहं नियतो वर्तते । [1]तद्भाव उत्तमपुरुषवाच्योऽर्थः । अहङ्कारसमानाश्रयत्वं यदा-ख्यातात् प्रतीयते क्रियायाः स उत्तमपुरुषविषय इत्यर्थः । तथा चाहङ्काराश्रयस्य कर्तु-स्तिङन्तवाच्यस्य कर्मणश्च स उपाधिभूतः प्रज्ञायते [2]स्ववाचकादात्मनेपदपरस्मैपदरूपेण [3]भिन्नात् । तद्यथा [4]पचे पचामीति कर्त्रुपाधिरुत्तमविषयः पुरुषः । कर्मोपाधिस्त्वात्मने- 10
पदादेव प्रतीयते, कर्मण्यात्मनेपदस्यैव भावात् [5]पच्ये इति । तदयं [6]कर्त्रादिसाधन-विशेषणं पुरुष इत्युच्यते । मध्यमस्तु पुरुषः [7]परत्वम् । [8]मध्यमवाच्यः स हि कर्तृकर्म-विशेषणभूतः प्रश्नादिविषयभावोपगमनयोग्यः स्वात्मनः [9]परः स्ववाचकात् पूर्ववद् भिन्नात् प्रतीयते । तद्यथा । पचसि पचसे इति कर्त्रुपाधिः । कर्मोपाधिस्त्वात्मनेपदादेव पच्यस इति । तदेवं **श्रुतिविशेषेण** शब्दविशेषेणोपलक्षितौ मध्यमोत्तमौ यथायोगं स्वार्थ- 15
माचक्षाते । [10]यः कर्तृकर्मविशेषणभूतः स पुरुष इति पूर्वाचार्याः प्राहुः । अत एव कर्तृकर्मविशेषणत्वात् पुरुषस्य भावविषयता नास्तीति तत्र लकारे मध्यमोत्तमयोरप्रयोगः। प्रथम एव शेषत्वात्तत्र प्रयुज्यते । प्रत्यक्तापरभावौ तु शब्दान्तरप्रयोगावसेयौ, आस्यते मया, शय्यते त्वया इति ॥ १ ॥

यदि प्रत्यक्ताहङ्कारेण समानाधिकरणता ततोऽन्या परभावेन समानाधिकरणता 20
चानयोः पुरुषयोर्यथायोगं वाच्या तदा [1]चेतनेष्वेवाहङ्कारपरभावयोरुपपत्तेरचेतनविषये ' शृणोत ग्रावाण ' इत्यादावनयोः प्रयोगो न प्राप्नोतीत्याशङ्क्याह ।

**सदसद्वापि चैतन्यमेताभ्यामेव गम्यते ।**
**चैतन्यभागे प्रथमः पुरुषो न तु वर्तते ॥ २ ॥**

स्वपराधिष्ठानं[1] चैतन्यं भाविकमध्यारोपितं वा [2]आभ्या[3]मभिधीयते कर्तृकर्मोपाधि- 25
भूतम् । शब्दादवगम्यमानस्येहार्थस्यान्वाख्याननिमित्तत्वाच्छाब्दं चैतन्यं सर्वत्रास्ति ।

1. A तद्भावात् उत्तमपुरुषवाच्येऽर्थे. 2. E[2] om. स्ववाचक° —कर्मोपाधिस्त्वात्मने. 3. A भिन्नः 4. A om. पचे. 5. A पच्यते 6. A कर्तापि सा°. 7. A परस्तु, E[2] om. परत्वम्. 8. A मध्यमे वा°. 9. A परस्य वचनात् पूर्वतो भिन्नः प्र°. 10. AE[2] अतः

2. 1. A चेतने चाह° 2. AE[2] भावितम्°. 3. A °मध्यवसीयते, E[2] °मवधीयते.

पदान्तरसंबन्धादनवधृतचैतन्यस्य तु समारोपकल्पना । यदि समारोपितचैतन्योऽप्यन-योर्विषयस्तदा प्रथमपुरुषस्य को विषय इत्यत आह **चैतन्यभागे** इत्यादि । अध्या-रोपितचैतन्योऽपि प्रथमपुरुषस्य न विषयः । तस्य शेषे [4]विधानात् । ततश्चानध्यारोपित-चैतन्योऽचेतनोऽस्य विषयः 'पतति कूलं' 'शुष्यन्ति व्रीहय' इत्यादि । [5]भागग्रहणं समाना-धिकरणाभ्यां स्थानित्वोपाधिकाभ्यां युष्मदस्मद्भ्यां योऽन्यश्चेतनो विषयस्तत्र प्रथमस्य प्रवृत्तेः 'भवान् पचति' 'आस्यते त्वया' 'शय्यते मया' इत्यत्रापि पदान्तरगम्यं चैतन्यमिति चैतन्यांशासंस्पर्शेन[6] साध्यसाधनभावमात्रमवगमयति प्रथमः पुरुष इति युक्तम् । चैतन्यमात्मपरवर्ति द्वौ पुरुषावुत्तममध्यमौ, चैतन्यरहितत्वं प्रथमः पुरुष इत्यत्र तात्पर्यार्थः ॥ २ ॥

बुध्यते जानाति चेतयते इत्यादौ चैतन्योपाधेः कर्तुरवगमात् कथं चैतन्यभागे प्रथमः पुरुषो न प्रवर्तत इत्यत आह ।

**बुधिजानातिचितिभिः प्रथमे पुरुषे सति ।**
**संज्ञानार्थैर्न चैतन्यस्योपयोगः प्रकाश्यते ॥ ३ ॥**

संवेदनार्थैर्बुध्यादिधातुभिर्ज्ञानलक्षणेन वार्थेन वाच्येन करणभूतेन [1]बुध्यते इत्यादौ प्रथमपुरुषोत्पत्तौ सत्यामपि न चैतन्यस्य व्यापारो व्यज्यते । धात्वर्थो ह्यत्र चैतन्यलक्षणः। स च कर्तृकर्मणोरवच्छेदक इति तद्द्वाराच्चैतन्यप्रकाशो न तु प्रथमपुरुषप्रयोगात् । अन्यत्राज्ञानार्थधातुविषये प्रथमपुरुषान्नियमेन चैतन्यानभिव्यक्तेः । न[2] हि यथा मध्यमो-त्तमाभ्यां युष्मदस्मदर्थविषयतया[3] विधानाच्चैतन्यो[4]पाधिकयोः कर्तृकर्मणोरवगतिस्तथा प्रथमात्, शेषे विधीयमानत्वेन चैतन्योपाधिनियमाभावात् । [5]युष्मदि तु विधीयमानो मध्यमो नियमेन चैतन्यमभिद्योतयति, युष्मदश्चेतनेष्वेव प्रयोगात् ॥ ३ ॥

परभावे मध्यमे विधीयमाने मतान्तरेण विशेषमाह ।

**संबोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते ।**
**तथा संबोधने सर्वां प्रथमां युष्मदो विदुः ॥ ४ ॥**

यत्र प्रैषो विवक्षितः तत्र क्रियासु विनियो[1]गावस्थापनार्थं संबोधनमस्त्येव सर्वेषामपि मते । तद्यथा गच्छ भुङ्क्ष्व इत्येवमादौ । त्वं पचसीत्येवमादावपि तु प्रैषाभावे

4. P. 1. 4. 108. 5. A भावग्र°, E[2] भानग्र°. 6. P. °शसंस्पर्शेन, A °स्पर्शे. 7. P° परिख°
3. 1. AE[2] om बुध्यत इत्यदौ. 2. AE[2] om. न हि. 3. AE[2] °विषययोर्वि°
4. om. चैतन्योपाधिकयोः–विधीयमानो. 5. AE[2] युष्मदि(दी)ति.
4. 1. P °गावधानस्याप°.



केचित् संबोधनमिच्छन्ति, ये आभिमुख्यकरणमात्रलक्षणं संबोधनमुपयन्ति । अतश्च युष्मदो विधीयमाना प्रथमापि सर्वत्र वचनत्रयरूपापि संबोधनविभक्तिरेतेषां मते ॥ ४ ॥

यद्येवं मध्यमप्रथमयोः सम्बोधनार्थत्वात् 'स्वाहेन्द्रशत्रुर्वर्धस्व', 'राजा भव युध्यस्व' इत्यादावपि मध्यमसमानाधिकरणं प्रथमान्तं पदं सम्बुद्ध्यन्तं स्यात् । नैवं दृश्यत इति कथमेतदित्याशङ्क्याह—

**संबोधनं न लोकेऽस्ति विधातव्येन वस्तुना ।**
**स्वाहेन्द्रशत्रुर्वर्धस्व यथा राजा भवेति च ॥ ५ ॥**

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः' (Vāk. III. सा. 163)

इति साध्यस्य विधीयमानस्य[1] सम्बोधनं नास्ति । न ह्यपूर्वोऽर्थ उपदिश्यमानोऽनवाप्तसत्त्वोऽप्रतीयमाननियतरूपोऽभिमुखीभावमर्हत्युपगन्तुम् । इह चेन्द्रशत्रुत्वं [2]राजत्वं च विधीयमानमिति सत्यपि प्रैषे सम्बोधनाभावः । तथा च गुणनलोपप्रतिबोधौ न भवतः । तदत्र मध्यमे सम्बोधनं नास्तीति कैश्चिदत्रैतदिष्यत इत्युक्तम् ॥ ५ ॥

यदा च युष्मदः प्रथमा संम्बोधनविभक्तिस्तदा शास्त्रकार्यमिदं सिद्धमित्याह ।

**युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ ।**
**युस्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ॥ ६ ॥**

**सिद्धत्वाद् इति** सम्बोधनविषयत्वं पुष्णाति । तथा चामन्त्रितादिरुदात्तो भवतीति प्रथमान्तस्य युष्मदो नियमेनाद्युदात्तत्वं भवति, यदि **पदाद्** उत्तर **असौ न** भवति । तद्यथा

'त्वमग्ने प्रयाजानुयाजानां पुरस्तात्'

'त्वमग्ने द्युभिः त्वमा[1]शुशुक्षणिः'

इत्यादौ । पदात् परत्वे त्वामन्त्रितमनुदात्तं भवति, तत्र निघातविधानात् । यथा

'देवीरापः शुद्धा यूयम्'

इति ॥ ६ ॥

यदि तर्हि पुरुषप्रत्ययानामर्थनियमस्तदा

'तेन दीव्यति' (P. 4.4.2.)

इत्यदौ प्रथमपुरुषेणार्थे निर्दिश्यमाने [2]शालाकिकोऽस्मि, आक्षिकोऽस्मि, शालाकिकोऽसि आक्षिकोऽसीत्यादौ मध्यमोत्तमविषये तद्धितो न स्यादित्याशङ्क्याह ।

5. 1. E[2] has a gap after विधीयमान. 2. A om. राजत्वं च.
6. 1. E[2] तमाशु.
7. 1. E[2] om. तेन दीव्यति. 2. E[2] शालातिको.

**गुणप्रधानताभेदः पुरुषादिविपर्ययः ।**
**निर्दिष्टस्यान्यथा शास्त्रे नित्यत्वान्न विरुध्यते ॥ ७ ॥**

नित्याः शब्दाः शास्त्रेणानुविधीयन्ते । तत्र चापोद्धारार्थोऽन्वाख्यानेऽङ्गभावेनोपादीयमानो नान्तरीयकपुरुषादिनियमानादरेण निमित्तभावमुपैति । ततश्च लक्षणे क्रियाप्रधानाख्यातपदोपादानेऽपि लक्ष्ये तद्धितान्तं [3]सत्वप्रधानं भवति येन लिङ्गादिना तद्धर्मेण युज्यते । एवमन्ययापि लक्षणे पुरुषसंख्याकालोपादाने सर्वत्र नित्यशब्दानुगमः कृतो भवति एतदेवोपोद्बलयितुमाह ।

**यथानिर्देशमर्थाः स्युर्येषां[1] शास्त्रं विधायकम् ।**
**किञ्चित् सामान्यमाश्रित्य स्थिते तु प्रतिपादनम् ॥ ८ ॥**

यदि शास्त्रं शब्दानां जनकं स्यात् तदा यथाशास्त्रं तेषामर्थोऽवतिष्ठेत । न चैवम्

‘ “[2]कार्ये युगपदन्वाचययौगपद्यम्[3]” ( Vā. 16 on P. 1. 1. 44, M. Bhā. 1. p. 104. l. 20. )

‘ द्वेधाप्रतिपत्तिः[4]” (vā 15 on P. 1. 1. 44, M Bhā. I, p. 104, . 13.)

इत्युक्तत्वात् । नित्याः शब्दाः शास्त्रेण ज्ञाप्यन्ते । तथा चार्थानादेशनात् किंचिदर्थरूपमदूरविप्रकर्षेण [6]समानमन्वाख्यानाङ्गभावेनाश्रित्यावस्थितमेव शब्दरूपं नियतार्थमन्वाख्यायत इति सिद्धमिष्टम् ॥ ८ ॥

अत्रैव भाष्यकारीयं निदर्शनमाह ।

**योऽश्वे यः पीठ इत्यत्र भूतयोरश्वपीठयोः ।**
**यथोपलक्षणार्थत्वं तथाऽर्थेष्वनुशासनम् ॥ ९ ॥**

‘ बहुष्ववस्थितेषु क इह देवदत्त इति प्रश्ने कथ्यते
“ ‘योऽश्वे पीठे वा तिष्ठति ” ’ ( M. Bhā. II. p. 1. l. 14 )’

इति । अत्र यथाश्वपीठयोः सिद्धयोरेव देवदत्तज्ञापनाय भूतविभक्तयोपादीयमानयोर्यथावस्थितयोरेवोपयोगो भवति, एवमर्थानामपि यथास्वभावं शब्देषूपयोगः । यथा चात्राश्वपीठयोर्विधीयमानेन देवदत्तसंज्ञारूपेण[2] योगः तथार्थानामपि प्रत्ययादिना विधीयमानेनेति न तेऽत्र [3]वाक्ये भेदेन विधीयन्ते । अपि तु तेषु सप्तम्या भूतविभक्त्या निर्दिश्यमानेषु सिद्धेषु निमित्तेषु प्रत्ययादेरेव कार्यस्य विधिरिति यथायोगं सर्वत्रेष्टसिद्धिः ॥९॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे पुरुषसमुद्देशो दशमः ।

---

3. AE [2]सत्त्° प्र°

8. 1. AE[2] तेषां. 2. A E[2]P °त्तययोः 3. A om. यौगपद्यम्. 4. A°पत्तेः
5. A चार्थानां देशनात्. 6. A समानत्वमं bभावेनाश्रि°_

9. 1 M. Bhā प्‍as योऽश्वे यः पीठे, 2. E[2] om रूपेणयोगः P रूपेणोपयोगः
3. A E[2]वाक्यये°

# अथ संख्यासमुद्देशः ।

इदानीं संख्यां विचारयति ।

**संख्यावान् सत्त्वभूतोऽर्थः सर्व एवाभिधीयते ।**
**भेदाभेदविभागो हि लोके संख्यानिबन्धनः ॥ १ ॥**

भेदापोद्धारलक्षणा संख्या एकादिका[1] परार्धपर्यवसाना । भेदश्चेदं तद् इति सर्वनामप्रत्यवमर्शयोग्यवस्तुगतः । तथा च सर्व एव द्रव्यात्मार्थो भिन्न एको द्वौ बहव इत्यादिसंख्यायुक्तो व्यवह्रियते । [2]द्वित्वादिका संख्या भेदमेकत्वसंख्या चाभेदमाश्रये व्यवहारयति । तथा च कार्यादस्माद् द्रव्ये संख्या निश्चीयते । पृथक्त्ववशाद्धि द्रव्याणां पृथक्त्वेन व्यवहारः, एकादिव्यवहारस्तु संख्यावशात् संसर्गवादिभिरभ्युपगम्यते । वृत्तावपि च सत्त्वभूत उपसर्जनार्थः संख्यावानेवावधार्यते निस्संख्याव्ययार्थभेदेन । सैव [3]चाभेदैकत्वसंख्या [4]व्याख्यास्यते । विशेषप्रतीतिनिबन्धनाभावाच्च संख्याभेदो नावधार्यते । यत्र त्वस्ति निबन्धनं शौर्पिकादौ[5] तत्र भवत्येव विशेषावसाय इति वक्ष्यत एवेति सर्व एव सत्वभूतोऽर्थः संख्यावानभिधीयते इति [6]व्याप्तिसिद्धिः । यत्रापि तद्धितार्थनिर्देशादावनङ्गं संख्या, तत्रापि नान्तरीयकतया सत्त्वभूतस्यार्थस्य संख्योपादानं भवत्येवेत्यस्ति व्याप्तिः । तदित्थं सत्वभूतस्यार्थस्यैकत्वानेकत्वभेदः संख्यानिबन्धन इति ॥१॥

वैशेषिकाणां द्रव्याश्रिता गुणात्मिका संख्या । न च पदार्थ एवासहाय एकत्वं ससहायश्च यथायोगं द्वित्वादीति सहायविरहतद्योगयोर्धर्मान्तरत्वाभावान्न कश्चिदन्यो द्रव्यात् संख्यालक्षणो गुण इति व्यतिरिक्तसंख्याभाव इति वाच्यम् । प्रत्ययभेदात् । अन्यो हि ससहायताप्रत्ययोऽन्यश्च द्वौ त्रय इत्यादिप्रत्ययः । ससहायेष्वपि चैकत्वप्रत्ययोऽस्तीति न तद्विरह एवैकत्वसंख्या । अबाध्यमानविलक्षणप्रत्ययावेदितसद्भावा हि पदार्था यथायथं भिन्नस्वभावा एव न्याय्याः । अनेकसंख्या च शतादिकानेकस्मिन् द्रव्ये समवेतापेक्षाबुद्धिप्रभाविताववधार्यते[1] एव व्यासज्यवृत्तिः संयोगविभागादिवत् । न ह्यनेकद्रव्यं नास्ति, तत्र वा[2] नेयं प्रतीतिः । [3]शतमित्यादिका केवलमनेकाश्रयत्वेऽपि सामान्याद् भिद्यते । संख्यासामान्यस्य [4]प्रत्याश्रयपरिसमाप्तत्वादर्थान्तरापेक्षत्वात्तु सङ्ख्याया इत्यादिवैशेषिकोक्तयुक्तयोऽनुसरणीयाः । अव्यतिरिक्तधर्मवादिनस्त्वव्यतिरिक्तामाश्रयात् संख्यां मन्यन्ते । समवायेन तिरोहितभेदत्वाद् व्यतिरेकानवधारणाच्चेदं मतम् ।

---

1. 1. M एकादिपरार्धपर्यवसानः 2. M om. द्वित्वादिका–निश्चीयते. 3. A om. चाभेदैकत्व. 4. A अभ्युपन्यस्यते. 5. A स्वार्थिकादौ, E[2] शौर्यतादौ, M om. शौर्पिकादौ. 6. AE[2] तद्व्या°.

2. 1. AE[2] °भाविता°. 2. A चानेकप्र°. 3. A शतादिका, E गतमित्या°. 4. P प्रत्ययाश्र°.

अत्रापि तद्दार्शिता युक्तयो वाच्याः । तथा ह्यत्यन्तभेदे तद्विशिष्टप्रत्ययानुदय इति काल्पनिक एव भेद इति मन्यन्ते ॥ १ ॥

अस्माकं तु शब्दप्रमाणकानां पदार्थविचारानादरात् यथायथं पदार्थकल्पना तीर्थिकैः कृता । तामाश्रित्य लक्षणाङ्गाः पदार्था व्यवस्थाप्या इत्याह ।

**स धर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा ।**
**भेदहेतुत्वमाश्रित्य सङ्ख्येति व्यपदिश्यते ॥ २ ॥**

[5]सङ्ख्यालक्षणो धर्मस्तेषां सत्त्वभूतानां सङ्ख्येयानामात्मैवाभिन्न एव वास्तु, तेभ्यो व्यतिरिक्तो वास्तु । किमनेन निष्प्रयोजनेनास्माभिर्विचारेण, शब्दार्थस्येह विचारयितुं प्रक्रमात् । शब्दाच्चैको द्वौ त्रय '[6]इत्यादिभेदव्यवहारे' हेतुः कश्चिद् धर्मोऽवधार्यते । न हि पदार्थमात्रादनुपाधेरेव व्यवहारो घटते । स च धर्मः सङ्ख्ष्ट इति सङ्ख्येत्यन्वर्थेन नाम्ना व्यवह्रियते ॥ २ ॥

यदि द्रव्याश्रिता सङ्ख्या [1]कथं गुणादीनां तन्निमित्तो व्यवहार इत्याशङ्क्याह ।

**समवेता परिच्छेद्ये क्वचिदन्यत्र सा स्थिता ।**
**प्रकल्पयति भावानां सङ्ख्याभेदं तथात्मनः ॥ ३ ॥**

या द्रव्ये परिच्छेद्ये भेदहेतुः संख्या सा तत्रैव समवेता गुणत्वात् । यदा तु गुणादीनां परिच्छेदिका सा तेभ्योऽन्यत्र द्रव्येऽपि स्थिता तत्रैव [2]तस्याः समवाया-[3]न्निर्गुणानामपि[3] तेषामेकार्थसमवायात् स्वनिमित्तं व्यवहारं वर्तयति । आत्मनोऽपि च संख्या द्रव्येऽपि स्थिता भेदं व्यवहारयति । तद् यथा शतं शते शतानीत्यादि । न हि शतसंख्यायामेकत्वद्वित्वबहुत्वानि समवेतानि विरोधादद्रव्यत्वान्निर्गुणत्वाच्च । एवं द्रव्यगता सङ्ख्या रूपादिषु समारोप्यत इति 'चतुर्विंशतिर्गुणाः' इति व्यवहारः । तथैव[4] 'पञ्च कर्मजातयो द्वे सामान्ये' इत्यादि । 'तथा चत्वारोऽभावाः' इत्यादिरपि निरुपाख्यस्याभावस्य वस्तुधर्मायोगादौपाधिको भेदव्यवहारः । एवञ्च गौणमुख्यभेदेन व्यवहारोपपत्तेस्तावन्मात्रस्य[5] चेहोपयोगात् तीर्थिकपरिकल्पितप्रक्रियानादरेण भेद-गणनमात्रलक्षणा सङ्ख्या सर्वत्राविशेषेण वर्ण्यते ॥ ३ ॥

द्रव्यसमवायेऽपि गुणादिषु सङ्ख्याया भेदव्यवहारनिमित्तत्वे दृष्टान्तमाह ।

**परत्वे चापरत्वे च भेदे तुल्या श्रुतिर्यथा ।**
**सङ्ख्याशब्दाभिधेयत्वं भेदहेतोस्तथा गुणे ॥ ४ ॥**

5. M om. सङ्ख्यालक्षणो–अवधार्यते । 6. E[2] P °त्यादेर्भेद° 7. A °भेदे व्यवहारहेतुः.

3. 1. M om. कथं–प्रकल्पयति भावानां संख्या. 2. AE[2] तस्य. 3. A om. निर्गुणानामपि तेषामेकार्थसमवायात्. 4. M om. तथैव–भेदव्यवहार. 5. M. what is omitted under note 4. is inserted here.



इह देशसंबन्धात् परत्वापरत्वलक्षणौ गुणावपेक्षाबुद्धिप्रभावितौ द्रव्ये समवेतावुत्पद्येते । तथा[1] च ताभ्यां द्रव्यं परमपरमिति व्यवह्रियते । तद्वदेव च गुणादयोऽपि परापरशब्दाभ्यामभिधीयन्ते । ततश्च यथात्र गुणविषये[2] भेदव्यवहारे तावेव द्रव्यगुणौ [3]सव्यापाराविति परः अपरः इत्यभिन्नमभिधानं **तथा भेदहेतोः** द्रव्यसमवेताया एव सङ्ख्याया गुणादिविषयेऽपि तथैवैकादिशब्देन व्यवहारः, न त्वपरा गुणादावेकत्वादिका संख्या विद्यत इत्यर्थः । देशेन संबन्धः साक्षाद् द्रव्यस्यैवेति तन्निमित्तयोः परत्वापरत्वयोर्द्रव्य एव समवायो निश्चित इति दृष्टा[4]न्तोपपत्तिः ॥ ४ ॥

किं बहुना स्वाश्रयधर्मेणाश्रितानां व्यवहारः[1] सर्व एव दृष्ट इत्याह ।

**अस्वतन्त्रे स्वतन्त्रत्वं परधर्मो यथा गुणे ।**
**अभेद्ये भेद्यभावोऽपि द्रव्यधर्मस्तथा गुणे ॥ ५ ॥**

द्रव्याश्रयिणि नित्यपरतन्त्रे गुणे पटस्य[2] रूपमिति द्रव्यधर्मस्वातन्त्र्यं यथा व्यपदिश्यते तथा सङ्ख्यया [3]व्यवच्छेत्तुमनर्हत्वेऽपि तदवच्छेद्यत्वं स्वातन्त्र्याविनाभावी **द्रव्यधर्मो** योक्ष्यते पटस्य रूपमेकं द्वे त्रीणीत्यादि । अयमत्र भावः । इह यदा शुक्लः पट इत्यादिर्द्रव्योपसर्जनभावमापन्नो गुणोऽभिधीयते तदासौ द्रव्यसामानाधिकरण्यात् तद्धर्मेण[4] समन्वयं सहत एव । द्रव्यान्निष्कृष्य तु पटस्य शुक्ल इत्याद्यभिधाने स्वातन्त्र्यमात्मीयं द्रव्यरूपमसंभवीति स्वाश्रयायातं तद् व्यवस्थापनीयम् । तदेव च शब्दशक्त्यानुवर्तते ॥ ५ ॥

तथा हि

**स्वबुद्ध्या तमपोद्धृत्य लोकोऽप्यागममाश्रितः ।**
**स्वधर्मादन्यधर्मेण व्याचष्टे प्रतिपत्तये ॥ ६ ॥**

न केवलं वैशेषिको गुणस्य द्रव्यधर्मेण व्यवहारं वर्तयति[1] यावद् द्रव्यादन्यो द्रव्ये समवेतो गुण इत्येवंभूतम् । वैशेषिकागममनुवर्तमानो **लोकोऽपि** तस्माद् द्रव्यादपोद्धारबुद्ध्या तं गुणं भिन्नं स्वतन्त्रं निश्चित्य द्रव्यधर्मेण संख्यावत्त्वादिना गुण-[2]धर्मविलक्षणेन परं प्रतिपादयति शब्दशक्तिमनुसृत्य । तद् यथा पटस्येदमेकं चित्रं रूपम् । तदभावपक्षे तु प्रत्यवयवमनेकं भिन्नरूपमेव रूपमित्यवयविनि बहूनि रूपाणि॥ ६॥

4. 1. A om. तथा च, E[2] तथा चतुर्भ्याम. 2. P °विषयभे°. 3. AE[2] °गुणव्यापा° 4. A P दृष्टान्ततोप° E[2] has gaps followed by न्तरोपपत्ति ।

5. 1. M om. व्यवहार.–तदवच्छेद्यत्व. Thus the whole of Kā. 5 is omitted. 2. A परस्य, E[2] गुणपदस्य. 3. P अवच्छे°. 4. A °ण्याद्धर्मे°.

6. 1. A वर्णयति, E[2] तर्जयति. 2. AE[2] गुणवि°.

यदि वा शब्देन संसर्गिधर्माच्छुरितस्य वस्तुनोऽभिधाने द्रव्यगुणादयस्तत्र समाना इत्याह ।

**परोपकारतत्त्वानां स्वातन्त्र्येणाभिधायकः ।**
**शब्दः सर्वपदार्थानां स्वधर्माद् विप्रकृष्यते ॥ ७ ॥**

5 परेणान्येन धर्मेणोपक्रियमाणमवच्छिद्यमानं तत्त्वं स्वरूपं[1] येषां ते परोपहितोपकाराः पदार्थाः शब्देनाभिधीयन्त इति व्यवहारे सर्वार्थानां द्रव्यगुणादीनामनुपाधि स्वरूपं न[2] शब्देन स्पृश्यते । न हि संसर्गिधर्मविविक्ता निजेन शुद्धेन वास्तवेन रूपेण व्यवहारमवतरन्त्यर्थाः । तथा च द्रव्यवद् गुणोऽपि[3] पटस्य[4] रूपमिति स्वातन्त्र्येणाभिधीयमानः संसर्गिसंख्यादिकृतोपकार एवाभिधीयते । **शब्दो** हि न
10 गुणानामेव, अपि तु द्रव्याणामप्यपरोपाधिकेन रूपेणोपलक्षितानां **स्वधर्माद्** वाचकत्वाद् दूरीभवति । सामान्याद्यसंसृष्टे तस्य सम्बन्धव्युत्पत्तेः कर्तुमशक्यत्वादिति सर्वत्र शब्दः परोपदर्शितविषय एव ॥ ७ ॥

अर्थोऽपि परोपकाराहितविशेष एवेत्यत्र दृष्टान्तमाह ।

**यथैवाविषयं ज्ञानं न किञ्चिदवभासते ।**
15 **तथा भावोऽप्यसंसृष्टो न कश्चिदुपलभ्यते ॥ ८ ॥**

**ज्ञानं** बोधमात्रस्वभावं नियमेन व्यवहारयोग्यं विषयपारतन्त्र्यात् तत्कृतोपरागविवेकेना[1]शक्यव्यवहारं यथा एवं ज्ञेयमपि संसृष्टधर्मोपरागरहितं वस्तुमात्ररूपतयापि ज्ञेयतामभिधेयतां च नासादयतीत्यत्र परोपकारतन्त्रमेवैतत् ॥ ८ ॥

यद्येवमिदं सामान्यं भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तम्, अयं विशेषो व्यावृत्ति-
20 प्रत्ययहेतुरित्येवं द्रव्यसंसर्गविविक्तः कथं व्यवहारः सामान्यादिषु अपरोपाधेस्तस्याभावादित्याशङ्कयाह ।

**भेदेन तु समाख्यानं यल्लोकोऽप्यनुवर्तते ।**
**आगमाच्छास्त्रसदृशो व्यवहारः स वर्ण्यते ॥ ९ ॥**

[1]सामान्यविशेषाभ्यां द्रव्येष्वभिन्नभिन्नप्रत्ययाविति निष्कृष्टस्वभावानामुपाधीनां
25 नित्यपरतन्त्राणामपि भेदेन स्वतन्त्रतया प्रतिपादनं शास्त्रे तावदपोद्धाराश्रयेण युक्तम् । लोकोऽपि शास्त्रवासनया तदनुगच्छतीति वैशेषिकागमानुसारेण व्यवहारो लौकिकैः प्रतन्यते ॥ ९ ॥

---

7. 1. A रूपं. 2. A om. न. 3. M om. गुणोऽपि–शब्दो हि न. 4. AE² घटस्य.
8. 1. AE² M °केन शक्य°.
9. 1. E² has a gap here.



तथा च प्रसिद्धेरत्रापि संसर्गिधर्मपरिकल्पना न्याय्येत्याह ।

**बुद्धौ[1] स्थितेषु तेष्वेवमध्यारोपो न दुर्लभः ।**
**परधर्मस्य न ह्यत्र सदसत्त्वं प्रयोजकम् ॥ १० ॥**

द्रव्यान्निष्कृष्यापोद्धारबुद्ध्यैवं भेदेन सामान्यादिषु समाख्याने [2]**परधर्मस्य**
स्वातन्त्र्याविषयस्योपाधिमत्त्वस्य **अध्यारोपो न दुर्लभः**, बुद्ध्या सर्वनामप्रत्यवमर्शयोग्यतापादनादुपाधिमद्रूपतायामुपाधिसंसर्गस्य न्याय्यत्वात्[3] । अध्यारोपे च वास्तवे सत्त्वासत्त्वे न प्रयोजके येनोपाधिभूते वस्तु[4]सति सामान्ये विशेषे च स्वातन्त्र्याभावात् कथमुपाधियोगोऽसन्[5] कल्प्यत इति चोद्येत । अत्यन्ताविद्यमानेऽपि हि बहिरर्थे बुद्ध्या समावेशो दृश्यते समुद्रः कुण्डिकेति यथेति कथञ्चिद् बहिः
10 सत्त्वे धर्ममात्रारोपो न विरुध्यते । अत एवासत्त्वमपि यावन्नाध्यारोपे उपयुज्यते । सतो[6]ऽप्यसत्त्वारोपादपुत्रोऽयमित्य(न ?)तिशयख्यापनार्थमसत्त्वमप्यप्रयोजकमित्युक्तम् ॥ १० ॥

यतश्च स्वातन्त्र्येणाध्यारोपस्ततः—

**सामान्येष्वपि सामान्यं विशेषेषु विशिष्टता ।**
**सङ्ख्यासु सङ्ख्या लिङ्गेषु लिङ्गमेवं प्रकल्पते ॥ ११ ॥**

15 गोत्वादिसामान्यभेदेषु बुद्ध्यावसितेषु अन्वयिरूपपरिकल्पनया[1] सामान्यान्तरयोगो न[2] विरुध्यते, द्रव्यायमाणानां[3] बुद्ध्या निरूपणात् । एवं **विशेषेषु** तथैव बुद्ध्या द्रव्यायमाणेष्ववसितेषु विशेषो विशेष इत्यभिन्नाभिधानप्रत्ययहेतुः **सामान्यं** परस्परव्यावृत्तप्रत्ययहेतुश्च विशेषो युज्यते । द्रव्यवद् उपाधिमत्त्वेनावसायात् शतादिसंख्यायां च शतं शते शतानीत्यादिप्रातिपदिकेन द्रव्यायमाणायामभिधीयमानायामन्या **सङ्ख्या**
20 द्रव्यधर्म एवारोप्यते । स्त्रीत्वादिषु च **लिङ्गेषु** तथैव द्रव्यायमाणेषु शब्देनाभिहितेषु द्रव्यधर्मलिङ्गान्तरयोगः पुमान् पौंस्नं पुंस्तेति, गार्ग्यायणी कारीषगन्ध्येति च स्त्रीत्वेऽपि स्त्रीत्वाश्रयो द्वितीयस्त्रीप्रत्ययः । तथा च भाष्यकारः—

'भावोऽपि भावेन युज्यते, स्त्रीत्वं स्त्रीत्वेन' (M Bhā. II. p 200, l. 8, 15) इत्याह ॥ ११ ॥

तदेवं प्रासङ्गिकमभिधाय प्रकृतं निगमयति । 25

---

10. 1. P बुद्ध्यास्थितेषु. 2. A समाख्यानिबन्धनधर्मस्य, E² om. पर–स्वातन्त्र्य. 3. M here repeats अध्यारोपो( न ) दुर्लभः । बुद्ध्या सर्वनामप्रत्यव and om. अध्यारोपे च. 4. A वस्तुनि. 5. A ऽयं, E² संकल्प्यते. 6. AE² सत्त्वे.

11. 1. A °परिकल्पनायां, E² °परिकल्पना. 2. A °गोऽत्रापि कल्पते, E² न विकल्पते, 3. A °माणाया

**अतो द्रव्याश्रितां सङ्ख्यामाहुः संसर्गवादिनः ।**
**भेदाभेदव्यतीतेषु भेदाभेदविधायिनीम् ॥ १२ ॥**

यतो द्रव्यगतयैव सङ्ख्ययोक्तेन न्यायेन गुणादीनामपि तन्निमित्तो व्यवहारः सिध्यति, अतो धर्माणां संसर्गमेकत्र द्रव्ये येऽभ्युपयन्ति [1]काणादास्ते द्रव्यसमवेतामेव सङ्ख्यां ब्रुवते, निरुपाधिषु भेदाभेदव्यतिक्रान्तेषु द्रव्येषु गुणादिषु च भेदाभेदप्रत्ययनिमित्तभूताम् । एकत्वसङ्ख्या अभेदप्रत्ययनिमित्तं द्वित्वादिका भेदप्रत्ययनिमित्तमित्यर्थः ॥ १२ ॥

यदि तर्हि स्वयं भेदाभेदव्यतीताः पदार्थाः कथं तेभ्योऽन्या सङ्ख्या तांस्तथा व्यवहारयेदित्यत आह ।

**आत्मान्तराणां येनात्मा तद्रूप[1] इव लक्ष्यते ।**
**अतद्रूपेण संसर्गात् सा निमित्तस[2]रूपता ॥ १३ ॥**

इह परस्परविविक्ताः पदार्था द्रव्यादयो यथालक्षणं प्रमाणेन प्रतीताः । तत्र चान्येषामपि द्रव्याणाम् **अतद्रूपेण** गुणादीनां(दिना ?)येन **संसर्गात्** समवायाख्यात् संबंधात् **तद्रूप इव** गुणादिरूप इवात्मा **लक्ष्यते** समवायेन भेदतिरोधानात्, **सा** आभा[3]समात्रे परं **निमित्तस्य** गुणादेः **सरूपता** । तस्येव रूपं स्वभावोऽस्येति तत्स्वभावता, न तु परमार्थतः तत्स्वभावत्वमेव, यथायथं स्वप्रमाणतो भिन्नत्वावेदनादिति । परोपधानेन व्यवहारेऽपि न पदार्थाः सङ्कीर्यन्त इत्यर्थः ॥ १३ ॥

कथं न सङ्कीर्यन्ते, यावता तथैव सर्वदैवैषामाभास इत्याशङ्क्य कार्यभेदाद् भेदमाह

**संसृष्टेष्वपि निर्भागे भूतेष्वर्थक्रिया यथा ।**
**सत्त्वादिषु च मात्रासु सर्वास्वेवं प्रतीयते ॥ १४ ॥**

पृथिव्यादिषु **भूतेषु** अपृथग्भावेन संसर्गं प्राप्तेषु [1]धृतिसङ्ग्रहपक्तिव्यूहावकाशदानलक्षणा **अर्थक्रिया यथा** प्रत्येकं भिन्नैव, सत्त्वरजस्तमोलक्षणेषु च सर्वभावगतेष्वपि निर्भक्तेषु प्रकाशप्रवृत्तिनियमलक्षणार्थक्रिया विलक्षणा तथा द्रव्यगुणकर्मसामान्यविशेषलक्षणास्वपि **मात्रासु** अन्योन्यसाहचर्येणापि निर्भक्तासु वस्तुभागरूपास्ववस्थितासु भिन्ना एवार्थक्रिया । तथा हि द्रव्यं गुणानामाश्रयभावेनार्थक्रियाकारि । गुणास्तु द्रव्ये[2] स्वरूपसमर्पणेन यथायथमुपयोगिनः । एवं शेषेष्वपि यथायोगं वाच्यमिति निमित्तनिमित्तिनोरर्थक्रियाभेदाद् भेदसिद्धिः स्वरूपस[3]म्भेदेऽपि । गतमेतत् ॥ १४ ॥

---

12. 1. E ²तान्नुदाः. 2. A. °ख्यामभे° 3. A. °दिसां भेद°
13. 1. AE² तद्रूपं तूपल°. 2. AE² °तस्वरू°. 3. AE² स्वाभासमात्रं परनि°.
14. 1. A प्रतिष्ठासं. 2. A द्रव्यस्य. 3. M °पसंभवे.



इदानीं संख्या स्वरूपेण परीक्ष्यते । तत्र द्वित्वादिका संख्या किमेकत्वादन्या, नान्या वा । अन्यत्वे द्वित्वादीनामेकत्वापेक्षोत्पत्तिर्न स्यात् । अनन्यत्वेऽपि तु भेदो निर्निबन्धन इत्यत आह ।

**द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वका यतः ।**
**विना तेन न सङ्ख्यानामन्यासामस्ति सम्भवः ॥ १५ ॥**

**तेन** एकत्वेन **विना अन्यासाम्** द्वित्वादीनां संख्यानां यतः **सम्भवः** उत्पत्तिः **नास्ति,** अतो द्वित्वादीनाम् **एकत्वं योनिः**[1] कारणमिति तदपेक्ष्य द्वित्वाद्युत्पत्तिः, न तु तदभिन्ना द्वित्वादिकाः सङ्ख्याः । कथं तेन विनान्यासामसम्भव इत्यत्र युक्तिः **भेदास्तत्पूर्वका यतः** इति । अभेदपूर्वका भेदा इति सहजमेकत्वं भावानामाद्यम् । द्वित्वादयस्तु तत्पूर्वकाः पदार्थान्तरसंनिधौ जायन्त इति दृष्टम् ॥१५॥

**एकत्वे बुद्धिसहिते निमित्तं द्वित्वजन्मनि ।**
**एकत्वाभ्यां समुत्पन्नमेवं वा तत् प्रतीयते ॥ १६ ॥**

प्रथममिन्द्रियसंयुक्तयोर्द्वयोर्द्रव्ययोर्ये **एकत्वे** समवेते तदाश्रितं यत् सामान्यं तत् संयुक्तसमवेतसमवायादिन्द्रियार्थसन्निकर्षात् प्रतीयते । अतस्तद्विशेषणावच्छिन्नयोरेकत्वगुणयोर्ज्ञानं, तदपेक्षे ते एकत्वे स्वाश्रयद्रव्यसमवेतं[1] द्वित्वं जनयतः । द्रव्यद्वयं[2] हि द्वित्वस्य समवायिकारणम्, एकत्वगुणावसमवायिकारणम्, कार्यैकार्थ[3]समवायलक्षणया लब्ध्या प्रत्यासत्त्या । अपेक्षाबुद्धिर्निमित्तकारणम्, न ह्यपश्यत एकत्वे द्वित्वबुद्धिरित्यन्वयव्यतिरेकाभ्यां बुद्धेः कारणत्वनिश्चयः । समवायित्वं च द्रव्यस्यैव, प्रत्यासत्त्यभावाच्चासमवायित्वमपि नास्तीति निमित्तकारणं बुद्धिरवस्थाप्यते । समवाय्यसमवायिव्यतिरिक्तं हि कारणं सामान्यसमाख्यया निमित्तमित्युच्यते । तदेवं कारणत्रितयाज्जाते द्वित्वे प्रथमं तत्सामान्यज्ञानं ततस्तद्गुणज्ञानं ततस्तद्विशिष्टे द्वे द्रव्ये इति ज्ञानमिति काणादनयः ।

"नागृहीतविशेषणा हि विशेष्यबुद्धिः"

इति तेषामाम्नायः । अन्ये त्वेकत्वबुद्ध्यो[4]र्द्वित्वपरिच्छेद एवान्वयव्यतिरेकाभ्यां व्यापारावधारणादेकत्वे बुद्धिनिरपेक्षे एव द्वित्वं जनयतः । तथा च[5] जातमेकत्वबुद्धिपूर्वकं गृह्यत इति मन्यन्ते । प्रक्रियाभेदोऽत्र ग्रन्थगौरवभयान्न प्रदर्श्यते । प्रथमकाण्ड एव तु कथितः ॥ १६ ॥

द्वित्वस्य रूपेऽपि मतभेद इत्याह ।

---

15. 1. E² om. योनिः.
16. 1. A °वेते, E² °वेतत्वे. 2. A द्रव्ये तथाहि द्रव्यं समवायि. 3. P. कार्येणैका° 4. AE² बुद्ध्या, 5. A जानमे°, P. °तथा जातये°

**एकत्वसमुदायो वा सापेक्षे वा पृथक् पृथक् ।**
**एकत्वे द्वित्वमित्येवं तयोर्द्विवचनं भवेत् ॥ १७ ॥**

एकत्वाभ्यां नापूर्वं द्वित्वं जन्यते । अपि तु तयोः समुदायो वनयूथादिवदवयवाभिन्नो द्वित्वम् । तथा चावयवाश्रयस्तत्र भिन्नाकारावभासः, सङ्घाश्रयश्चैकाकारावभासः प्रत्यय उपपद्यते । वृक्षसमुदायश्च यथा वनमित्यनेन विलक्षणेन शब्देनोच्यते तथैकत्वसमुदायोऽपि द्वित्वमिति । एवं समुदायप्राधान्यम् । यदा त्ववयवप्राधान्यविवक्षा, तदा **एकत्वे** एव परस्परापेक्षे द्वित्वमिति व्यवह्रियेते[1], नातोऽन्यः कश्चित् गुण इत्येतद्दर्शनद्वयमव्यतिरेकपक्षे । अत्र च पक्षे **तयोः**एकत्वयोः **द्विवचनं भवेद्** अवयवप्राधान्यात् । एकवचनं त्वेकाकारावभासपूर्वकं द्वित्वमिति दृश्यते इति नैष पक्षो न्याय्य इत्यर्थः । तथा हि

द्व्येकयोः... ( P. 1. 4. 22. )

इति [2]द्विवचनं द्वित्वे विधीयमानं द्वित्वस्यैकत्वाभ्यामव्यतिरेकादेकत्वयोरेव तत् स्यात् । तथा च द्व्येकयोरित्येकत्वत्रयस्य द्वन्द्वविषयत्वात् बहुवचनं स्यादिति भावः । तस्मादेकाकारावभासप्रत्ययविषयमेकत्वाभ्यां जनितमन्यदेव द्वित्वमित्येव न्याय्यम् । एवं त्रित्वादयोऽपि दशसंख्यापर्यवसाना वेदितव्याः । विंशत्यादिसंख्यायां तु विचारो भविष्यति ॥ १७ ॥

नन्वेवं द्वित्वबहुत्वसंख्याभेदस्यैकत्वात् कथं द्वयोर्द्विवचनं बहुषु बहुवचनमिति व्यवहार इत्यत आह ।

**एकोऽपि गुणभेदेन सङ्घो भेदं प्रकल्पयेत् ।**
**आश्रयाश्रयिभेदो हि तदाश्रयनिबन्धनः ॥ १८ ॥**

द्वित्वबहुत्वादिलक्षणस्सङ्घः समुप[1]जातो व्यतिरिक्तः कल्पितो वेति द्वैतम् । तत्रोत्पत्तिपक्षे जन्यपरवशत्वाज्जनकाः गुणाः । कल्पितपक्षे त्ववयवाः समुदायपारतन्त्र्याद् गुणाः । तेषां भेदेन द्वित्वबहुत्वादेर्भेदः स्वात्मना एकस्यापि । तथा च द्वयोर्बहुष्विति च व्यवहारोपपत्तिः । [2]यस्मादाधाराधेययोर्यो **भेदो** भेदव्यवहारः स **तदाश्रयेण**[3] सम्बन्धेन हेतुना भवति । तथा ह्याश्रितस्य भेदेन क्वचिदाश्रयस्य भेदो व्यवह्रियते । तद् यथा पाटवस्य भेदेनैकोऽप्यर्थात्मा ' 'परुद्भवानपटुरासीत्, पटुतरश्चैवमोऽन्य एवासि संवृत्तः ' इति भिन्नो व्यवह्रियते । तथैहैकत्वानां जनकत्वेनाश्रीयमाणत्वादाश्रयाणां भेदे तदाश्रितं तज्जन्यं बहुत्वादि भेदेन व्यवह्रियत इत्यर्थः ।

---

17. 1. A व्यवह्रियते. 2. AE[2] द्वित्वं द्वित्वे.

18. 1. A समुदायो. 2. A तस्मा. 3. A तदाश्रयाश्रयेण. 4. A om. परुद्



द्व्येकयोः ( P. 1. 45. 2. )

इत्यत्र तु द्वित्वं स्वगतेनैवाभेदेन [5]निर्दिश्यते ॥ १८ ॥

तदेवं दशसंख्यापर्यवसाना सङ्ख्या विचारिता । इदानीं विंशत्यादिः सङ्ख्याभेदो विचार्यते । तत्र चोत्पत्तिरेकत्वैरेवापेक्षाबुद्धिसहितैरिति समानं पूर्वेण । किन्तु तदभिधायी शब्दः सङ्ख्यासङ्ख्येयोभयवचनो दृश्यते, गवां विंशतिः, विंशतिर्गाव इत्यादिः । तत्र यदि प्रकृतमर्थनिर्देशमनपेक्ष्य द्वौ दशतौ विंशतिरिति स्वार्थे निपातनं वर्ण्यते तदा विंशतिगवं त्रिंशत्पूलीति समासो न स्यात् । द्वौ हि दशद्वर्गौ विंशतिः, त्रयो दशद्वर्गास्त्रिंशदिति संख्येयेन सामानाधिकरण्याभावः एकवचनं च न स्यात्, विंशतिः, त्रिंशदिति यथायथं वर्गभेदनिबन्धनस्य वचनभेदस्य प्रसङ्गात् । तदुक्तं वार्त्तिके —

' विंशत्यादयो दशदर्थे चेत् समासवचनानुपपत्तिः '

( Vā. 1. on P. 5. 1. 59. M. Bhā. II p. 355. l. 7. )

इति । दशद्वर्गद्वयाभिधायिनो द्विशब्दात् स्वार्थे शतिच्प्रत्ययो द्विशब्दस्य च विन्भाव इतीष्टः समासो वचनं च न स्यात् । गवां विंशतिर्गोविंशतिरिति समासो भवत्येव । 'क्रोशशतयोजनशतयोः' इत्यादिज्ञापकाच्चात्र गुणेन नेति निषेधो[1] न भवति । यदि वा गुणात्मन्यवस्थितत्वाद् विंशत्यादीनां

तत्स्थैश्च गुणैः ( Vā. 2. on P. 2. 2. 8. )

इति प्रतिप्रसवः समासस्य

गुणेन न ( cf. P. 2. 2. 11. )

इति निषिद्धस्य । अथ सङ्घ इत्यनुवृत्तेः परिमाणोपाधिकात् परिमाणिनि सङ्घे प्रत्ययो द्वौ दशतौ परिमाणमस्य सङ्घस्य विंशतिः सङ्घ इति तदा सङ्घस्यैकत्वादेकवचनं सिद्ध्यति समासानुपपत्तिस्तु तदवस्था । विंशतिर्गोसङ्घ इति चानिष्टं स्यात् । विंशको गोसङ्घ इति हीष्यते । तथा च वार्त्तिकम् ।

" परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम् ( Vā. 2 on P. 5. 1. 59, M. Bha. II, p. 355. l. 14. )

इति । द्वौ दशतौ परिमाणं यस्य स गोसङ्घो विंशतिरित्यभिधीयते । तत्र विंशतिः परिमाणं यस्य सङ्घस्येति सङ्घान्तरस्य परिमाणिनोऽसम्भवाद् विंशकः संघ इति सिद्ध्ये

' विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ' ( P. 5. 1. 24. )

इति ड्वुन्प्रत्ययः स्वार्थे वक्तव्य इत्यर्थः । तथा

---

5. E[2] व्यभिदिश्यते.

19. 1. M निषेधो न भवति दस्य अर्थ°.

' षष्ठीवचनविधिश्च ' (Vā. 3. on P. 5. 1. 59. M. Bhā. II. p. 355, l. 16.)

इत्युक्तम् । इह सङ्घे परिमाणिनि विंशत्यादीनां केवलानां प्रयोगो नेष्यते, भिन्नेषु तु द्रव्येषु परिमाणिषु प्रत्ययोत्पत्तावाश्रीयमाणायां विंशतिशब्देन द्रव्याणामभिधानाद् व्यतिरेकाभावाद् गवां विंशतिरिति षष्ठी न प्राप्नोति । द्रव्यसामानाधिकरण्याद् बहुवचनप्रसङ्गश्च । तदेवं व्युत्पत्तिपक्षे दूषणान्यभिधायाव्युत्पत्तिपक्षं निर्दोषमाश्रित्यारम्भः प्रत्याख्यातव्यः

' अनारम्भो वा प्रातिपदिकविज्ञानाद् यथा सहस्रादिषु '
( Vā. 4. on P. 5. l. 59, M. Bhā. II, p. 355 l. 20 )

इति । वाशब्दस्त्वर्थे । सहस्रादिवदव्युत्पन्ना एव विंशत्यादयः

अर्थवदधातुः.... ( P. 1. 2. 45. )

इति प्रतिलब्धप्रातिपदिकसंज्ञा अर्थवत्सूत्रेणानुज्ञातसाधिमानः सङ्ख्यायां सङ्ख्येये च प्रयोगभेदेनाक्षादिवदनेकार्थतया स्वभावतो वर्तमाना रूढशब्दत्वाच्च नित्यलिङ्गसंख्या यथा आपो दारा इत्यर्थः । एवं वार्त्तिककारेणावस्थापिते भाष्यकारो व्युत्पत्तिपक्षं समर्थयते संघे परिमाणिनि प्रत्ययो निपात्यते । सङ्घश्च समुदायोऽत्र सामान्येन गृह्यते, न तु प्राणिसमूह एव । तेन वृक्षाणां विंशतिरित्यपि भवति । तत्र स्वार्थे प्रत्ययविधानस्य परिहारभाष्यम्—

" संहनने वृत्तः संहनने वर्तिष्यते " ( M. Bhā. II. p. 356, l. 12. )

इति ।

एतद् व्याचष्टे ।

**सङ्ख्येयसङ्घसङ्ख्यानसङ्घः सङ्ख्येति कथ्यते ।**
**विंशत्यादिषु सान्यस्य द्रव्यसङ्घस्य[2] भेदिका ॥ १९ ॥**

अयमर्थः । गवादीनां सङ्ख्येयानामेकः सङ्घो द्रव्यसङ्घ इत्युच्यते । तयोर्द्वयोर्द्रव्यसङ्घयोर्दशतोः सङ्घोऽयं विंशतिशब्दो निपात्यते । स च सङ्ख्यानसङ्घ इत्युच्यते दशद्वर्गयोः सङ्ख्यानयोः समुदायः । स च विंशतिशब्दवाच्य इति । **सा** विंशतिशब्दवाच्या **सङ्ख्या** अन्यस्य गवादिद्रव्यसङ्घस्य **भेदिका** परिमाणोपाधिर्विशेषणमिति । तस्मात् संख्यानसङ्घवचनाद् विंशतिशब्दाद् गवादिसङ्घे परिमाणिनि ड्वुन्प्रत्ययो भवति विंशको गोसङ्घ इत्यादि । तथा च दशतोः संहनने सङ्घे वृत्तो विंशतिशब्दो गवादिद्रव्यसंघे परिमाणिनि वर्तिष्यते परार्थाभिधानं वृत्तिरिति प्रत्ययमुत्पादयिष्यतीति

2. M द्रव्यस्य.



भाष्यार्थः । द्रव्याणां द्रव्यसङ्घस्य दशतां दशतसङ्घस्य च पारमार्थिको भेदो नास्ति, केवलं[3] बुद्ध्यासौ परिकल्प्यते । [4]बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमवगमयन्ति । निपातनसामर्थ्याच्च विशिष्टे दाशते सङ्घे वर्तन्तेऽमी शब्दाः । तथा चोक्तं गुरुभिः ।

द्वेर्विनः परिमाणाख्याद् दशदर्थात् तदित्यतः ।
शतिजस्येति सङ्घाते दाशते तु निपातनात् ॥

इति । अस्यार्थः । द्वेरिति द्विशब्दात् । विन इति विन्भाविनो[5] विन्शब्दादेशादित्यर्थः । स्थान्यादेशयोरभेदविवक्षया द्विशब्द एव विन्शब्द उक्तः । परिमाणाख्यादिति परिमाणोपाधिकात् । सङ्ख्याशब्दो हि सङ्ख्येयाभिधायी न परिमाणाभिधायी, परिमाणोपाधिकस्तु भवत्येव । यद्वाक्यं

' [6]द्वौ दशतौ परिमाणमस्य '

इति । दशदर्थादिति दशद्वर्गसंख्येयवृत्तेरित्यर्थः । तदिति प्रथमासमर्थाच्छतिच्प्रत्ययो भवत्यस्येति परिमाणवत्यभिधेये[7] सङ्घाते[8] । गवां संघस्य दाशतस्य च सङ्घस्य परिणामित्वाविशेषे दाशत एव सङ्घे प्रत्ययो निपातनसामर्थ्यात्, [9]न गोसङ्घे, नापि गोषु । तथा च धर्ममात्रवचनाः शुक्लादिवद् [10]गुणिसमानाधिकरणाः कदाचित् प्रयुज्यन्ते [11]अभेदोपचाराद् [12]विंशतिर्गावः कुण्डानि ब्राह्मणा इति वा । आविष्टलिङ्गसंख्यात्वाच्चान्यलिङ्गसंख्येऽपि सङ्ख्येये सामानाधिकरण्याविरोधः समासश्चोपपन्नः । अत एव विंशतिगवं त्रिंशद्गृहीति । विंशतिसङ्ख्या हि समुदितद्रव्यसमवायिनी, न तु प्रत्येकं [13]शुक्लादिवत् परिसमाप्तेति द्रव्यगतलिङ्गसङ्ख्ये नानुवर्तते । पञ्चादयस्तु नित्यं सङ्ख्येयवचना इति तद्गतलिङ्गसङ्ख्यानुविधायिनो युक्ताः । यदा तु [14]गुणगुणिनोर्भेदेन व्यवहारस्तदा षष्ठी सिद्धा, गवां विंशतिरिति । ननु च दाशतः सङ्घो विंशतिशब्दवाच्यस्तस्य च [15]सङ्ख्येयो गुणी [16]गवादिर्न भवति । दशतौ हि तस्य गुणिनौ, तत् कथं गोभिः स विशेष्यते । उच्यते । गवां दशतोश्च[17] तात्त्विकभेदाभावाद् गावोऽपि गुणिनः । तत्र दशता व्यभिचाराभावाद् विंशतिर्न विशेष्यते, दशतोर्विंशतिरिति । न हि भवति कृष्णस्य कार्ष्ण्यमिति, अपि तु काकस्य कार्ष्ण्यमिति । एवं व्यभिचाराद् गोभिर्विशेष्यतेऽश्वादिव्यावृत्तये विंशतिसंख्या गवां विंशतिरिति । दाशतसङ्घरूपायाश्च विंशतेः

3. AE² M om. केवलं 4. AE² °ते । व्यव°. 5. AE² विभाविनो विश°. 6. E² MP द्वे. 7. A °वत्यर्थः तदित्यो. वेभि. 8. AE² संघे. 9. AE² om. न गोसंघे नापि गोषु. 10. A गुणसमानाधिकरण्येन. 11. A भेदो°. 12. P विंशतिः कु°. 13. P om. प्रत्येकं. 14. P गुणिनो. 15. A संख्यायां. 16. A भावादिः. 17. E² M दशतश्च.

पारम्पर्येण गावः संबन्धिन्यो भवन्त्येव । भावानयने द्रव्यानयनाच्च गोविंशतिमानयेत्युक्ते गाव आनीयन्ते । तदेवं व्युत्पत्तिपक्षः समर्थितः । सहस्रादयस्तु पृषोदरादित्वादनुज्ञातसाधिमानः । अनयैव वा दिशा तेऽपि व्युत्पाद्याः ॥ १९ ॥

उपलक्षणत्वाद् विंशत्यादीनाम् एकविंशतिरेकत्रिंशदित्यादयोऽपि संख्याशब्दा
5 एव । न ह्यत्रावयवौ संख्यावचनौ, न समुदायः । यतः

**एकविंशतिसंख्यायां संख्यान्तरसरूपयोः ।**
**एकस्यां बुद्ध्यनावृत्त्या भागयोरिव कल्पना ॥ २० ॥**

" एकादीनां दशादिभिर्द्वन्द्व इति चेद् विंशत्यादिषु वचनप्रसङ्गः " ( Vā. 16. on. P 2. 2. 29. M. Bhā. I. p. 434, l. 17. )

10 इति चोदयित्वा

"सिद्धं त्वधिकान्ता सङ्ख्या समानाधिकरणाधिकारे अधिकलोपश्च " (Vā. 17 on P. 2. 2. 29. M. Bhā. I p. 434, l. 17. )

इत्येकेनाधिका विंशतिरेकविंशतिरिति वार्त्तिके तत्पुरुषवृत्तिमुक्त्वा[1] स्वरदोषा[2]दुपेक्ष्य एकश्च विंशतिश्चेत्येकविंशतिरित्येव भाष्येऽन्वाख्यानमङ्गीकृतम् । तथा चावयवौ संख्या
15 स्यान्[3] समुदाय इति वचनप्रसङ्गपरिहाराय कथ्यते । अवयवार्थपरिकल्पनया व्युत्पत्तिमात्रमिदं क्रियते, न त्वत्रावयव एकसंख्या विंशतिसंख्या वा । परमार्थतो नरसिंहवन्निरस्तावयवविभागा ह्यन्यैवेयं संख्या भिन्नबुद्धिग्राह्या । न हि प्रत्यवयवमावर्ततेऽत्र बुद्धिः, संख्यान्तरस्यैवाभेदेन परिच्छेदात् । उपायपरिकल्पना तु विलक्षणा । कश्चित् किल नव द्वादशेति सङ्कलय्य एकविंशतिरित्यवैति । अन्यो दश चैकादश चेत्यादि । अन्यः
20 पुनरेकश्च विंशतिश्चेति । अन्वाख्यानाय **भागयोरिव** परमार्थत **एकस्याम्** अस्यां संख्यायामियं कल्पना । यथा जातिविशेषप्रतिपत्त्यर्थं नर इति सिंह इति चांशापोद्धारः । न ह्यंशयोरत्र बुद्धिरावर्तते, अखण्डत्वात् ॥ २० ॥

भवतु संख्याद्वयारब्धेयं संख्या, किं निरस्तावयवविभागया अन्यया संख्ययेत्याशङ्क्य शास्त्रकार्यानुपपत्तिप्रसङ्गेनैतन्निवारयितुमाह ।

25 **असंख्यासमुदायत्वात् संख्याकार्यं विधीयते ।**
**समूहत्वे तु तन्न स्यात् स्वाङ्गादिसमुदायवत् ॥ २१ ॥**

[1]निरस्तावयवविभागा सरूपावयवाखण्डश्रुतिगोचरा दशादिवदन्यैव यतो भवतीयं संख्या, ततः संख्यायां विहितकार्यं प्रवर्तते । एकविंशतिरधिकास्मिन् शते एकविंशं शतम् । एवमेकत्रिंशम् ।

20. 1. A °मुक्त्वा. 2. A °षमुपे. 3. AE[2] स्या न.



' शदन्तविंशतेश्च ' ( P. 5. 2. 46. )

इति डः । तत्रं हि

" शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात् स तदादेरर्थिकार्थम् ' ( Va. I. on P. 5. 2. 46, M. Bhā. II, p. 381, l. 8. )

5 इत्युक्त्वातिप्रसङ्गनिवारणाय

' [5]सङ्ख्याग्रहणं च '(Vā. 2. on P. 5. 2. 46, M. Bhā, II p. 381, l. 12.

इत्युक्तम् । तथा च शदन्तो विंशत्यन्तश्च संख्यावाची गृह्यते, न तु गोत्रिंशद् गोविंशतिरित्यादि । एकविंशतितयमिति च संख्याकार्यमवयविनि तयप् । एकविंशतितममेकविंशमिति च पूरणे डट् । तत्र च

10 ' विंशत्यादिभ्यस्तमडन्यतरस्याम् ' ( P. 5. 2. 56. )

इति तमट् । एकविंशतिकृत्व इति

" संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् " । ( P. 5. 4. 17. )

एकविंशतिमयम् [ द्विमयम् ] उदश्वयवानामिति

" संख्याया गुणस्य निमाने...." ( P. 5. 2. 47. )

15 इति निमाने वर्तमानात् संख्याशब्दान्निमेये मयट् । एकविंशतिक इति परिमाणिनि

" संख्याया अतिशदन्तायाः " ( P. 5. 1. 22. )

इति कन् । [2]त्यन्तप्रतिषेधोऽत्र ( न ? ) भवत्यर्थवतस्तत्र तिशब्दस्य ग्रहणात् । अधिकैकविंशा इति च

' संख्ययाव्ययासन्न .... ' ( P. 2. 2. 25. )

20 इति बहुव्रीहिरपि संख्याकार्यम् । [3]अवयवसंख्याद्वयमय्यां त्वस्यां समूहरूपायामेकविंशति[4]संख्यायां संख्याकार्यं न स्यात् । तद् यथा—पाणिपादेन स्वाङ्गसमुदायेन भिन्नकार्यस्य स्वाङ्गान्तरस्यानारम्भात् स्वाङ्गसमुदायो न स्वाङ्गमिति कल्याणपाणिपादेति

' स्वाङ्गात् .... ( P. 4. 1. 54 ) '

ति ङीष् न भवति । [5]तथा जनपदाभ्यां जनपदान्तरस्यानारम्भाज्जनपदसमुदायो जन-
25 पदग्रहणेन न गृह्यत इति जनपदलक्षणो [6]वुञत्र न भवति । काशिकोसलीया इति भवार्थे

' वृद्धाच्छः ' ( P. 4. 1. 114. )

21. 1. A किं नि°. 2. A त्यन्तशदन्तप्रतिषेध इति च. M. स्यंताया इति प्रतिषेधोत्र न भवति, E[2] त्यन्त प्रति... 3. A °ख्यायां त्वस्यां. 4. A °तिसंख्याकार्य 5. M. om. तथा जन°—वृद्धाच्छ एव भवति. 6. A °णोऽञ.

एव भवति । एवमत्र संख्याभ्यां संख्यान्तरस्य भिन्नव्यपदेशस्य विलक्षणस्यानारम्भात् तत्समूहमात्ररूपत्वे संख्याकार्याभाव इति संख्यान्तरम् । एकविंशतिसंख्या च यथाकथंचिदवयवपरिकल्पनया व्युत्पाद्यतेति द्विवचनप्रसङ्गाभावः ॥ २१ ॥

इह कथं संख्यया समासः द्विदशा त्रिदशा इत्यादौ । दशसंख्यया हि द्व्यादिसंख्या सम्बध्यमाना किं सख्वष्ट इत्याह ।

**संख्येयान्तरतन्त्रासु या संख्यासु प्रवर्तते ।**
**आवृत्तिवर्गसंख्येया[1] तां संख्यां तादृशीं विदुः ॥ २२ ॥**

द्विर्दश[2] द्विदशा इति

'संख्ययाव्ययासन्न .... ' ( P. 2. 2. 25 )

इत्यादिना बहुव्रीहिरयं समासः। तत्र च [3]संख्येयान्तरं द्व्यादिसंख्याविषयात् संख्येयाद् अन्यत् संख्येयं परिच्छेद्यं तन्त्रं प्रधानं[4] यासां दशादिसंख्यानां तासु संख्येयप्रधानासु दशादि**संख्यासु** यान्या द्वित्वादिका संख्या **प्रवर्तते** संबन्धमनुभवति समासार्थं तस्या दशादि[5]संख्यावृत्तिः पुनः पुनः प्रवृत्तिः दशादिसंख्यापरिच्छेद्यो वा वर्गो [6]दशावयवसमूहः संख्येयः परिच्छेद्य इति **तां** द्वित्वादिकां **संख्यां तादृशीम्** आवृत्तिवर्गसंख्येयप्रधानां विदुः जानन्ति शाब्दिकाः किल । संख्या अस्या न परिच्छेद्याँ । सा हि दशसु संख्येयेषु गुणभूतेति न द्वित्वेन योगं भजते । अत एव **संख्येयान्तरतन्त्रासु** इत्यनेनासंबन्धे हेतुरुक्तः । दशसंख्यासंख्येयेनापि विरोधाद् द्वित्वं न संबध्यते । न हि दश द्वाविति युज्यते । तस्माद् दशसंख्याया आवृत्तिर्द्वित्वपरिच्छेद्या । द्वौ[7] वारौ हीयं दशसंख्या द्विर्दश इति । अत एवाभ्यावृत्तिविषयः सुच्प्रत्ययो वाक्ये । दशावयवो वर्गः परिच्छेद्यो द्वौ दशताविर्त्यस्ति समन्वयः ॥ २२ ॥

अत्रैव[1] दशसंख्या तत्संख्येया वा दश कथं [2]द्वित्वसंख्यया न परिच्छेद्या इत्याशङ्क्य व्याख्यातामेव युक्तिमुपन्यस्यति ।

**न संख्यायां न संख्येये द्वौ दशेत्यस्ति सम्भवः ।**
**भेदाभावान्न संख्यायां विरोधान्न तदाश्रये ॥ २३ ॥**

दशसंख्या तावत् संख्येयोपसर्जनत्वान्नार्हति द्वित्वसंख्यासंवन्धमत्रेत्युक्तम् । उपसर्जनत्वेऽपि च बुद्ध्या प्रत्यवमृश्य सम्बन्धे प्रधानेन संख्येयेन योगो भवेद्, यद्युपसर्जनमर्हेत् संवन्धम् । यावता दशसंख्याया एकत्वात् द्वित्वेनासंबन्धः तत्संख्येय

22. 1. A °ख्येयां. 2. A द्विदशास्विादशा. 3. A संख्येयाद्. 4. A. om. प्रधानं
5. A °संख्याया आवृत्ति. 6. A °वयवसंख्ये°. 7. A द्विवारा .
23. 1. A इत्येवं. 2. E[2] द्विसं°



अपि दश **विरोधाद्** द्वित्वेन नावच्छिद्यन्ते । न हि दश द्वौ भवतीत्युक्तमेव । उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं बाधते ॥ २३ ॥

तस्मात्

**संख्यायेते दशद्वर्गौ द्विदशा इति संख्यया ।**
**तद्रूपे वापि संख्येये आवृत्तिः परिगण्यते[1] ॥ २४ ॥**

दशसंख्यापरिच्छिन्न एको वर्गस्तादृशमपरमाख्यातुं द्वित्वमुपादीयते । [2]तेन द्वयोर्दशद्वर्गयोर्द्वित्वमत्राविद्यते । द्वौ दशतौ द्विदशाः । संबन्धान्यथानुपपत्त्या दशशब्दोऽत्र वृत्तिविषये दशद्वर्गे वर्तते । वर्गश्च वर्ग्यभेदापन्नो विवक्ष्यत इत्यवयवगतभेदाश्रयं बहुवचनम् । वर्गवाची चात्र डतिप्रत्ययो वृत्तौ अत एव दशदिति न प्रयुज्यते, वर्गिप्राधान्यात् । तद्रूपे दशसंख्य एव संख्येये सति दशसंख्याया आवृत्तिः पुनः पुनः प्रवृत्तिर्वा गण्यते द्वित्वेन । द्वौ वारौ द्विः, द्विर्दश द्विदशाः । दशशब्दोऽत्र संख्येयमेवाचष्टे । गुणभूतसंख्याद्वारेण तु द्वित्वेन युज्यन्ते दश संख्येयाः । दशसंख्या तु [3]गुणभूतावृत्तिद्वारेण द्वित्वसंख्यायोगमनुभवति । [4]दशसु संख्येयेषु हि दशत्वमावर्तमानं द्वित्वेन परिच्छिद्यते । तथा च [5]संबन्धिसंबधात् संख्येयेषु दशस्वपि द्वित्वमन्वयीति तदाश्रयं बहुवचनं भवति । आवृत्तिगणनविषयस्य च सुचः समासेन गतार्थत्वात् प्रयोगो न भविष्यति । तदुक्तं वार्तिके —

' सुजभावोऽभिहितार्थत्वात् समासे ' Vā. 3. on P. 2. 3. 25. M. Bhā. I. p. 427, l. 23. )

इति । गतमेतत् ॥ २४ ॥

' संख्याया अवयवे तयप् ' ( P. 5. 2. 42 )

इत्यत्र

" इह कस्मान्न भवति । बहवोऽवयवा अस्याः संख्याया इति "
( M. Bhā. II p. 379 l. 17.).

इति भाष्ये चोदितेऽभिहितम् ।

" [1]अवयवे या संख्या तस्याः प्रत्यय उच्यते । न च काचित् संख्या अवयविन्यस्ति, यस्या बहुशब्दोऽवयवः स्याद् । " (M. Bhā. II,p. 3 79. l.17-18. )

इति । अयमर्थः ।

24. 1. A परिगण्यते. 2. AE[2] न द्वयो°. 3. AE[2] °ता वृत्तिद्वा°. 4. AE[2] दशसंख्येयेषु. 5. AE[2] M संबन्धस°.

25. The M. Bhā text is; अवयवे या संख्येत्युच्यते न च काचित् संख्यास्ति यस्या बहुशब्दोऽवयवः स्यात् ।

" अवयवविधानेऽवयविनि प्रत्ययः " ( M. Bhā. II. p. 379, l. 20 )
इत्युक्तम् । न च संख्याशब्दवाच्या काचिद् विशिष्टावयविनी संख्यास्ति । ननु च कथं नास्ति यावता प्रत्युज्यत एव वाक्यम् –' बहवोऽवयवा अस्याः संख्यायाः' इत्याह

' ननु चेयमस्ति संख्येत्येव ' ( M. Bhā. 11 p. 379 l. 18 )

5 इति भाष्यम् । अस्योत्तरम् ।

नैषा संख्या । किं[2] तर्हि । संज्ञैषा । ( M. Bhā. II p. 379, l. 19. )

इति । एकत्वादिसंख्याविशेषाणामविशिष्टा संज्ञा नामधेयमेतत् संख्येति, न त्वस्य वाच्यः कश्चिदवयवी । ततश्च संख्यासामान्यनिवेशिनीयं प्रतिभेदमनुवर्तते संज्ञा । न च सामान्यविशेषयोरवयवावयविभावः । कल्पितत्वेऽपि चावयविनः कार्यभेदो रूप-
10 भेदः समाख्याभेदश्च भिद्यते । तद्यथा वनादेर्विविक्तवृक्षकार्याद्धि समुदितवनकार्यमन्यत् । अत एव रूपभेदः । समाख्या च वृक्षा वनमिति भिन्ना । इह तु परिच्छेदलक्षणं कार्यमेकत्वादिव्यतिरिक्तं संख्याया नास्ति । किञ्चिद्रूपमपि न[3] विविक्तमेकादिव्यतिरिक्तमवधार्यते शुक्लादिव्यतिरेकेणेव रूपस्य । समाख्या त्वर्थाभावादेव न भिन्ना । अपि तु विशेषविषयसामान्यगोचरेयं संज्ञा संख्येति । बहुत्वमपि चैवं त्रित्वादीनां
15 सामान्यमिति बहवोऽवयवा अस्यां विंशतौ त्रिंशति वेत्यवयवावयविभावेन योगो न भवति । अपि तु सामान्यविशेषभावेनैव । तथा च यथा बहुतयं रूपमिति शुक्लादिव्यतिरेकेण रूपावयविनोऽभावान्न भवति, तथा बहुतयी[4] विंशतिः त्रिंशदित्यपि न भवति । न हि परिच्छिन्नरूपाया विंशत्यादिसंख्यायाः सामान्यरूपमनवधारितविशेषं बहुत्वमुपपद्यते विशेषणम् । तदेतद् भाष्योपक्षिप्तमनुवदति —

20 **संख्या नाम न संख्यास्ति संज्ञैषेति यथोच्यते ।**
**रूपं न रूपमप्येवं संज्ञा सा हि सितादिषु ॥ २५ ॥**

सितपीतनीलादिवर्णव्यतिरेकेण यथा विलक्षणकार्यस्वभावं **रूपं** नाम वर्णान्तरं नास्ति, [5]सितादीनां रूपसामान्यनिमित्ता तु **संज्ञा** रूपमित्येषा, तथैकत्वादिसंख्याभेदव्यतिरेकेण[6] **संख्या नाम**[7] अवयविनी न विद्यतेऽन्या । समाख्यामात्रमेषां सर्वेषां
25 सामान्यभूतमित्युक्तोऽर्थः ॥ २५ ॥

सामान्यसमाख्यात्वमेवोपपादयति ।

2. M Bhā. om. किं तर्हि. 3. A द्रूपनपि विवि°, E[2] °द्रूपमविवि° 4. P °तया.
5. AE[2] सितादिना. 6. AE[2] °भेदव्यवहारेण. 7. A संख्यायामवयवी न.



**संख्यानजातियोगात् तु संख्या संख्येति कथ्यते ।**
**रूपत्वजातियोगाच्च रूपे रूपमिति स्मृतम् ॥ २६ ॥**

जातिनिमित्तोऽयमुभयरूपोऽपि व्यपदेशो भाष्यकारेण स्मृतो न व्यतिरिक्तार्थनिबन्धन इति बहुतयी संख्या बहुतयं रूपमिति प्रयोगाभावः । न तर्हि भवति बहुतयं चित्ररूपमिति ? । भवति, चित्ररूपस्यावयविन एकत्वान्नीलाद्यवयवयोगोपपत्तेः । एकं चित्रं 5
चेति, चित्रतरमिति चेति भेदसंविदावेदिततत्त्वाः[3] पदार्थाः प्रत्याख्यातुमशक्या एवावयविसामान्यादय[4] इत्यद्वयसिद्धावस्माभिर्विचारितम् । ग्रन्थगौरवभयान्नेह प्रतन्यते । तत् तत एव अवधार्यम् । तथा च चित्रमिति रूपमेकावयविसमवेतमित्यवयवबहुत्वेनावच्छेदमर्हत्येव । किञ्चित् किल चित्रं पीतनीलारब्धं द्व्यवयवम्, किञ्चित् पुनः सितरक्तपीतादिबहुविधावयवारब्धमित्यस्ति साफल्यं विशेषणस्य । गतमदः[6] ॥ २६ ॥ 10

संख्याविषयमन्यद् विचार्यते । इह

' बहुषु बहुवचनम् ' (P. 1. 4. 21.)

इत्यादिना संख्या विभक्तिवाच्या विहिता । तत्र स्वशब्देनाभिहितायामस्यामेकादिभ्यो वचनग्रहणात् प्रथमा लभ्येत । द्वित्वादयस्तु कथम् । तथाहि—कर्मादिष्वपि विभक्त्यर्थेष्ववश्यमेकत्वादयो निमित्तत्वेनोपादेया इत्युक्तत्वात् कर्मणि यदेकत्वमेकत्वाद्यवच्छिन्ने वा 15
कर्मणीत्याश्रयणादनभिहितकर्माद्याश्रयेष्वेकत्वादिषु विभक्तय इत्यभिहितविषये तदभावादेकं द्वौ [1]बहूनीत्यादिकं कथमित्याशंक्याह ।

**[2]निमित्तमेकमित्यत्र विभक्त्या नाभिधीयते ।**
**तद्वतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते ॥ २७ ॥**

प्रथमासाधारणमिदं प्रतिसमाधानम् । तथाहि—प्रातिपदिकार्थसमवेतायां संख्यायां 20
प्रातिपदिकार्थे वा संख्यासंबन्धिनि पक्षान्तराश्रयेण वा प्रथमायां विधीयमानायामेकादिशब्दस्य प्रवृत्तिनिमित्तमेकत्वादि **न** तया **अभिधीयते**, प्रातिपदिकेनैवैकादिशब्देन तस्याभिधानात् । **तद्वतः**[3] प्रवृत्तिनिमित्तभूतैकत्वाद्यवच्छिन्नस्य प्रातिपदिकार्थस्य **यद्** अन्यदेकत्वादि तत्र वाच्ये प्राधान्येन प्रकृत्यर्थविशेषणत्वेन वा विभक्तिः प्रथमा विधीयते इति
प्रातिपदिकेन स्वनिमित्तभूतैकत्वाद्यभिधानेऽपि तदपरैकत्वाद्यभिधानाय प्रवर्तत एव 25
एको द्वौ बहवः इति । एकशब्दस्योदाहरणार्थत्वात् **तद्वतस्तु यदेकत्वम्** इत्याह । द्वित्वाद्यपि

26. 1. A संख्यात्वजा°. 2. P चित्ततरमिति चेदभेद°. 3. P. तत्त्वात्. 4. A न्याद् इत्य° 5. A चित्रमपि रूपमेकमवयवि° 6. P गतमेतत.

27. 1. P बहूनित्या° 2. E[2] om. निमित्त. 3. A तद्वत्त्वम°, E[2] om. तद्वतः प्रवृत्तिनिमित्तभूतैकत्वाद्य°.

हि गृह्यते द्व्यादिशब्दविषयम्। तथा विभक्तिग्रहणस्य द्वितीयादिसाधारणस्योपादानाद् द्वितीयाद्यपि प्रातिपदिकेनानुक्तमेकत्वादि कथयतीत्युक्तं भवति एकं द्वौ बहून् पश्येत्यादौ। न ह्यत्र प्रातिपदिकेन कर्मादिगतमेकत्वादि स्पृष्टमिति तद्विषया द्वितीयाद्या विभक्तयः ॥ २७ ॥

5 ननु च नात्र प्रकृतिप्रत्ययवाच्यं संख्याद्वयमवधार्यत इत्याह।

**एकस्य प्रचयो दृष्टः समूहश्च द्वयोस्तथा।**
**निमित्तव्यतिरेकेण संख्यान्या भेदिका ततः ॥ २८ ॥**

इह **एकस्य** तदपरेण समुच्चीयमानस्य **प्रचयो दृष्टः**। तथा हि सति प्रचयेऽन्यसाहभाव्ये द्वित्वादिसंख्या जायन्ते। **द्वयोः च समूहः** समुदायोऽभेदो[1] दृष्टः। तद्यथा 10 द्विपुत्र इत्यादौ निवृत्तेऽपि द्विवचने वृत्तावसाववगम्यतेऽन्तरङ्गः। ततः प्रचयसमूहदर्शनाद्धेतोः प्रातिपदिकार्थस्य यन्निमित्तमेकत्वादि एकादिशब्दविषयं तद्व्यतिरिक्ता अन्या विभक्तिवाच्या एकत्वादिसंख्या विद्यते। बहूनामपि समूहो दृष्ट इति योजनीयं बहुपुत्र इत्यादौ। [2]तदियं विशेषावस्थापनेन प्रातिपदिकार्थस्य **भेदिका** अवच्छेदिका संख्या विभक्तिवाच्यात्रावधार्यत एव। तथा हि प्रातिपादिकात् प्रचितापचितसाधारणमेकत्वमव-15 गम्यते। विभक्तेस्तु विशेषनिश्चयोऽर्थस्य परिसमाप्तेरेक इत्यपचितमिदमेकत्वमिति। एवं द्वौ बहव इत्यसमूहरूपता। यद्येवं प्रचितविषये एकत्वे विभक्तिर्न स्याद् एकश्च[3] एकश्चेति। नैतन्न्याय्यम्। साधारणे एकत्वे प्रातिपदिकवाच्ये विभक्तिर्विशेषं द्योतयति इत्युच्यते। तथा च विभक्त्यात्र द्वित्वाद्युपजनहेतुतामप्रतिपद्यमानमप्रचितमेवैकत्वमावेद्यते। पश्चात्तु पदार्थे पर्यवसिते चशब्दः प्रचयं द्योतयति पदार्थपृष्ठपातिनम्, न तु प्रातिपदि-20 कार्थगतम्। प्रातिपदिकार्थप्रचयविवक्षायां हि सहविवक्षाविषय [4]एकशब्दाप्रयोग इति ॥ २८ ॥

" संख्याया अन्यपदार्थत्वात् " (cf. Vā. 25. on P. 1. 2. 64.) इत्यादिना एकशेषप्रत्याख्याने तत्समानार्थद्व्यादिशब्दप्रयोगो द्वित्वाद्युपजनात् प्रातिपदिकार्थप्रचयविषये समयाद् विभक्तिर्भविष्यति। यदि सामयिकी नियोगतोऽन्यापि कस्मान्न 25 भवन्ति, कर्मादीनामभावाद् इत्यपरमत्र प्रतिविधानं भाष्य उक्तम्। तथा हि ' न केवला प्रकृतिः प्रयोक्तव्या ' इति[5]

' परश्च ' (P. 3. 1. 2.)

इति समयपालनार्थं विभक्तौ विधीयमाना(याः?)मर्थविशेषानाश्रयणाद् वचनसङ्कर

28. 1. A om. अभेद; E [2]P भेद. 2. AE[2] तदीयवि°, P इत्यादौ तदीयम्। वि°. 3. F om. one एकश्च. 4. AE[2] °शब्दप्रयो°. 5. AE[2] om इति परश्च—प्रकृत्यर्थानुविधायिन्यो.



प्राप्नोतीति यथायथमर्थानुगुण्येन विभक्तयोऽङ्गीकृताः। तथा चाभिहितेऽपि स्वार्थे एकादिशब्देभ्यस्तदानुगुण्येनैव प्रकृत्यर्थानुविधायिन्यो [6]विभक्तय इत्युपगतं भवति। स्वाभाविकत्वादर्थाभिधानस्य विभक्त्या सह प्रकृतिः स्वार्थमभिधत्त इत्ययमेव नियमः[7] परवचनेन [8]प्रतिपादितः। तदेतद् व्याचष्टे।

**तदेकमपि चैकत्वं विभक्तिश्रवणादृते।** 5
**नोच्यते तेन शब्देन विभक्त्या तु सहोच्यते ॥ २९ ॥**

स्वाभाविकं सहाभिधानं यथायथं सर्वत्रैव [1]विभक्तिविधाने प्रतिपाद्यते। वृत्तौ तु लुका केवलेनाभिधानं ज्ञाप्यते। शक्तिविशेषो हि शब्दानां वृत्तावुपजायत इति केवलस्याप्यभिधानं न विरुध्यते। एवं संबुद्धिलोपेऽपि केवलप्रयोगः स्वाभाविकः ॥२९॥

अन्योऽप्यत्र परिहारोऽभिहितो भाष्ये 10

" संख्या नामेयं परप्रधाना। संख्येयमनया विशेष्यम्। यदि चात्र प्रथमा न स्यात् संख्येयमविशेषितं स्यात्। " (M. Bhā. I, p. 423, l. 8.)

इति। एतद् व्याचष्टे।

**अन्वयव्यतिरेकौ च[1] यदि स्याद् वचनान्तरम्।**
**स्यातामसति तस्मिंश्च प्रकृत्यर्थो न कल्प्यते ॥ ३० ॥** 15

वृक्षः वृक्षौ वृक्षा इत्यादौ प्रकृतिप्रत्यययोः **अन्वयव्यतिरेकौ** स्तः। तथा चोक्तम्

' दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वये सति ' (Vāk. III. सा. ४३.)

इत्यादि। ततश्च

तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवत्यसौ। 20

इति भेदेनापोद्धारकल्पना युक्ता। इह त्वेकशब्दादेकवचनमेव द्विशब्दाद् द्विवचनमेव बहुशब्दाद् बहुवचनमेव, न वचनान्तरमित्यसति व्यतिरेकेऽन्वयस्यानिश्चयात् प्रकृत्यर्थो विवेकेन नावधार्यते। **असति हि वचनान्तरे**ऽन्वयव्यतिरेकौ न स्तः इति एकादिशब्दलक्षणायाः प्रकृतेरभिधेयं प्रत्ययार्थव्यतिरिक्तं न संभवत्यत्र येन संख्येयमवछिन्द्यात्[2] प्रकृतिः केवला। तथा च वृक्षादावेकवचनादीनामन्वयव्यतिरेकोक्ता[3]र्थ- 25 निर्धारणादिह तदभावे प्रकृतिप्रत्ययसमुदायवाच्योऽयमर्थः, येन संख्येयो विशेष्यते संख्यालक्षणेन। तथा चानुक्तार्थत्वादेव विभक्तिरत्रेत्युक्तं भवति। वृत्तौ त्वेकस्या एव

6. AE[2] नो विभक्तिरित्युप°. 7. AE[2] नियमपरवच° 8. AE[2] प्रतिपादयति.

29. 1. A विभक्तिरभिधाने.

30. 1. A न. 2. A °छिन्द्यात. 3. P. °कोपपत्तावर्थ.

[4]प्रकृतेरेकराजादावु(दिरु ?) पसर्जनार्थोऽवगम्यते [5]प्रधानार्थसम्भेदमापन्न इति विभक्तिश्चरितार्थत्वान्निवर्तते। यथा हि विना [6]भावप्रत्ययं वृत्तौ तदर्थावगतिः निराकुलस्तिष्ठति सधीरमुवाचेत्यादौ एवमत्र विभक्तिमन्तरेणापि तत्सन्निधानद[7]ष्टमेकत्वाद्युपसर्जनार्थोऽवगम्यत एव। तदेवं पूर्वत्र परिहारे प्रकृत्यर्थानुवादकत्वमभिमतम्। सत्यपि प्रकृत्यर्थे यथायथं तदर्थानु-
5 वादकत्वेन वचनानामुक्तत्वात्। इह तु साधारणार्थत्वमभिमतं प्रकृतिप्रत्ययसमुदायवाच्येनार्थेन संख्येयविशेषणस्योक्तत्वादिति परिहारयोर्भाष्यकारोक्तयोर्विशेषः ॥ ३० ॥

अन्योऽत्र भाष्ये परिहार उक्तः—

" उभयवचना एवैते द्रव्यं चैवाहुर्गुणं च। यत्[1]स्थोऽसौ गुणस्तस्यानुक्ता एकत्वादय इति[2] प्रथमा भविष्यति " ( M. Bhā. I, p. c. 441, 1. 10. )

10 इति। एतद् व्याचष्टे

**एकत्वमेक इत्यत्र शुद्धद्रव्यविशेषणम्।**
**सगुणस्तु प्रकृत्यर्थो विभक्त्यर्थेन भिद्यते ॥ ३१ ॥**

शुद्धस्य द्रव्यस्य पूर्वं [3]विशेषणाद् बुद्ध्या निर्ज्ञातस्य विशेषणभावमापन्नं [4]**एकत्वमेकः** इति प्रातिपदिकेनाभिधीयते। [5]उक्तशब्दो ह्येकत्वविशिष्टं द्रव्यमाह, न
15 संख्यानमात्रमपि विंशत्यादिवत्। अत एवोभयवचनत्वं विशिष्टवचनत्वं विवक्षितं भाष्ये। न तु केवलगुणाभिधानं शुक्लादिवदेषामुपपद्यते। यदि वा

द्व्येकयोः ( P. 1. 4. 22. )

इति निर्देशात् संख्यानमात्रवचनत्वममपीत्युभयवचनत्वं स्पष्टम्। [6]तदस्यैकशब्दवाच्यस्य एकत्वविशिष्टस्य द्रव्यस्य विभक्तिवाच्येनैकत्वेन विशेषणात् **सगुणः** प्रातिपदि-
20 कार्थो **विभक्त्यर्थेन भिद्यते** विशेषेऽवतिष्ठते। एकत्वविशिष्टोऽयमेकोऽर्थो न तु गुणान्तरविशिष्ट इति प्रकृतिवाच्यमन्तरङ्गं विभक्तिवाच्यं तु बहिरङ्गं बाह्यमिति द्व्यादीनां च द्विपुत्र इत्यादौ बाह्यो भेदो निवर्तते विभक्तिवाच्य इति वक्ष्यति। अन्ये तु **शुद्धं** च **द्रव्यविशेषणं** चेति समाहारे द्वन्द्वं मत्वा संख्यानमात्रप्रधानं संख्येयोपसर्जनं चैकत्वं संख्यासंख्येयसामान्यरूपं प्रातिपदिकेनोच्यते। सह गुणेन संख्यानेन यो वर्तते प्रातिपदि-
50 कार्थः स विभक्तिवाच्येन **भिद्यते** अवच्छिन्नः प्रकाश्यते इति विभक्त्यन्तवाच्यं संख्येयं

4. A वेरेका जात्याद्युप° E[2] om. रेकराजे—नार्थस. 5. A यथाऽन्यार्थेस°. M om. प्रधानार्थ°—°मेकत्वाद्युपसर्जनार्थो. 6. A विभक्तिप्रत्ययं. 7. A °दृष्ट एक°.

31. 1. P यत् सौऽसौ. 2. M Bhā इति कृत्वा प्रथमा. 3. AE[2] विशेषणं. 4. AE[2] °पन्नमेक इति प्रा°. 5. P उक्तश°. 6. A द्रव्यस्यैक°, E[2] °नत्वविशिष्टं द्रव्यमाह स्पष्टं.



प्राधान्येनेति व्याचक्षते। यस्मिन् द्रव्ये स्थितो गुणः सङ्ख्यानं तस्यानुक्ता एकत्वादयो द्रव्यावच्छेदितया नोक्ता इति चात्र भाष्यार्थः ॥ ३१ ॥

ननु विभक्त्यन्तेन संख्येयस्य प्रतिपादनात् केवलस्य प्रयोगाभावाद् गुणमात्रवृत्तित्वं कथमेकादीनामवधार्यत इत्याह।

**द्व्येकयोरिति निर्देशात् संख्यामात्रेऽपि सम्भवः। 5**
**एकादीनां प्रसिद्धा तु संख्येयार्थत्वमुच्यते ॥ ३२ ॥**

द्व्येकयोः .... ( P. 1. 4. 22. )

इति द्विवचन**निर्देशाद्** द्वित्वैकत्वयोर्द्वित्वाद्युपपद्यते[1]। संख्येयाच्च निष्कृष्टयोर्द्वित्वैकत्वयोरभिधाने युक्तमिदम्। अन्यथा नित्यसंख्येयप्राधान्ये द्वावेकश्च त्रय इति बहुवचनं स्यात्। आ दशभ्यः संख्याः संख्येये वर्तन्ते इति लौकिकीं प्रसिद्धिमाश्रित्य भाष्ये 10

" स्यादेतद् यत्र नियोगतः संख्या संख्येये वर्तते "

इति संख्येयाख्यायित्वमुच्यते। अयमत्रार्थः। संख्यानमात्रे लौकिके प्रयोगे नैषां वृत्तिः। तत्र हि पदं प्रयुज्यते। विभक्त्यन्तं च पदम्। विभक्तिश्च संख्यां प्रातिपदिकार्थसमवेतामाहेति नियतं तत्र [2]संख्येयावधारणम्। शास्त्रे त्वपोद्धारबुद्ध्या संख्यानमात्रवृत्तित्वं वृत्तावसति विभक्तिप्रत्यये काममुपपद्यते इति ॥ ३२ ॥ 15

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे संख्यासमुद्देश एकादशः ॥

———

32. 1. A द्वित्वमुपलभ्यते, M द्विवचनमुपप°. 2. P संख्यावधा.

## अथ उपग्रहसमुद्देशः

इदानीमाख्यातार्थमुपग्रहं विचारयितुं स्वरूपमस्यालौकिकत्वात् प्रदर्शयति ।

**य आत्मनेपदाद् भेदः क्वचिदर्थस्य गम्यते ।**
**अन्यतश्चापि लादेशान्मन्यन्ते[1] तमुपग्रहम् ॥ १ ॥**

आत्मनेपदपरस्मैपदव्यङ्ग्यः कर्त्रभिप्रायतदितरादिरूपो विशेषो यः क्रियायाः साधनस्य वा स[2] उपग्रह इति पूर्वाचार्यैरभ्युपगतः । पूर्वाचार्यप्रसिद्धयोपग्रहशब्दवाच्योऽयमर्थो व्यवह्रियतेऽत्र शास्त्रे ॥ १ ॥

कस्यार्थस्यासौ भेद इति सामान्येनोक्तमेव विभजते ।

**क्वचित् साधनमेवासौ क्वचित्तस्य विशेषणम् ।**
**साधनं तत्र कर्मादि [1]व्यक्तवाचो विशेषणम् ॥ २ ॥**

**साधनं कर्म** उपग्रहः आत्मनेपदाभिव्यङ्ग्यः [2]पच्यते गम्यते इति । **आदि**-शब्दात् कर्ता भावश्च । तत्र कर्ता लादेशद्वयव्यङ्ग्यः एधते यातीति । भाव आस्यते शय्यत इत्यात्मनेपदव्यङ्ग्य एव । स च बाह्यो भावो लकारवाच्यः आभ्यन्तरस्य धात्वर्थरूपस्य भावस्य क्रियायाः स्वात्मन्यव[3]स्थितिमेकपदवाच्यसाधनानावेशादावेदयन् भवति साधनम् । व्यक्ता वाग् येषां व्यक्ता वाचि वा येषां (ये?)ते व्यक्तवाचो धात्वर्थं समुच्चारणार्थ(त्म?)कं विशिंषन्तोऽपि साधनस्य कर्तुः **विशेषणं** सामर्थ्याद् भवन्तो भवन्त्युपग्रहशब्दवाच्याः । तद् यथा संप्रवदन्ते ब्राह्मणा इति ॥ २ ॥

क्वचित् क्रियाविशेषण(ष उ?)मुपग्रह इत्याह ।

**क्रिया विषयभेदेन [1]जीविकादिषु भिद्यते ।**
**लादेशैः स क्रियाभेदो वाक्येष्वपि नियम्यते ॥ ३ ॥**

विषयविशेषाश्रयेण **भिद्यते क्रिया** । स च तस्या भेदो **लादेशैः** परस्मैपदात्मनेपदलक्षणैरभिव्यज्यते । तद् यथा जीवनोपायत्वेन पाकादिरनुष्ठीयमानः परस्मैपदेनाभिव्यज्यते [2]पचन्ति यजन्तीति । प्रधानं ह्यत्र क्रियाफलं न कर्तृगामि भृतिमात्रफलत्वाद् भृत्यानाम् । [3]यजमानादिना प्रधानफलोद्देशेन[4]प्रवर्त्यमाना क्रिया आत्मनेपदात् प्रतीयते यजते पचते इति । क्वचित् पुनः स एव क्रियाभेदो **वाक्येष्वपि** सत्स्वव(स्वशब्देनात्र ?) धार्यत इति वाक्यगम्यः । तद् यथा स्वं यज्ञं यजते, स्वं यज्ञं यजतीति ।

1. [1]AE[2] मन्यते. 2. M भासते, P om. वा.
2. 1. A °वाचां. 2. AE[2] पद्यते. 3. A° स्थितमे°.
3. 1. AE[2] जीवितादिषु. 2. A पचति यजतीति. 3. A °मानादीनां. 4. A प्रवर्तमानत्वाद.



" विभाषोपपदेन प्रतीयमाने " ( P. I. 3. 77 )

इति लादेशद्वयानुशासनात् स्वमिति पदान्तरसंसर्गरचितवाक्यावसेयं क्रियायाः प्रधानफलस्य कर्तृगामित्वम् ॥ ३ ॥

विषयभेदं विनापि क्वचित् साक्षात् क्रियाविशेष उपग्रह इत्याह ।

**[1]धात्वर्थस्तद्विशेषश्चाप्युक्तः क्वचिदुपग्रहः ।**
**धात्वर्थो गन्धनादिः स्याद् व्यतिहारो विशेषणम् ॥ ४ ॥**

गन्धनावक्षेपणादयः क्रियाविशेषा धातुवाच्याः सन्तोऽपि विनात्मनेपदमनभिव्यक्ता इत्यात्मनेपदाभिव्यङ्ग्यत्वादुपग्रहशब्दवाच्या भवन्ति । तद् यथा – उत्कुरुते अवकुरुते[2] इत्यादि । व्यतिहारस्तु क्रियाविशेषणमात्मनेपदाभिव्यङ्ग्यमुपग्रहः । व्यतिपुनत इति ॥ ४ ॥

कर्त्रभिप्राये क्रियाफल इति विशेष्य कथमुच्यते, यावता सर्वमेव फलं क्रियायाः कर्तारमभिप्रैतीत्यत आह ––

**क्रियाप्रवृत्तावाख्याता[1] कैश्चित् स्वार्थपरार्थता ।**
**असती वा सती वापि विवक्षितनिबन्धना ॥ ५ ॥**

" सर्वे[2] इमे स्वभूत्यर्थं यतन्त " ( M. Bhā. II, p. 36, l. 1. )

इति । सर्वस्य स्वार्थं प्रवृत्तेः स्वार्थता पारमार्थिकी, परार्थता तु **असती** एव । **सती वा** इति तु लौकिकी वाचोयुक्तिः । तथा हि–विवक्षा **विवक्षितं निबन्धनं** हेतुरस्याः परार्थतायाः । [3]स्वार्थता हि मुख्यैवेति न तस्या विवक्षानिबन्धनत्वम् । तदित्थं पारार्थ्यविवक्षायां मा भूदात्मनेपदमिति कर्त्रभिप्राये क्रियाफल इति फलं विशेष्यते । अन्ये तु प्रधानफलाभिप्रायेण वस्तुत एव स्वार्थपरार्थतामाहुरिति[4] **कैश्चित्** इति वचनान्मतान्तरमुपक्षिप्तं भवति । तथा हि–यः स्वर्गौदनादिमुख्यफलार्थी स तत्रान्यान् व्यापारयति, निर्वेशेन प्रतिविधानं चारभते । ततश्च तस्य [5]प्रतिविधातुर्मुख्यफलार्थिनः स्वार्थ आरम्भ इति तत्रात्मनेपदं यजमानादौ । यस्तु तत्प्रयुक्तो निर्वेशमात्रफलः स स्वामिचित्तानुवर्तनादेव कृतार्थतां मन्यत इति तस्यासौ परार्थ आरम्भ इति न भवति तत्रात्मनेपदम् ॥ ५ ॥

4. 1. M om. the first half of the कारिका. 2. P om. अवकुरुते.
5. 1. AE[2] M °वृत्ताव्याख्या°. 2. M om. सर्व इमे–निबन्धने. 3. A स्वार्था, E[2] om. स्वार्थता–वस्तुत एव, M परार्थता. 4. A °ता मा भूदिति. 5. A प्रतिनिधा न मुख्यफलार्थाः न स्वा°

इत्थं च संविधान आत्मनेपदं तत्रैव णिजित्यनयोः समानो विषय इत्याह ।

**केषाञ्चित् कर्त्रभिप्राये णिचा सह [1]विकल्पते ।**
**आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा ॥ ६ ॥**

णिचः संविधानमात्रमर्थं मन्यन्त केचित् ।

‘ सर्व इमे स्वत्भूयर्थं यतन्ते ’ ( M. Bhā II. p. 36; l. 1 )

इति [2]स्वार्थं प्रवर्तमानस्य प्रयोज्यस्य प्रयोजकस्तदानुकूल्याचरणाद् संविधाता भण्यते । न ह्यननुविधेयस्य वचनात् [3]स्वार्थमसम्भावयतो वा प्रवृत्तिरिति न प्रैषो णिजर्थः । अपि तु संविधानमात्रम्, तत्रैवात्मनेपदमपीति तुल्यविषयत्वादनयोः पर्यायेण प्रयोगः ‘ यजते याजयति, पचते पाचयति ’ इति । आत्मनेपदाभिधेयो हि कर्ता संविधानमपेक्षते इति णिचा तुल्यविषयम् **आत्मनेपदम्** इति **विकल्पते** तेन सह । **यथा तदर्था** णिच उत्पादनार्था **प्रकृतिः** [4]धातुर्णिचा सह विकल्पते । ये धात्वर्थविशेषणतां हेतुमतीत्यस्य मन्यन्ते तेषामन्येषां मते हेतुमति व्यापारे वर्तमानाद् धातोर्द्योतको णिजिति कुतश्चिदर्थसामर्थ्याद्धेतुमतः संविधानविशिष्टस्य व्यापारस्य क्रीणीष्वेत्यादिवदवगमाण्णिगन्तर्हिता शुद्धा प्रकृतिः प्रयोगमर्हत्येवेति मन्यन्ते । ये तु[5] भूयस णिचमन्तरेण प्रैषस्याप्रतीतेर्हेतुमतीत्यस्य प्रत्ययार्थत्वं मन्यन्ते तेषां यथा णिचप्रकृतिर्णिचा सह न विकल्पते तथात्मनेपदमपीति । केषांचिदिति वदन् पक्षान्तरं सूचयति । तथाहि—आत्मनेपदविषयस्य कर्तुः [6]संविधानं क्रियागतो धर्मो धातुवाच्यो भवेत् । आत्मनेपदेन हि क्रियाफलं कर्तृगामि द्योतयता सामर्थ्याद् प्रधानफलयुक्तः कर्ताभिधीयते, न तु प्रैषः स्पृश्यते । न हि प्रयोज्यप्रयोजकव्यापारो ण्यन्तवदात्मनेपदान्तधातुविषये प्रतीयते । अत एव शाब्दी प्रतीतिर्भिद्यते । यजत इति फलार्थी स्वतन्त्रो यागं भावयतीत्यर्थः । तत्र चानन्यप्रयोज्यस्य स्वतन्त्रस्य भावनायामौचित्यात् संविधानं व्यापारः प्रतीयते, न त्वस्माच्छाब्दव्यापारात् परं प्रयुङ्क्त इत्यवगतिः । याजयतीति यागे परं प्रयुङ्क्ते इति शाब्द एवावगमः । तात्पर्यदशा तु वास्तवव्यापाराश्रये विषयसाम्यं भवेत् । तस्माद् भिन्नविषयत्वान्नात्र विकल्प इत्येष सिद्धान्तोऽभिमतः ॥ अन्यथैकविषयत्वाद् धातुसामान्यविहितस्य णिचो धातुविशेषात् स्वरितञितो विधीयमानमात्मनेपदं बाधकं स्यादिति न विकल्पो भवेत्, लस्य

तिप्तस्झि.... (P. 3. 4. 78.)

6. 1. E[2] विकल्प्यते. 2. A. स्वार्थः 3. A स्वार्थाय सम्भावयते. 4. A om. धातुः, E[2] has a gap here. 5. A यत्तूमयथा, E[2] यत्तु ... 6. A E[2] °तुरसंवि°



इत्यनेन विधानात्

‘ स्वरितञितः .... ( P. 1. 3. 72. )

इत्यादिर्न विधिरिति चेन्नियमस्तर्हि भविष्यति । स चैकवाक्यतया [7]विधिशेष एव । अन्यथा परस्मैपदबाधकत्वमपि कथमात्मनेपदस्य स्यादिति । तदेवं भिन्नविषये णिजात्मनेपदे, संविधाने आत्मनेपदं तद्विशेषे तु प्रैषे णिजिति । यत्र तु पारार्थ्यं धात्वर्थस्यान्यतोऽवगम्यते तत्र न भवत्यात्मनेपदम् । तद् यथा—उक्तः करोति, प्रेषितः करोतीति प्रैषेण कर्तुः पारार्थ्यावगतेः स्वार्थतासम्प्रत्ययादात्मनेपदाभावोऽत्र । एवमोदनं पचतीति करणादिकारकान्तरप्रैषेऽपि प्रयोज्यकर्तुः प्रधानफलार्थताभावादात्मनेपदाभावः । तथा अजां नयति ग्राममित्यत्र[8] धात्वर्थप्रैषमात्रविवक्षायां भृत्ये कर्तर्यात्मनेपदं न भवति । [9]धात्वर्थाविषयप्रैषविवक्षायां तु स्वात्मनि कर्तरि भवत्यात्मनेपदं अजां नयते ग्रामम् इति ॥ ६ ॥

इदानीं ये णिचा सहात्मनेपदस्य विकल्पमिच्छन्ति तेषां विषयसाम्यावगमभ्रान्तिबीजमुपदर्शयति ।

**क्रीणीष्व वपते धत्ते चिनोति चिनुतेऽपि च ।**
**आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते ॥ ७ ॥**

‘ स्वात्मानं क्रीणीष्व ’ इति विनताभिहिता पुत्रानाह ‘ क्रीणीत माम् ’ इति शिष्टप्रयोगोऽस्ति । अत्र ‘ क्रीणीष्व ’ इत्यात्मनेपदान्तस्य प्रयोगस्य ण्यर्थः प्रैषोऽवधार्यते । दास्यं [1]प्राप्ता हि विनता नागमात्रात्मानं क्रीणीष्व दास्यान्मोचयेति कद्रूवा [2]क्रयणस्वातन्त्र्ये नियुज्यत इति परप्रयोज्यतावगमाद् ण्यर्थतायामात्मनेपदमिदमिति [3]समानविषयत्वं णिजात्मनेपदयोरेतस्मात् प्रयोगाद् भ्रान्तिबीजं मन्यन्ते । तथाहि—सामर्थ्यादत्र[4] ण्यर्थोऽवगम्यते, नात्मनेपदात् । क्रयणे हि विनियुज्यते विनता । क्रयणस्य चात्र [5]दास्यविनवृत्तिलक्षणं फलं क्रेतुः कर्तुरात्मगामीति कर्त्रभिप्रायक्रियाफलगतमात्मनेपदं विहितम् । इयत्येव शब्दार्थे पर्यवसिते परतोऽर्थसामर्थ्यात् क्रापयेति ण्यर्थो[6]ऽत्रावधार्यते । तथा हि—सा विनतात्मानं कथं क्रीणाति दास्यान्मोचयति ? यदि प्रत्युपकारं काद्रवेयाणामाचरति । न च सा स्वयं प्रत्युपकर्तुं शक्तेति पुत्रानाह [7]क्रीणीत माम् इति । तथा च ‘ पुत्रैरात्मानं दास्यान्मोचय ’, ‘ क्रापय ’ इत्यमर्थोऽस्य क्रीणीष्व इति पदस्य प्रकरण-

7. M विधिविशेष. 8. M om. इत्यत्र—स्वात्मनि कर्तरि. 9. P धात्वर्थविषय.

7. 1. A दास्यप्रा° 2 A क्रापणे स्वातन्त्र्ये नियु° E[2] तद्रूपो क्रयेण स्वातन्त्र्ये. 3 A समानपदत्वं. 4. A°दन्यत्र. 5. AE[2] चात्र विनि°. 6. A °ण्यर्थोऽवधा° 7. AE[2] क्रीणीष्व.

सामर्थ्यपर्यालोचनया [8]लभ्यत इति न पदार्थविषयेणात्मनेपदेनात्र णिच् समानविष इति । एवं केशश्मश्रु वपत इति प्रयोगो भ्रान्तिबीजं दृश्यते । तथा हि वपते वपनं मुण्डनमन्येन कारयतीत्यर्थः इति णिजात्मनेपदे समानविषये मन्यन्ते । अत्र च तिङन्तात् कर्तृगामि क्रियाफलं प्रतीयत इत्यात्मनेपदं सामर्थ्यात् तु स्वयमशक्तोऽन्यं प्रयुङ्क्त इत्यवगम्यते । तथा ' 'तृप्ता[9] पत्नी रेतो धत्ते' इति प्रयोगो दृश्यते शिष्टानाम् । रेतो धापयतीत्यत्र चार्थः सामर्थ्यगम्यः । न हि पत्न्याः पौंस्नं [10]सम्भवति, तच्च[11] रेतोधारणयोग्यम्, पुमिन्द्रियेण तद्धारणात्, पत्न्यास्तु रेतोधारणयोग्यपुमिन्द्रियाभाव इति सामर्थ्यलभ्योऽत्र ण्यर्थो न तिङन्तवाच्यो येनात्मनेपदेन समानविषयता णिचः स्यात् । आत्मनेपदाद्धि धारणस्वातन्त्र्यमात्रमवगम्यते । तच्च पत्नीसम्बन्धाद् वाक्यार्थपर्यालोचनया प्रयोजककर्तृविषयमात्रमवगम्यते । पदं हि पदान्तरनिरपेक्षं स्वार्थमात्रमावेदयते । वाक्यसामर्थ्यात्तु विशिष्टार्थावगतिः ।

" सैषात्र यज्ञस्य समृद्धिर्योऽग्निं चिनुते यश्चिनोति यश्चीयते "

इत्यत्रापि चिनुत इति शिष्टप्रयोगे संविधाता चयनगतः प्रतीयते । तिङः सामर्थ्यात्तु प्रेषणमशब्दार्थोऽपि णिज्विषयं प्रतीयते । यो हि स्वयं चयनमनुतिष्टति परप्रयुक्तः स चिनोतीत्येतस्मादेवावगम्यते इति प्रयोजकस्तृतीयोऽर्थाच्चिनुत इत्यतः प्रतीयते । तदेतेषु प्रयोगेष्वर्थसामर्थ्यादिनावसितमपि ण्यर्थमात्मनेपदान्तशब्दार्थं इति मत्वा कैश्चिद् भ्रमाणिजात्मनेपदयोर्विषयसाम्यं सर्वत्राश्रित्य विकल्पः प्रतिपादितः । गतमदः ॥ ७ ॥

इह संविधाने आत्मनेपदमित्युक्तम् । पचादीनां च प्रधानभूतविक्लित्त्यादिवचनात् कथं संविधानोपादानं येन तद्विशिष्टवचनाद् धातोस्तत्रात्मनेपदं स्यादित्याशङ्क्याह ।

**संविधानं पचादीनां क्वचिदर्थः प्रतीयते ।**
**तन्निमित्ता यथान्यापि क्रियाधिश्रयणादिका ॥ ८ ॥**

" कः पचेः प्रधानार्थः । यासौ तण्डुलानां विक्लित्तिः । अथेदानीं[1] प्रेषणमध्येषणं वा युक्तं यत् सर्वं पच्यर्थः स्यात् । [2]बाढं युक्तम् । " ( M. Bhā. II. p. 32, l. 25 )

इति भाष्ये प्रयोजकव्यापारस्यापि धात्वर्थतोपन्यस्ता । तथा चोदासीनोऽपि प्रयोजकः सामग्रीं परिपोषयन् संविधाता कारक इति तद्व्यापारो धातुवाच्यः पचत

8. P °लोचनालभ्य इ°. 9. AE² यत्रैषा पत्नी°. 10. A पौंस्नं रेतः स°. 11. A ततो धारणयोग्यं पुत्रं येन तं धारयति.

8. 1. M. Bhā has तदभिसंधिपूर्वके प्रे°. 2. In the M Bhā. बाढं युक्तं comes before इह पचेः कः प्रधानार्थः



इति विक्लित्त्यर्थत्वाद् यथाधिश्रयणोदकासेचनादिः प्रयोज्यकर्तुर्व्यापारः । पचति देवदत्त इति अधिश्रयति उदकमासेचयति इत्याद्यर्थः । पचते देवदत्त इति सम्भारं ढौकयतीत्यर्थः । तस्यैव तु प्रयोज्यप्रेषणे विवक्षिते णिज् भवति पाचयतीति । न हि संविधानमेव प्रैषः, अपि तु तत्पूर्वकं प्रेरणं यत्कुर्वन् प्रयोजक इत्युच्यते । [3]संविधानं हि कुर्वन्नपि यावत् प्रेषणं नाचरति न तावत् प्रयोजकः कथ्यते ॥ ८ ॥

कर्त्रभिप्राये विधीयमानमात्मनेपदं कथं धातोः संविधानार्थतामाक्षिपतीत्याह ।

**कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम् ।**
**तथाभूता क्रिया या हि तत्कर्ता फलभाग् यतः ॥ ९ ॥**

कर्त्रभिप्रायक्रियाफलग्रहणेन संविधानविशिष्टा क्रिया निर्दिश्यते यस्माद् [1]यैवंभूता क्रिया विशिष्टरूपा तस्याः कर्ता फलेन युज्यते । न ह्यसंविदधद् याजकादिः क्रियाफलं स्वर्गाद्यश्नुते[2] । ततश्च कार्यभूतेन फलसम्बन्धेन कारणभूता क्रियोपलक्षितेति तत्रात्मनेपदमित्युक्तं भवति ॥ ९ ॥

उपलक्षणे दृष्टान्तमाह ।

**यथोपलक्ष्यते कालस्तारकादर्शनादिभिः ।**
**तथा फलविशेषेण क्रियाभेदो निदर्श्यते ॥ १० ॥**

' नक्षत्रं दृष्ट्वा वाचं विसृजेत् '

इति नक्षत्रदर्शनस्य [1]संध्याविगमलक्षणकालविशेषोपलक्षणार्थत्वात् घनाघनगहने गगने तदभावेऽपि नालिकादिभिस्तथाविधकालावधारणे वाग्विसर्गो भवत्येव यथा तथा प्रधानफलसंबन्धस्य संविधानोपलक्षणार्थत्वादनादृत्यापि फलविशेषद्योतनमात्मनेपदं संविधानमात्रे भवति ॥ १० ॥

भाष्ये स्वरितञिद्ग्रहणं प्रत्याख्यातमिति यातिप्रभृतिभ्योऽपि कस्मादात्मनेपदं न भवतीत्याह ।

**क्रियाविशेषवचने सामर्थ्यमुपरुध्यते ।**
**केषाञ्चिदन्ये तु कृताः स्वरितेतो ञितस्तथा ॥ ११ ॥**

कर्त्रभिप्रायक्रियाफलोपलक्षिते संविधानलक्षणे क्रियाविशेषे प्रत्याख्ये यातिप्रभृतीनां धातूनां शक्तिः प्रतिहन्यते । नियता हि शब्दशक्तिः । ये तु संविधानाभिधानसमर्थास्ते

3. AE² तथाविधानि कु°. ।

9. 1. AE² I °स्मादेवंभूता. 2. AE² लभते.

10. 1. AE² M °विगमकाल°.

स्वरितेत्संज्ञका ञकारेत्संज्ञकाश्च पठिता धातुपाठे संविधानविशिष्टक्रियावचनसामर्थ्यमत्र- द्योतयितुमित्यर्थः। स्वाभाविकी हि धातूनां शक्तिर्नियतविषया दुरवसानेति ञकारा- द्यनुबन्धस्तदवगमाय कृतो गणकारैः ॥ ११ ॥

यद्येवं कथं स्वरितञिद्ग्रहणं प्रत्याख्यायते। असति हि तस्मिन्ननुबन्धाः कथं पठ्यन्ते। तद्धि तेषां कार्यम्। असति तस्मिन् तदभावः। तथा च संविधानविशिष्ट- क्रियाभिधानशक्तिर्धातूनां कथमवगम्येतेत्याह।

**अनुबन्धश्च सिद्धेऽर्थे स्मृत्यर्थमनुपज्यते।**
**तुल्यार्थेष्वपि चावश्यं न सर्वेष्वेकधर्मता ॥ १२ ॥**

इह क्रियामात्रवचनत्वेन समानाभिधेयेष्वपि धातुषु न सर्वेषु क्रियामात्रवचन- स्वभावः, अपि तु [1]शब्दशक्तिवैचित्र्याद् यथास्वं विशिष्टक्रियावचनत्वम्। तथा हि— 'या प्रापणे', 'णीञ् प्रापणे' इति तुल्येऽप्यर्थनिर्देशे यातेः प्राप्तिः[2] प्रापणमर्थः, नयतेस्तु प्रापणा प्रापणमिति संविधानमर्थोऽवगम्यते। एवमन्येषामपि संविधाना- र्थता स्वाभाविकी बोद्धव्या। [3]तामेव [4]सूचयितुं [5]ञकाराद्यनुबन्धः स्मरणार्थं निवेश्यते। यो हि प्रयोगादेव स्वभावविशेषमवधारयितुमशक्तस्तं[6] प्रति **स्मृत्यर्थोऽनुबन्धासङ्गः**, प्रयोगज्ञं तु प्रति नार्थस्तेन। तथा च प्रयोगदर्शिनं च प्रति स्वरितञिद्ग्रहणं शक्यमकर्तु- मिति प्रत्याख्यातं एतद्भाष्ये। वचनानुसारिणं[7] तु प्रति क्रियत एवैतत्। तथा च भाष्यम्

"वृत्तज्ञो ह्याचार्यः [8]तत्समर्थान् अनुबन्धान् आसजति"

(M Bhā. I. p. c. 266, l. 20)

इति। वर्तन्तेऽस्मिन् कार्याणीति वृत्तं प्रयोगो वर्तनं वृत्तमिति शब्दव्यापारो वा। तज्ज्ञः सूत्रकारो वचनानुसारिणमवृत्तज्ञं प्रति ञकारमासजतीत्यर्थः ॥ १२ ॥

तुल्यार्थेष्वपि नैकधर्मतेत्यत्र दृष्टान्तमाह।

**दृशीक्ष्योः सदृशेऽप्यर्थे नाभेदः प्रतिपूर्वयोः।**
**ण्यर्थोपादायिनस्तस्मान्न तुल्यार्थाः पचादिभिः ॥ १३ ॥**

गणपठितेऽर्थे समानेऽपीक्षते पश्यतीत्यनयोः **प्रतिपूर्वयोः नाभेदो** न समा- नार्थता, अपि तु प्रतीक्षते इत्यन्य एवार्थः प्रतिपालनं नाम। [1]प्रतिपश्यतीति तु

---

**11.** 1. AE[2] तस्मा°.

**12.** 1. A शब्दव्यापारविशेषविशिष्टवचनत्वं. 2. A प्राप्तिप्रा° 3. AE[2] इदमेव. 4. M ज्ञापयितुम्. 5. A प्रकारा°. 6. I. °मशक्य. 7. A °सारिणा तु प्रक्रि°. I. रिणस्तु प्र° 8. M Bhā. om. तत्समर्थान्. A तुल्यमर्थमनेनानुबन्धिना.

**13.** 1. I पश्यति प्रदर्शनमर्थ.



प्रतीपदर्शनमर्थः। दृशीक्षी चोपलक्षणं रक्षतिपालयत्योरपि, प्रतिरक्षति प्रतिपालयतीत्यन्य एवार्थः। एवं हरतिनयत्योः सम्पूर्वयोः संहरति संनयतीत्याद्यप्युदाहार्यम्। एवं ण्यर्थमपि ये सम्बन्धितया स्वीकुर्वन्ति ते संविधानाभिधायिभिः **पचादिभिर्न** समान- वाच्याः। न हि सर्वे धातवो ण्यर्थेन संगच्छन्त इत्येतावता संविधानाभिधायिनोऽपि स्युः, शक्तिभेदात्। प्रैषो हि ण्यर्थः, संविधानं ततोऽन्यत् तद्धेतुरपीत्युक्तमेव। अत एव संविधानमेव ण्यर्थोऽत्र नाभिमतः। एवं हि पचादिभिस्तदभिधायिनां भिन्नार्थता न भवेत्, पचादीनामपि संविधानाभिधानात् सामान्येन पचादिभिरित्युक्तत्वान्न परस्मैपदा- न्तैरात्मनेपदान्तानां भिन्नार्थतेति लभ्यते ॥ १३ ॥

संविधानेन स्वरितञिद्व्यतिरिक्तानां न सर्वथैवायोगोऽपि तु योगेऽपि ते तदभिधानशक्तिविकला इत्याह।

**उम्भ्यर्थे वर्तमानस्य करोतेर्भिन्नधर्मणः।**
**ण्यर्थोपादायिता तस्मान्नियताः शब्दशक्तयः ॥ १४ ॥**

उदुम्भाञ्चकारेत्यामन्तस्यान[1]भिव्यक्तपदार्थकस्याभिव्यक्त्यर्थं करोतिरनुप्रयुज्यते। स च क्रियासामान्यवाचीत्यत्रोम्भ्यर्थे वर्तते। ततश्च तस्य विशिष्टक्रियोपनिपाते **भिन्नधर्मणो** नानास्वभावस्य ण्यर्थ इव ण्यर्थः संविधानं तदभिधायित्वं दृष्टम्। तथा च ञिदयं पठितः। यत एवं तस्माच्छब्दानां शक्तयो नियताः। एकस्मिन्नपि ह्यर्थेऽ- त्रोम्भेः संविधानाभिधाने शक्तिर्नास्ति करोतेस्त्वस्ति। इत्थं चास्ति संविधानेनोम्भेः सम्बन्धो येन तदर्थप्रवृत्तेः करोतेस्तदभिधानशक्तिः। [2]सत्यपि च तस्मिंस्तदभिधान- सामर्थ्यमस्य नास्ति। [3]वस्तुत एव तु संविधानेनोम्भेः सम्बंधाभावे करोत्यर्थोऽपि संविधानेन न विशेष्यते ॥ १४ ॥

कथमवसीयते करोत्यर्थोऽत्र संविधानविशिष्ट इति तदर्थसंप्रत्यायकस्यात्मनेपद- स्यादर्शनादित्याशङ्क्य भाष्यकाराभ्युपगममत्रार्थे संवादकमाह।

**तथा ह्यनुप्रयोगस्य करोतेरात्मनेपदे।**
**पूर्ववद्ग्रहणं प्राप्ते स्वरितं समुपस्थितम् ॥ १५ ॥**

इह

'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' (P. 1. 3. 63.)

इत्यात्मनेपदविधानमकर्त्रभिप्राये चरितार्थम्। कर्त्रभिप्राये तु कृञोऽनुयोगस्यात्मनेपदे

'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (P. 1. 3. 72.)

---

**14.** 1. I om अनभिव्यक्तपदार्थकस्य. 2. M. शक्यापिच. 3. M वस्तुभावस्य.

इत्यनेन प्रसक्ते

‘ पूर्ववत् सनः ’ ( P. 1. 3. 62. )

इत्यतः सूत्रात् स्वरितलिङ्गयुक्तं [1]पूर्ववद्ग्रहणमधिकृतमिति भाष्यकारेणोपगतम्। तथा चानुप्रयोगस्य कृञो यदाम्प्रत्ययात् पूर्वस्य धातोरात्मनेपदं तदा कर्त्रभिप्रायेऽपि तद् भवति नान्यथेति नियमार्थात् [2]पूर्ववद्ग्रहणादत्रात्मनेपदाभावः। एतच्च कथमुपपद्यते यद्यनुप्रयोगस्य करोतेः संविधानाभिधानसामर्थ्यं स्यात्। अन्यथात्मनेपदा[3]प्रसङ्गात् किं पूर्ववद्ग्रहणेन ॥ १५ ॥

णिज्योग्यार्थाभिधानेऽपि न सर्वेषां धातूनां संविधानप्रत्यायनसामर्थ्यमप्यनुमेयमित्ये।न्निदर्शनोपन्यासेन स्थिरयति।

**एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया।**
**भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रितः॥ १६ ॥**

साध्यस्वभावत्वात् क्रियायाः स्वतो नास्ति भेदः। तिङन्तपदविषये त्वेकपदोपात्तकर्तृकर्मलक्षणसाधनाधारद्रव्यगतद्वित्वबहुत्वाभ्यां पचतः पचन्ति पच्येते पच्यन्ते इति [1]विशिष्यते। द्विबहुसाधनसाध्यत्वं ह्यत्रोपगम्यते क्रियायाः। यथा[2] च साधनाधारद्रव्यसंख्यायोगस्तथा तद्गतलिङ्गविशेषयोगोऽपि कस्मान्न भवतीति न शक्यते वक्तुमाख्याता लिङ्गविशेषस्याप्रतीतेः। एकपदोपादाने साधनाश्रयस्य द्वित्वादेरेवावगमो न तु स्त्रीत्वपुंस्त्वविशिष्टेऽर्थे समवेतेयं क्रियेत्याख्यातादवगम्यते। स्वाभाविकं हि शब्दानामर्थप्रत्यायनं न युक्तिगम्यम्। साधनसङ्ख्ययेत्येव वक्तव्ये व्यापाराविष्टं द्रव्यात्मकमेव सङ्ख्यायुक्तमाख्याताभिधेयं न शक्तिमात्रमित्याश्रयग्रहणेन सूचयति। तथा च देवदत्तः पचतीति द्रव्येण सामानाधिकरण्यं दृश्यते। अत एव द्रव्यवादिनामाख्यातार्थोऽपि द्रव्यमित्यभ्युपगमः॥ १६ ॥

तदयं निदर्शनार्थः साध्येन योज्यते।

**तस्मादवस्थितेऽप्यर्थे कस्यचित् प्रतिवध्यते।**
**शब्दस्य शक्तिः स त्वेष शास्त्रेऽन्वाख्यायते विधिः॥ १७ ॥**

यत एवं शब्दशक्तिभेदापेक्षम[1]भिधानमन्यत्रापि तस्मात् संविधानसंबन्धे सत्यपि धातूनां कस्यचिद् [2]यात्यादेस्तत्प्रत्यायने सामर्थ्यं प्रतिहन्यत इत्युक्तमुम्म्यादिसमानार्थस्य करोतेः संविधानाभिधानसामर्थ्यं नोम्भेरिति। स चैष शब्दशक्तिनियमार्थः प्रकारः स्वरितञिद्ग्रहणेन शास्त्रे ज्ञाप्यते प्रकटीक्रियते। गतमेतत्॥ १७ ॥

---

15. 1. P °णमवर्थांकृ° I °मपिक° 2. AE[2] पूर्वग्रहणा. 3. I. °दं स्यात् प्रस°.

16. 1. M विशेष्यते. 2. I तथा.

17. 1. M om. मभिधानमन्यत्रापि––करोतेः संविधान. 2. A धात्वादेस्तु.



इह यज[1]न्ति याजकाः पचन्ति भक्तकरा इत्येतत् कर्त्रभिप्रायक्रियाफलग्रहणस्य व्यावर्त्यमुदाहृत्य याजकानपि दक्षिणा फलमभिप्रैति कर्मकरानपि भृतिरित्याक्षिप्य

“ सर्वत्रैव क्रियाफलं कर्तारमभिप्रैति। तत्र प्रकर्षगतिर्विज्ञायते साधीयो यत् क्रियाफलमभिप्रैति। किञ्च साधीयो यदर्था क्रियारभ्यते ” (M. Bhā. I p. 293, l. 6.) इति भाष्ये समर्थितम् एतद् व्याचष्टे।

**यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।**
**तत् प्रधानं फलं तेषां न लाभादि प्रयोजनम्॥ १८ ॥**

इह कर्त्रभिप्रायक्रियाफलस्य [2]संविधानोपलक्षणत्वात् संविधानक्रियावचनाद् धातोरात्मनेपदमित्युक्तं भवति। [3]यत्र च संविधाने यत् फलं तदेवोपलक्षणं युक्तम्। तच्च यदर्थं संविधानारम्भः, यदुद्देशेन हि [4]संविधाता प्रथममेव संविधानं साधनोपार्जनं योग्यतानुसारेण च प्रवर्तनमारभते तत् स्वर्गादि प्रधानं फलं वेदितव्यम्। संविधात्रा नियुक्तानि कारकाणि तदिच्छया प्रवर्तन्त इति तेषां दक्षिणा भृतिर्वा फलमप्रधानं तादर्थ्येन पूर्वमेव क्रियाप्रवृत्त्ययोगात्। संविधाता पुनः प्रधानक्रियार्थमुदासीनोऽपि बहुमुखमाचेष्टत इति मुख्यफलाभिसन्धानेन स एव क्रियाः पच्यादिकाः प्रवर्तयति। तदयं फलस्य प्रकर्षस्तादर्थ्येन[5] पूर्वमेव प्रधानक्रियारम्भाद् व्याख्यातः॥ १८ ॥

संविधाने आत्मनेपदमित्यस्मिन् [1]पक्षे सिद्धान्ते चोदितं भाष्ये––

“ इह कथं भवितव्यं स्वामिदासौ पचतः ” इति।

एतद् व्याचष्टे।

**[2]यत्रोभौ स्वामिदासौ तु प्रारभेते सहक्रियाम्।**
**युगपद् धर्मभेदेन धातुस्तत्र न वर्तते॥ १९ ॥**

प्रभुभृत्ययोः सम्भूय द्वन्द्वनिर्देशेनाभिधीयमानयोः क्रियारम्भे तत्साध्यस्य व्यापारस्य भेदात् युगपदेककालं धातुर्वाचकत्वं नासादयति। तथाहि–प्रभुसाध्यं संविधानं सम्भारघटनं भृत्यसाध्यं तु प्रधानक्रियारूपमिति विलक्षणत्वात् व्यापारस्यैकधातुवाच्यता नोपपद्यते। तथा च किमात्मनेपदं संविधात्रपेक्षं क्रियतां किं वा दासापेक्षं परस्मैपदमिति संशयो न व्यावर्तते॥ १९ ॥

अथापि कथञ्चित् क्रियाद्वयं विलक्षणमप्यनेकार्थत्वाद् धातुरभि[1]दधीत तथापि

**यत्र प्रतिविधानार्थः पचिस्तत्रात्मनेपदम्।**
**[2]परस्मैपदमन्यत्र संस्काराद्यभिधायिनि॥ २० ॥**

---

18. 1. A यजति याजकः पचति कर्मकर. 2. A विधानो° 3. AE[2] I तत्र च. 4. A om. संविधाता प्रथममेव. 5. A °र्थ्यादपू°.

19. 1. I om. पक्षे. 2. AE[2] यदोभौ.

20. 1. AE[2] अभिधीयते. 2. M om. अन्यत्र संस्कारा°—तु परस्मैपदम्.

प्रति.विधानं संविधानं तद्वचनात् पचेः **आत्मनेपदम्** आम्नातं वाक्यगतविक्लि-
त्तिपर्यन्तसाधनविनियोगादिलक्षणसंस्कारादिवचनात् तु **परस्मैपदम्** इति धातुनार्थ-
द्वयस्वाकारेऽप्येकस्मिन् प्रयोगे विरुद्धस्वरूपलादेशद्वयानुपपत्तिः ॥ २० ॥

अत्र समाधिः

**संविधातुश्च सान्निध्यात्[1] दासे धर्मोऽनुषज्यते ।**
**प्लक्षशब्दस्य सान्निध्यान्न्यग्रोधे प्लक्षता यथा ॥ २१ ॥**

अयमर्थः । अतुल्यकक्ष्ययोरप्यनयोर्यद्येकशब्दवाच्यताऽभ्युपगम्यते तदा युग-
पदविकरणवचनतायां[2] द्वन्द्वविधानाद् द्वन्द्वनिर्दिष्टौ स्वामिदासावेकस्मिन् पच्यर्थे सह
विवक्ष्येते । तत्र चेतरेतरधर्माध्यासात् साहचर्यमिति स्वामिसाहचर्याद् दासे संविधानं
तद्व्यापारोऽध्यारोप्यते । तथा च स्वामिना तुल्यो दास इति स्वामिद्वयस्य कर्तृत्वे
संविधानवचनाद् धातोरात्मनेपदं क्रियते स्वामिदासौ पचेते इति । तद् यथा प्लक्षन्य-
ग्रोधाविति [3]सहविवक्षायां न्यग्रोधे प्लक्षरूपारोपः [4]प्लक्षरणान्न्यग्रोधोऽपि प्लक्ष
इति । तथा चानुस्यूतभेदस्य [5]समुदायस्याभिधानादितरेतरापेक्षायां द्वन्द्वाद् द्विवचनं
भवति । एतदग्रे द्वन्द्वविचारे निर्णेष्यामः ॥ २१ ॥

कथमतद्रूपेण[1] सन्निधानमात्रादन्यरूपारोप इति दृष्टान्तेन व्युत्पादयति ।

**पुरोडाशाभिधानं च धानादिषु [2]यथा स्थितम् ।**
**छत्रिणा [3]चाभिसंबन्धाच्छत्रिशब्दाभिधेयता ॥ २२ ॥**

प्रातःसवने

" पुरोडाशैः प्रचरन्ति "

इत्युच्यते । तत्र चैकस्य पुरोडाशस्य बहुत्वसंख्यानुपपत्तेरतत्सहचरितेष्वध्यारोपितपुरोडाश-
यागेषु सत्स्वयं प्रयोगः । तत्र पुरोडाशः धानाः करम्भः परिवापः [4]पयस्येति पञ्च
पुरोडाशाः कथ्यन्ते । तथा छत्रिणो यान्तीति बहुवचनान्यथानुपपत्त्या [5]पराकृतच्छत्रसंबन्धा
अपि छत्रिसाहचर्यात् तच्छब्देनाभिधीयन्ते । एवं [6]दासेऽपि स्वामिसाहचर्याद् द्वन्द्वनिर्देशा-
न्यथानुपपत्त्या स्वामिधर्मासङ्ग इत्यात्मनेपदं भवति । स्वामिदाससाध्यस्य हि व्यापारस्य
भेदोऽत्र न विवक्ष्यते इत्यभिन्नधातुवाच्यक्रियारूपाश्रयप्रधानगतधर्मोपपत्तिः ॥ २२ ॥

---

**21.** 1. A AE² सान्निध्याभावे ध°. 2. A °णकवचनानां. 3. AE² सहचरिते न्य°
4. A I प्लक्षाणां न्य°, P ( प्रक्षरण्या ? प्लक्षो न्यग्रोधः ) 5. P. °स्यानभि°.

**22.** 1. A °द्रूपसंविधा. I °द्रूपे सं० 2. M om. यथा स्थितम्--तत्र चैकस्य.
3. P चापि संब°. 4. A पयस्येति. 5. A परमकृतच्छत्रसंबोधा, E² अपाकृतछत्रधर्मा.
6. A दासो.



यद्वा मतान्तरमत्रेत्याह ।

**अर्थात् प्रतीतमन्योन्यं पारार्थ्यमविवक्षितम् ।**
**इत्ययं शेषविषयः कै[1]श्चिदत्रानुवर्ण्यते ॥ २३ ॥**

स्वामिदासयोः क्रियोपकारित्वं विलक्षणमेकस्य मुख्यफलाभिसन्धानादितरस्य
तदनभिसन्धानादित्येतदविवक्षित्वा सामान्येन मातापितरौ पुत्रं जनयत इतिवत् क्रियायां
कर्तृत्वमात्रवि[2]वक्षायां

' शेषात् कर्तरि परस्मैपदम् ' ( P. 1. 3. 78. )

भवति । स्वामिपदसन्निधानादेव हि संविधानमवगतं दासपदार्थसामर्थ्याच्च
तदगामि क्रियाफलमिति चरितार्थत्वादाख्यातस्य नात्र व्यापार इति क्रियासामान्य-
वचनाद्धातोरात्मनेपदविधावनुपयोगाच्छेषात् परस्मैपदं ' स्वामिदासौ पचत इति ॥२३॥

पञ्चभिर्हलैः '[1]कृषतीति स्वामिनः प्रतिविधातुस्तथा सम्भवाण्णिचः प्रतिपादयितुम्[2]-
दयितुं भाष्यकारेणोपन्यस्तम् । तत्र चोद्यते ।

**अथ प्रतिविधाता यो हलैः कृषति पञ्चभिः ।**
**भाष्ये नोदाहृतं कस्मात् प्राप्तं तत्रात्मनेपदम् ॥ २४ ॥**

युगपत् पञ्चभिर्हलैः कर्षणं स्वामिन उपपद्यते, न कर्षकस्येति [3]प्रतिविधात-
र्यात्मनेपदं प्रतिविधानवचनाद् धातोः कुतः कारणाल्लक्षणेन प्राप्तं न कृतं भाष्य-
कारेण ॥ २४ ॥

अत्र परिहारं शङ्कित्वा प्रतिक्षिपति ।

**प्रतीतत्वात् तदर्थस्य शेषत्वं यदि कल्प्यते ।**
**न स्यात् प्राप्तविभाषासौ [1]स्वरितेतां निवर्तिका ॥ २५ ॥**

भृत्यस्य पञ्चभिर्हलैर्युगपद् विलेखनासम्भवात् स्वाम्येव तथेति गतार्थत्वात्
संविधानस्यात्मनेपदविधावनुपयोगात् शेषत्वं परस्मैपदनिमित्तं यद्यत्रावस्थाप्यते तदा
प्रदेशान्तरविरोधः प्राप्नोति । तथा हि

' न वेति विभाषा ' ( P. 1. 1. 44 )

इत्यत्र

' विभाषोपपदेन प्रतीयमाने ' ( P. I. 3. 77 )

इतीयं **प्राप्तविभाषा** गणिता कर्त्रभिप्राये क्रियाफले स्वरितेत्संज्ञकानां नित्ये

---

**23.** 1. A कश्चित. 2. I °वक्षया.

**24.** 1. I कर्षती° 2 AE² °मावेदयितुं. 3. A प्रतिविधानाय. 4. A °विधानाया°.

**25.** 1. स्वरिते तन्निव°.

आत्मनेपदे प्राप्ते पक्षे तन्निवृत्त्यर्था । यदि चात्रोपपदेन द्योतिते न स्यादात्मनेपदं तदा स्वं यज्ञं यजतीत्यादावपि तदप्राप्तेः

विभाषोपपदेन....

इत्यप्राप्तविभाषा भवेद् विधिमुखेन प्रवृत्तेरिति विरोधः । तस्माद् द्वाभ्यामुपपदात्मनेपदाभ्यां संविधानं द्योत्यत इति प्राप्तविभाषावचनाल्लभ्यत इति कथमत्रात्मनेपदं न भवेत् ॥ २५ ॥

अत्र केचिदाहुः ।

**शुद्धे तु संविधानार्थे कैश्चिदत्रेष्यते कृषिः ।**
**तद्धर्मा यजिरित्येवं न स्यात्तत्रात्मनेपदम् ॥ २६ ॥**

ये णिचा समानविषयतामात्मनेपदस्य मन्यन्ते, त एवमिच्छन्ति संविधानमात्रेऽर्थे कृषिर्वर्तत इति[1] न भवत्यात्मनेपदं णिज्वदिति । तथा हि णिच्परिहारायोक्तम् —

" कृष्यादिषु चानु[2]त्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात् ( Vā. 3. on P. 3. 1. 26, M. Bhā. II. p. 33. l. 25. )

" नावश्यं कृषिर्विलेखन एव वर्तते । किं तर्हि । प्रतिविधानेऽपि वर्तते । ( M. Bhā. II. p, 33. l. 25. )

एवं **शुद्धे** [3]विलेखनानवच्छिन्ने **संविधानार्थे कृषिः** वर्तत इति [4]विलेखनस्य प्रयोज्यव्यापारस्यासम्भवाद् यथा णिच् नोत्पद्यते तथात्मनेपदमपि, संविधानेन विशेष्यमाणस्यान्यस्य धात्वर्थस्याभावात् । संविधानविशिष्टार्थवाचिनो हि धातोरात्मनेपदं न तु शुद्धसंविधानवचनात् । यद्यपि च विलेखनमत्र धात्वर्थः तथापि तद्विषयं प्रतिविधानं विशिष्टमेव शब्दशक्तिस्वाभाव्यात् कृषिरभिधत्ते । तद् यथा—

' फले[5] लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् '

इति प्रत्याख्याते लुकि रूढिशब्दत्वेऽपि शब्दशक्तिस्वाभाव्यादामलकादिभिर्वनस्पतिविशेषप्रभव एव फलविशेषोऽभिधीयते । तदेतन्निवारयति । तथा ह्येवमत्रोच्यमाने **यजिः** अपि तस्य कृषेरिव धर्मोऽस्येति **तद्धर्मा** कृषिधर्मा स्यादिति ततोऽपि न भवेदात्मनेपदम् । यथा[6] हि कृषिः शुद्धे प्रतिविधाने वर्तते तथा यजिरपि वर्तेत । तथा च भाष्ये प्रतिविधाने यजेर्वृत्तिरुक्ता । इदं हि तत्र चोद्यते—

26. 1. P. inserts here: विलेखनस्य प्रयोज्यव्यापारस्यासम्भवात् यथा णिच्. 2. A चानु. पपत्ति. 3. A °नावच° I °नावच्छि°. 4. P. om. here the words given under note 1. 5. I फलेषु. 6. AE[2] तथा.



" इह याजका याजयन्तीतीष्यते । हविःप्रक्षेपमात्रवचने तु यज्ञौ याजकाः हविः प्रक्षिपन्ति, तान् यजमानः प्रयोजयन् याजयतीति विपरीतमभिधानं स्यात् " इति ।

अत्र परिहार उक्तः

" यज्यादिष्वविपर्यासो नानाक्रियाणां यज्यर्थत्वात् "
( Vā. 4. on P 3. 1. 26. M. Bhā. II. p. 34 l. 3. )

" नावश्यं यजिर्हविःप्रक्षेपण एव वर्तते । किं तर्हि ।
त्यागेऽपि । तं यजमानः करोति, याजकाः कारयन्ति । "
( M. Bhā. II. p 34. l. 5 )

इति । एवं च द्रव्यत्यागमात्ररूपो यजेरर्थ इति कृषिवत् ततोऽपि न स्यादात्मनेपदम् । अथ त्यागविशिष्टं प्रतिविधानं यज्यर्थ इति भवत्यात्मनेपदं कृषेरपि विलेखनविशिष्टं संविधानमर्थ इति प्रसज्यत एवात्मनेपदम् । णिच् तु प्रैषस्यासम्प्रत्ययान्न भवति । न हि संविधानमेव ण्यर्थ इति पूर्वमेव निर्णीतम् ॥ २६ ॥

कथं तर्ह्यात्मनेपदं न भवतीति सिद्धान्तमाह ।

**अत्र तूपपदेनायमर्थभेदः प्रतीयते ।**
**प्राप्ते विभाषा क्रियते तस्मान्नास्त्यात्मनेपदम् ॥ २७ ॥**

समीपे श्रूयमाणेन पञ्चभिर्हलैरिति पदेनायं संविधानलक्षणोऽर्थविशेषो गम्यते यतस्ततोऽत्र

' विभाषोपपदेन प्रतीयमाने ' ( P. 1. 3. 77 )

इति प्राप्त आत्मनेपदे विभाषाकरणात् पक्षे न भवतीति कृषतीति साधुः प्रयोगो भाष्येऽवस्थित इति सिद्धमिष्टम् ॥ २७ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे उपग्रहसमुद्देशो द्वादशः ॥

# अथ लिङ्गसमुद्देशः

तदेवं तिङन्तार्थो विचारितः । तत्र सङ्ख्यासाधने सुवन्तसाधारणे । क्रियाकाल-पुरुषोपग्रहास्तिङन्तैकनियताः । लिङ्गं तु नामपदानामधिकं वाच्यमिति तदिदानीं विचारयितुं यथासम्भवं दर्शनभेदेन तल्लक्षणमाह ।

**स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः ।**
**तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा ॥ १ ॥**
**शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि ।**
**लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः ॥ २ ॥**

लोके यद्यल्लिङ्गं दृष्ट्वा अयं पुमान् इयं स्त्री इदं नपुंसकमिति प्रतीयते तदिह पक्षद्वयेन निर्दिष्टम् । प्रसवयोग्यस्तनकेशकलापप्रजननादिभिरुपव्यञ्जनैरवयविनः सम्बन्धः संयोगसमवायलक्षणो लिङ्गम्, तेन वा सम्बन्धेन **विशिष्टाः स्तनादय** इति पक्षद्वयम् । तदुक्तम्—

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥ (M. Bhā, II. p. 196. l. 4)

इति । उभयव्यञ्जनाभावात् तदभावे व्यञ्जनवत्त्वसाम्याच्चानेनैव नपुंसकत्वमपि लक्षितं भवति[1] । 'तदभावे नपुंसकम्' इत्येवोक्तेऽव्ययानां तिङन्तानां च तत्प्रसङ्गः । 'उभयोरन्तम्' [2]इत्येतावत्युक्ते कुक्कुटमयूर्याविति लिङ्गसमुदायविषये नपुंसकत्वं स्यादित्युभयमुपात्तम् । यत्र[3] लिङ्गान्तराभावे तुल्यजातीयं स्त्रीपुंसव्यतिरेकेण लिङ्गान्तरं सोऽर्थो नपुंसकलिङ्गयुक्त इत्यर्थः । अत्र च मत्वर्थीयेन य एव सम्बन्धविशेष उक्तः स एवेहानूदितः स्तनकेशसम्बन्धस्य चोपलक्षणत्वात् । [4]प्रसवयोनिविशेषादि यथास्वं दृष्टो विशेष इहादिग्रहणाद् गृह्यते । एवं लोमसम्बन्धोऽपि विशिष्टोऽन्यस्याप्युपलक्षणमिति प्रसवादयोऽपि गृह्यन्ते । तेन

'लिङ्गात् स्त्रीपुंसयोर्ज्ञाने भ्रुकुंसे टाप् प्रसज्यते ।' (M. Bhā, II, p. 196 l. 6.)
'नत्वं खरकुटीः पश्य' (M. Bhā II. l. 196, l. 9.)

इति चोद्यं नावतरति [5]विशिष्टसंबन्धस्याश्रयणात् । लोके हि यो दृष्टः सम्बन्धस्तमनूद्य

1-2. 1. A I M om. भवति. 2. A इत्युक्ते. 3. AE[2] यत्र यत्र, M यत्र तत्र.
4. om. प्रसवयोनि–इहादिग्रहणाद. 5. M om. नावतरति–भेदस्य ग्रहणम्.



लक्षणे क्रियमाणे नातिप्रसङ्गो भवति । अत एवादिग्रहणाद् यथास्वं स्त्र्यादिनियतस्य भेदस्य ग्रहणम् । एतत्तु दर्शनद्वयमचेतनानां स्तनादिरहितत्वादव्यापकमित्युक्तं

'खट्वावृक्षौ न सिध्यतः' (M. Bhā. II. l. 196. l. 13.)

इति । अतः पक्षान्तराश्रयणम् । तत्र च तीर्थिकमतभेदेन पक्षभेदः । सर्वत्रा-भिन्नाभिधानप्रत्ययोन्नीतसद्भावां[6] जातिं मन्यन्ते इति स्तनाद्युपव्यञ्जनाभिव्यक्तविशेषा[7] स्त्रीत्वपुंस्त्वनपुंसकत्वरूपा लिङ्गजातिरित्याहुः । सा [8]चाचेतनेष्वपि यथास्वमुपव्यञ्जना-भिव्यक्ता विद्यत एवेति वक्ष्यते । ननु स्तनाद्युपव्यञ्जनापि जातिः कथमचेतनेषु[9], न हि तत्र स्तनादयः सन्ति । अथादिग्रहणाद् यथायथं विशिष्टमेवोपव्यञ्जनम्, एवं सति पूर्वोक्तमपि पक्षद्वयं नाव्यापकम् । अचेतनेष्वपि यथास्वमुपव्यञ्जनविशेषस्य[10] ग्रहणात् । अस्ति हि खट्वादीनामपि किञ्चिन्निमित्तं यद्वशात् स्त्र्याद्याकारप्रत्ययप्रसवः । सत्यमेतत् । अर्थव्यक्तिवस्तुशब्दानां तु त्रिलिङ्गानां सर्वभावेष्वव्याहतप्रसरत्वात् त्रिलिङ्ग-योगस्तदाकारप्रत्ययान्यथानुपपत्त्यानुमीयते । तत्र च परस्परविरोधिनियतव्यञ्जनसम्बन्ध-रूपं लिङ्गत्रयं लौकिकं कथं स्यादिति तदवधीरणेन जातिपक्षावलम्बनम् । जातीनां हि सर्वगतत्वादेकाश्रयसमवायित्वं बह्वीनामप्युपपद्यते । एवं गुणावस्थादीनामपि लिङ्गानां [11]सर्वत्राविरोधः । तथाहि सांख्या सत्त्वरजस्तमसां गुणानां सततपरिणामिनामुपचया-पचयमाध्यस्थ्यलक्षणा अवस्थाविशेषा यथायोगं पुंस्त्वादिलिङ्गमातिष्ठन्ते । तदेतद् भाष्यकाराभिमतं दर्शनम् । संस्त्यानप्रसवस्थितयो हि तस्य लिङ्गम् । तथा चाह—

"संस्त्यानप्रसवौ लिङ्गम् । (M. Bhā. II. p. 197, l. 27)
"सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः"

(M. Bhā. II p. 198 l. 5.)

इति । सर्वा इति वदता वृक्षादावपि लिङ्गयोग उपपादितः । त्रिलिङ्गता च समर्थिता । नियमे तु कारणं वक्ष्यते । तत्र संस्त्यानं संहननं प्रतिलयस्तिरोधानमित्यवस्था स्त्रीत्वम् । प्रसवः प्रवृत्तिराविर्भाव इति पुंस्त्वम् । न स्त्रीपुंसौ नपुंसकमिति [12]स्थितिर्नपुंसक-मर्यालक्षितम् । तथाहि संग्रहकारः पठति—

"संस्त्यानं संहननं [13]तमोनिवृतिरशक्तिरुपरतिः प्रवृत्तिः प्रतिबन्धस्तिरोभावः स्त्रीत्वम्, प्रसवो [14]विष्वग्भावो वृद्धिशक्तिर्वृत्तिलाभोऽ[15]भ्युद्रेकः प्रवृत्तिराविर्भाव इति

6. P °द्भावाञ 7. P °शेषस्त्री°. 8. A तनस्थापि. 9. AE[2] तने. 10. A °विशेषविशेषणस्य
11. A सर्वत्र विरोधः 12. E[2] om. नपुंसकमर्यालक्षितं–अविवक्षातः साम्यं. 13. A लय-शक्तिवृत्तिरूपाप्र° I तमोनिवृतक्ति. 14. A ऽप्युद्भवशक्तिवृत्तिलाभः प्र°. 15. A om. अभ्युद्रेकः

पुंस्त्वम्, [16]अविवक्षातः साम्यं स्थितिरौत्सुक्यनिवृत्तिर[17]परार्थत्वमङ्गाङ्गिभावनिवृत्तिः कैवल्यमिति नपुंसकत्वम् ”

इति। अवस्थाविशिष्टा वा गुणा एव लिङ्गमित्यत्रैव दर्शने पक्षान्तरम्। ते हि कार्यान्तरवत् स्त्र्याद्यवभासमपि प्रत्ययमुपजनयन्तो भवन्ति लिङ्गव्यपदेश्याः। एकस्यापि
5 वस्तुनः शब्दभेदेनार्थो व्यक्तिर्वस्त्विति लिङ्गभेदस्य दर्शनाद् बहिरसन्नेव शब्दैरुपपादित इव बाह्ये वस्तुनि लिङ्गयोग इति शब्दाभिधेयस्वभावं लिङ्गमिति केचित्। तटस्तटी तटमित्यभिन्नेनापि शब्देनाभिन्नं वस्तु त्रिलिङ्गं प्रत्याय्यत इति शब्दसंस्कारमात्रं लिङ्गमाश्रितं कैश्चित्। एवमपि च बाह्यत्वेनावसायान्नोदात्तादिधर्मवच्छब्दधर्मत्वं लिङ्गस्य, किन्तु स्त्रियां पुंसि नपुंसक इति शब्दान्वाख्याननिमित्तभावदर्शना[18]च्छब्दसंस्कारत्वमस्य।

10 “ तयोस्तु तत्कृतं दृष्टा यथाकाशेन ज्योतिषः। ”

( M. Bhā. II. p. 197 l. 12, 14 )

इति भाष्ये वर्णितम्। तदेते मतभेदाश्रयाः सप्त पक्षाः यथायथमुत्तरत्र विचारयिष्यन्ते ॥ १,२ ॥

सम्प्रति शब्दशक्तिस्वभावानुसारेणापरं विकल्पसप्तकमाह।

15 **उपादानविकल्पाश्च लिङ्गानां सप्त वर्णिताः।**
**विकल्पसन्नियोगाभ्यां ये शब्देषु व्यवस्थिताः॥ ३ ॥**

उपादानं शब्दैर्विशिष्टशक्तिभिरर्थोपाधित्वेन ग्रहणं लिङ्गानाम्। तस्य सप्त भेदाः। लिङ्गाभिव्यञ्जकशब्दशक्तिप्रतिनियमाद्[1]असांकर्यं लिङ्गानां गुणावस्थादिरूपाणां सर्वत्र सम्भवतामपि। तथाहि– विकल्पेन[2] स्त्रीपुंनपुंसकानां शब्दैः प्रत्यायने चत्वारो भेदाः।
20 केचित् पुंनपुंसकविषयाः, शङ्खः पद्मः, शङ्खं पद्मम् इत्यादयः।

पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे[3]।

इति। केचित् स्त्रीनपुंसकनियताः, भागधेयं भागधेयी भेषजं भेषजी अर्चिरित्यादयः। अन्ये स्त्रीपुंससाधारणाः। यथा इषुः अशनिः वत्सः[4] वत्सेत्यादयः। अपरे त्रिलिङ्गाः तटस्तटा तटमित्यादयः। **सन्नियोगो** नियमः, तेन त्रयो विकल्पाः। तद् यथा—वृक्षादयः
25 पुंस्येव नियताः, खट्वादयः स्त्रियामेव, दध्यादयो नपुंसक एवेति सप्त विकल्पाः॥ ३ ॥

16. A om. अविवक्षातः, I °आसाम्यं. 17. I. वृत्तेरपरा° 18. I. °ननात्र· च्छब्दसंस्कारत्वमस्य.

3. 1. A °यताध्यासकार्यं, E² °यमाध्यसा° I °यताद्वय°. 2. A विकल्पे स्त्री°. 3. I °यजः. 4. 1. A तिष्यादयः



इदानीं जातिपक्षोऽत्र विचार्यते। लौकिकस्य लिङ्गलक्षणस्योपेक्षणात् तत्र गोत्वादीनामिव स्त्रीत्वादीनामेकत्र कथं न विरोध इत्याशङ्क्याह—

**तिस्रो जातय एवैताः केषाञ्चित् समवस्थिताः।**
**अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः॥ ४ ॥**

5 स्त्रीत्वाद्यनुरक्तप्रत्ययजननात् सर्वत्राविरुद्धसमवायाः स्त्रीत्वादिजातयो विरुद्धैकार्थसमवायाभिर्गोत्वाश्वत्वादिजातिभिः सहैकस्मिन्नाश्रये वर्तन्ते। प्रत्य[1]याभेदो जातीनां लिङ्गम्। स च गोत्वाश्वत्वादिनिमित्त एकस्मिन्नाश्रये न जायते, स्त्रीत्वादिनिमित्तस्तु गोत्वाद्याश्रयेऽपि जायत इति [2]कथमासां जातीनां गोत्वादिभिरविरुद्धत्वं न स्यात्॥४॥

तथाहि—

10 **हस्तिन्यां वडवायां च स्त्रीतिबुद्धेः समन्वयः।**
**अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम्॥ ५ ॥**

भिन्नजातीयेष्वपि स्त्र्याद्याकारबुद्धेर[1]नुगमात् जात्यन्तरैः स्त्रीत्वादिजातीनामविरुद्ध एकार्थसमवायः। अयमत्र परमार्थः। इह शब्दाल्लिङ्गोपाधेः प्रत्ययस्य भिन्नजातीयेष्वप्यनुगमस्य दर्शनाच्छब्दप्रमाणकानां शब्दार्थोऽर्थ इति सर्वत्र द्रव्यगुणकर्मसामान्यादावपि
15 [2]लिङ्गजातियोगः कल्प्यते। तथा च स एवार्थः केनचिच्छब्देन नियतलिङ्गोऽभिधीयमानस्तल्लिङ्गजातियोगी, शब्दान्तरेण तु लिङ्गजात्यन्तरयोगी प्रत्याय्यत इति न काचित् क्षतिः। तद् यथा भावशब्देन पुंस्त्वोपाधिः सत्तोच्यते, सत्ताशब्देन स्त्रीत्वोपाधिः, [3]सामान्यशब्देन नपुंसकत्वोपाधिः। एवं तटादौ वाच्यम्। गोत्वादयोऽपि भावजातिसा[4]मान्यशब्दैः स्त्री(त्रि?)लिङ्गोपाधयोऽभिधीयन्ते इति शब्दशक्त्यनुसारेणैव सर्वत्र लिङ्गजाति-
20 र्व्यव[5]स्थिता। शब्दा हि द्रव्यायमाणं वस्त्वाचक्षाणास्तद्धर्मलिङ्गोपाधितयैव तत्र तत्र प्रवर्तन्ते। तथा च स्त्रीत्वं स्त्रीता स्त्रीभाव इति लिङ्गेष्वपरो लिङ्गयोग इति वक्ष्यते॥५॥

एतदेवोपपादयितुमाह—

**परतन्त्रस्य यल्लिङ्गमपोद्धारे [1]विवक्षिते।**
**तत्रासौ शब्दसंस्कारः शब्दैरेव व्यपाश्रितः॥ ६ ॥**

25 नामपदेन सत्त्वभूतस्यार्थस्याभिधीयमानत्वात् तस्य वृत्तावुपसर्जनभूतस्यापि प्रक्रियायामपोद्धारवाक्येऽभिधित्सिते [2]यल्लिङ्गमुपादीयते नान्तरीयकं तत्केवलं शब्दस्या-

4. 1. A प्रत्ययभे°. 2. I. P इति ॥ ४ ॥ कथ°.
5. 1. E² °रनुग°. 2. E² लिङ्गयो°, I. लिङ्गजातियोगः। तथा. 3. A साम्यश° 4. A मान्यश° 5. M °वस्था.
6. 1. A विवक्ष्यते. 2. A ins. प्रत्ययेन before यल्लि°.

न्याख्याननिमित्तमिति शब्दैरेवाङ्गीकृतं प्रयोगे तु लौकिके तदविवक्षितमित्यर्थः । तथाहि [3]कुक्कुटयादीनामण्डादिषु पुंवद्वचनं [4]प्रत्याख्यातं

'न वा अस्त्रीपूर्वपदविवक्षितत्वात्'

(Vā. 3. on P. 6. 3. 42, M. Bhā. III, p. 157, l. 18)

इति । कुक्कुटाण्डं [5] मृगक्षीरमिति कुक्कुटादेरण्डादिविशेषणस्य जातिमात्रविवक्षायां स्त्रीत्वस्याविवक्षा[6] । अतिदिष्टेऽपि हि पुंशब्दे पूर्वपदवाच्यं स्त्रीत्वमत्र नावगम्यत इति किमतिदेशेन । यत्र हि गम्यते स्त्रीत्वं तत्र पुंशब्दोऽतिदिश्यतां यथा दर्शनीय-भार्यादौ । अत्र ह्युत्तरपदेन स्त्रीलिङ्गेन सामानाधिकरण्यात् पूर्वपदस्य स्त्र्यर्थता-वगम्यत इति पुंशब्दातिदेशो युक्तः । इह[7] त्वण्डादेः स्त्रीलिङ्गताभावात् पूर्वपदस्य स्त्र्यर्थता नियमेन नावधार्यते । प्रक्रियावाक्ये तु शास्त्रीयेऽपोद्धारे कुक्कुटस्याण्डं मृगस्य क्षीरमित्येव पुंलिङ्गेन प्रदर्शनं सत्त्वभूतस्यार्थस्य लिङ्गनान्तरीयकत्वात् । ततश्चासौ सत्ताभिधायिनः शब्दस्य संस्कारः, अण्डक्षीरादीनां तु पुंसः सम्बन्धमात्रा-दर्थात् प्रयोगे लौकिके स्त्रीत्वावगतिः ॥ ६ ॥

[1]यदुक्तं सर्वत्र जातयः समवस्थिता इति[2] तामिदानीं व्याप्तिमुपपादयति ।

**बुद्ध्या कल्पितरूपेषु लिङ्गेष्वपि च सम्भवः ।**
**स्त्रीत्वादीनां व्यवस्था हि सा लिङ्गैर्व्यपदिश्यते ॥ ७ ॥**

वहिर्वस्तूनां **बुद्ध्या** ज्ञानेन कल्पिताकारेषु समारोपितरूपेषूपाधित्वेन वस्तुविषये[3]ऽभिधीयमानेषु स्त्रीत्वादिष्वपि लिङ्गेष्वपरलिङ्गयोगो यथास्वं शब्दप्रतिपाद्ये-ष्विति सर्वशब्दविषया[4] लिङ्गानां व्याप्तिः । **सा व्यवस्था** [5]स नियमः स्त्रीत्वादीनां **लिङ्गैः** लिङ्गोपाधिभिः शब्दैः प्रतिपाद्यते । तथा हि भावप्रत्ययान्तैर्लिङ्गाभिधायिभिः शब्दैरेषां[6] स्त्रीत्वादीनां लिङ्गनियमेन प्रत्यायनं स्त्रीत्वं स्त्रीता स्त्रीमात्र इति । स्त्रीत्व-विशिष्टस्य द्रव्यस्य स्त्रीशब्देनाभिहितस्य भावप्रत्ययेन प्रवृत्तिनिमित्तं नपुंसकत्वादियोगि स्वभावात् प्रकाश्यते । भावशब्देन च पुंस्त्वविशिष्टमिति शब्दजेन प्रत्ययेन लिङ्गेष्वपर-लिङ्गयोगो लक्ष्यते । तदुक्तं[7] प्राक् —

'लिङ्गेषु लिङ्गमेवं व्यवस्थितम्'

इति ॥ ७ ॥

3. Cf. Vā. 2 on P. 6. 3. 42. 4. AE[2] प्रत्याख्याने. 5. P. inserts मृगाण्डं कुक्कु-टक्षीरं. after कुक्कुटाण्डं. 6. A °वक्षितत्वाद् I. P °वक्षितता. 7. A कुक्कुटाण्डादौ.
7. 1. AE[2] तदुक्तं. 2. A इति ॥ ६ ॥ 3. A. °येष्वभि° 4. A. °याणां, E[2] यौ I °याप्तिं'. 5. AE[2] om. स. 6. A अर्थानास्यादीनां. 7. A तदुक्तं प्राक्लिङ्गे.



'असत्तु मृगतृष्णावत्' (M. Bhā. II. p. 196, l. 21)

इत्यचेतनानां लिङ्गमवस्थापयितुं भाष्येऽभिहितं व्याचष्टे ।

**यथा सलिलनिर्भासा मृगतृष्णासु जायते ।**
**जलोपलब्ध्यनुगुणाद् बीजाद् बुद्धिर्जलेऽसति ॥ ८ ॥**
**तथैवाव्यपदेश्येभ्यो [1]हेतुभ्यस्तारकादिषु ।**
**मुख्येभ्य इव लिङ्गेभ्यो भेदा लोके व्यवस्थिताः ॥ ९ ॥**

मृगतृष्णा मरुमरीचिकाः प्रसिद्धाः । ता हि तरङ्गायमाणा मृगाणां तत्तुल्यानां मुग्धानां च पिपासामुपजनयन्ति । दिनकरकरनिकराः प्रसर्पन्तो[2] नभोदेशमूर्ध्वाधरभावेन समाक्रामन्तस्तरङ्गाकारप्रत्ययमुपदधति[3] पिपासूनाम् । अत एव तृष्णाकृताद् भावना-वेशादुदकत्वेन [4]प्रतिभासमानास्तृष्णाशब्देनोच्यन्ते । यथा ह्युदकवासनालक्षणाद् **बीजाद् असति** अपि तत्र **जले** सन्तापसन्धुक्षितानां पिपासूनां जलाकारावग्राहिणी **बुद्धिः** उपजायते, एवमेव तारका पुष्यो नक्षत्रमित्येवमादिष्वचेतनेषु वहिरविद्यमानेभ्य एव लिङ्गेभ्योऽत एवाविद्यमानत्वादेव **अव्यपदेश्येभ्यो** लोके तारकादिशब्दै**र्भेदाः** प्रतिनियतलिङ्गानुगताः प्रकाश्यन्ते यथा वहिर्विद्यमानलिङ्गनिमित्ताः । अन्यत्राभ्य[5]-स्तोदकभावनावदिहाप्यन्यत्राभ्यस्तत्वात्[6] स्त्रीत्वाद्यसदध्यारोपितं प्रतीयत इति दृष्टान्त-साम्यम् । व्यञ्जकाभावश्चात्र बाधकं प्रमाणम् । अयमर्थः । शब्दानां शक्तिनियमादसदपि बाह्ये रूपमभिधातुं न व्याघातः, सदृशश्च सदसतोस्ततः प्रत्ययः प्ररूढः । शब्दो हि सम्यङ्मिथ्याज्ञानावेदितमर्थमविशेषेणाभिधत्ते । मरुमरीचिषूदकं सादृश्यादध्यारोप्यते, न [7]त्वेवं खट्वावृक्षयोः [8]स्त्रीपुंसाभिव्यञ्जकसदृशं किञ्चिद् दृश्यते इत्याशङ्क्य विषयसादृश्य-मनपेक्ष्याप्यनादिमिथ्याभ्यासवासनावशाद् भ्रान्तयो भवन्तीति निदर्शनान्तरमुक्तं

'गन्धर्वनगरं यथा' (M. Bhā. II, p. 196, l. 24.)

इति ॥ ८, ९ ॥

अतोऽनन्तरमिदमुक्तं भाष्ये

"आदित्यगतिवत् सन्न" (M. Bhā. II. p. 197. l. 1)

'वस्त्रान्तर्हितवच्च तत' (M. Bhā. II. p. 197. l. 4.)

इति । एतद् व्याचष्टे ।

8. 9. 1. M om. हेतुभ्यस्तारकादिषु । मुख्येभ्य इव लिङ्गेभ्यो. 2. A °न्तो देश°. 3. AE[2] °मुपजनयन्ति. 4. P प्रतिभासात्. 5. A °श्राभ्यस्तो° 6. A °श्राभ्यस्तत्वात्. 7. A न चाचेतनत्वेन ख°. 8. A °सादिभ्य.

**व्यक्तेषु व्यक्तरूपाणां स्तनादीनां तु दर्शनात् ।**
**अव्यक्तव्यञ्जनाव्यक्तेर्जातिर्न परिकल्प्यते ॥ १० ॥**

**व्यक्तेषु** चेतनगतेषु लिङ्गेषु स्तनकेशादीनां [1]तदुपव्यञ्जनानां स्पष्टरूपाणा-
मुपलम्भादचेतनेषु खट्वादिष्वनभिव्यक्तव्यञ्जना लिङ्गजातिः **न परिकल्प्यते** न व्यव-
5 स्थाप्यते । सर्वथैव **अव्यक्तेः** अप्रतीतेः । यत् [2]किल प्रमाणेन [3]प्रतीयते तदवस्थापन-
मर्हति । यथादित्यगतिर्देशान्तरप्राप्त्यानुमीयते । वस्त्रान्तर्हितं च वस्तु वस्त्रापाये
व्यवधाननिवृत्तेः साक्षाद् गृह्यते । नैवं लिङ्गजातिर्वृक्षादिषु कदाचना[4]प्युपलभ्यत
इत्यसती शब्देन [5]परं स्वशक्तिवशात् प्रत्याय्यते । तथा च भाष्यम् —

" येऽप्येते रथकारा वासीवृक्षादनहस्ताः " ....
10 (M. Bhā. II, p. 197, l. 7)

इत्यादि । प्रमाणसिद्धस्य ह्यनुपलब्धिहेतवः

' अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ' (Sāṅ. Kā. 7)

इत्यादिनोक्ताः[6] । न चेह[7] लिङ्गं प्रमाणसिद्धं किञ्चनापि[8] वस्तु [9]सत्यभूतं वस्तुधर्मः ॥ १० ॥

एवमपि सत्त्वाभ्युपगमे प्रत्यक्षेण विरुध्यत इत्युक्तं भाष्ये ।

15 **अस्तित्वं च प्रतिज्ञाय सदादर्शनमिच्छतः ।**
**अत्यन्तादर्शने न स्यादस[1]त्त्वं प्रति निश्चयः ॥ ११ ॥**

खट्वावृक्षादौ लिङ्गस्य सत्त्वमभ्युपगम्य व्यञ्जकानामनुपलब्धेर्नित्यमनुपलब्धि-
मभ्युपगच्छतो वादिनो दृश्यानुपलब्धिरप्रमाणभूताभावं प्रति स्यादित्यभावे शशविषा-
णादौ [2]सत्त्वसन्देहप्रसङ्गः । [3]तत्रापि **अत्यन्तादर्शने** सत्यसत्त्वनिश्चयो न स्यात् ।
20 यतस्तत्राप्येतच्छक्यते वक्तुम्— ' अस्ति तत्, इन्द्रियदौर्बल्यात्तु न दृश्यते ' इति ।
तदयं प्रत्यक्षविरोधो यद् दृश्यस्वभावस्य प्रत्यक्षेण कदाचिदप्यगृह्यमाणस्य सत्ता-
भ्युपगमः ॥ ११ ॥

लिङ्गकार्यस्य खट्वावृक्षादौ टाबादेर्दर्शनाल्लिङ्गानुमानमित्युक्तम् —

' तयोस्तु तत्कृतं दृष्ट्वा यथाकाशेन ज्योतिषः ' (M. Bhā II. p. 197 l. 12)

25 इति । आकाशः प्रकाशः, तेन यथा तत्कारणस्य जोतिषोऽनुमानं तथा लिङ्गकार्येण
लिङ्गस्येति । एतद् दूषितम्—

---

**10.** 1. A सदुप°. 2. A किन्तु, E[2] There is a gap here. 3. A प्रतीतो.
4. AE[2] °पलक्षिष्यते. 5. A पुंशक्तिव°, E[2] There is gap here. 6. A इत्यादयः.
7. A °चेदं. 8. A °नास्ति. 9. A सत्यभूतो धर्मः

**11.** 1. A M om. असत्त्वं. 2. A दौ संदेह°, E[2] There is a gap here.
3. A तत्रादर्शने सत्यपि नि°, E[2] सत्यप्यनिश्च°.



' अन्योन्यसंश्रयं त्वेतद् ' (M. Bhā II, p. 197, l. 16.)

इति । तद् व्याचष्टे

**न चालमनुमानाय शब्दोऽदर्शनपूर्वकः ।**
**सिद्धे हि दर्शने किं स्यादनुमानप्रयोजनम् ॥ १२ ॥**

इह सिद्धस्यार्थस्य स्त्रियां पुंसि नपुंसक इत्यनुवादः शब्दसंस्कारार्थः । तथा 5
च यदि [1]वृक्षादौ लिङ्गस्यास्ति प्रमाणात्[2] सिद्धिस्तदा शब्दात् तदनुमानं व्यर्थम् ।
अथ नास्ति तदा प्रत्ययादे[3]: कार्यस्य विधीयमानस्य निमित्तत्वेनोपादानमप्रमाणकमनुप-
पन्नमित्यन्यतोऽनवगतस्य शब्दादेव प्रतीत्यभ्युपगमेऽन्योन्यसंश्रयमेतद् इतरेतराश्रयदूषण-
दुष्टमित्यर्थः । लिङ्गासिद्धौ निमित्तत्वेनोपादानायोगात् तन्निबन्धनस्य शब्दस्याभावात्
तेन तत्सिद्धेरयोगात् । 10

तदेवं लौकिकं लिङ्गमचेतनेष्वव्याप्तमुपेक्ष्य

' संस्त्यानप्रसवौ लिङ्गमास्थेयौ ' (M. Bhā. II, p. 197. l. 27.)

इति पारिभाषिकं भाष्ये लिङ्गमुक्तम् । तथा चाह —

" संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् ' (M. Bhā. II
p. 198, l. 1.) 15

इति । संस्त्यानं संहननं [4]प्रतिलयस्तिरोभावोऽपचयो रूपादीनां सत्त्वादिमयानां गुणानां
स्त्री । [5]लोके तु स्त्यायति संहननमापद्यतेऽस्यां गर्भ इत्यधिकरणं स्त्री । सूतेर्धातोर्भावे
प्रचये उपचये डुमसुन्प्रत्यये परतः सकारस्य पकारादेशे कृते पुमानिति । यदाह ' सप् '
इति । सकारस्य पकारादेश इत्यर्थः । अनेन च प्रकारेण पातेरेव[6] सूत्यर्थे वृत्तिं सूच-
यति । अत एव प्रत्ययं नोपन्यस्यति । पातेर्डुमसुन् इत्येवं तस्य प्रसिद्धेः । अर्थानां च 20
प्रसिद्धानामेव शास्त्रेऽनुवादाद् रूढ्यर्थबाधा विज्ञायते । तेन प्रसवः प्रवृत्तिराविर्भावो
गुणानां शास्त्रे पुमान् । लोके तु पाति सन्ततिमिति पुमान् कर्ता । यद्यपि चाविर्भा-
वतिरोभावावपि लौकिकावेव, लोकप्रसिद्धस्यैव शास्त्रेऽनुवादोपपत्तेः, तथापि प्रसिद्ध-
तरस्तनादिसंबन्धो लौकिकस्त्यज्यते, अव्याप्तेः ।

" सर्वाश्च पुनर्मूर्तय एवमात्मिका शब्दस्पर्शरूपरसगन्धवत्यः " 25
(M. Bhā. II, p. 198, l. 5)

इति संस्त्यानप्रसवयोर्लिङ्गयोर्व्याप्तिरुपपादिता । तथा चाचेतनेष्वपि सिद्धिः ।
मूर्तिशब्देन हि वस्तुमात्रं लक्षितम् । आकाशादीनामपि चास्मिन् दर्शने सत्त्वादिगुण-

---

**12.** 1. AE[2] प्रत्यक्षदौ. 2. A प्रमाणसिद्धिः, E[2] प्रामाणासिद्धिः. 3. AE[2] °यादेकार्यस्य
4. A प्रसव उपचयो रू°, E[2] प्रतिचयास्ति से...चयो रू°. 5. A om. लोके तु. 6. A विषये.

त्रयमयत्वादाविर्भावतिरोभावयोरपि प्रतिपत्तिः। चैतन्यम् – आत्मा – चिद् इति नित्यभूतेऽप्यात्मनि देहाश्रयत्वेन गुणमध्यव्यवस्थितत्वात् तद्धर्माविर्भावतिरोभावोपपत्तिः। तदेवं

"न शक्यं वैयाकरणैर्लौकिकं लिङ्गमाश्रयि[7]तुम्, [8]अवश्यं कश्चित् स्वकृतान्त आस्थेयः" ( M. Bhā. II p. 197, l. 25 )

इति संस्त्यानप्रसवौ लिङ्गं स्त्रीपुंसलक्षणमुक्तम्। उभयधर्मसाम[9]न्यरूपा तु स्थितिर्नपुंसकमर्थादुक्तं भवति ॥ १२ ॥

[1]तथाहि भाष्यतात्पर्यं व्याचष्टे।

**आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः।**
**धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥ १३ ॥**

"वर्धते यावदनेन वर्धितव्यम्, अपायेन वा युज्यते"
( M. Bhā. II. p. 198. l. 8 )

इति भावानां सततपरिणामित्वाद् धर्मत्रयस्यानपायित्वम् ॥ १३ ॥

तथा हि

**सर्वमूर्त्यात्मभूतानां शब्दादीनां गुणे गुणे।**
**त्रयः [1]सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥ १४ ॥**

"सर्वाश्च पुनर्मूर्तय एवमात्मिकाः शब्दस्पर्शरूपरसगन्धवत्यो यत्राल्पीयांसो [2]गुणास्तत्रावरतस्त्रयः रसगन्धौ न सर्वत्र" ( M. Bhā. II. p. 198. l. 5 )

इति भाष्यकारेणैव सर्वभावात्मकत्वं **शब्दादीनाम्** उक्तम्। शब्दादिगुणसमुदायात्मका हि मूर्ताः पदार्थाः। एकैकगुणोत्कर्षेणाकाशादिषु पृथिव्यन्तेषु शब्दादयः पञ्चगुणाः समुदायभावमापद्यन्त इति [3]शब्दादिगुणात्मिका मूर्तयः। व्यतिरेकेऽपि द्रव्यस्य समवायवशात् तदात्मकत्वमिव। तत्र शब्दः स्पर्शो रूपमिति गुणत्रयमव्यभिचारि। रसगन्धौ तु तेजस्यभावाद् व्यभिचारिणौ। ते च शब्दादयः सत्त्वरजस्तमोलक्षणगुणमया इति **गुणे गुणे** शब्दादौ सत्त्वादिगुणत्रयधर्मा व्यवस्थिताः। [4]सर्वस्य सत्त्वादिसंनिवेशमात्ररूपत्वाद् वीप्सया गुणधर्माविनाभाव उक्तः। तत्र प्रकाशः प्रसव **आविर्भावः** सत्त्वधर्मः, प्रवृत्तिः क्रिया रजोधर्मः, [5]वरणं **तिरोभावः स्थितिः** तमोधर्मः एत एव धर्मा लिङ्गम्। [6]तथा हि—आविर्भावः प्रकाशनियमरूपसत्त्वतमोधर्मानुगतः प्रवृत्तेः

7. M Bhā has आस्थातुम्. 8. E² om अवश्यं-भवति. 9. A° मेसाम्यरू°.

**13.** 1. B² om. तथाहि–लिङ्गत्वेनानुदर्शितः.

**14.** 1. A शब्दादि. 2. M Bhā has शब्दः स्पर्शो रूपमिति before रस. 3. A °दिगुणा मू° 4. E² There is a gap here. 5. A आवरणं°. 6 A तथापि.



क्रियाया रजोधर्मलक्षणाया विशेषः पुंस्त्वम्। एवं तिरोभावः स्त्रीत्वम्। सामान्यरूपा तु प्रवृत्तिः तमोबहुला स्थितिर्नपुंसक[7]म्। इति लिङ्गत्रयं सार्वत्रिकम् ॥ १४ ॥

भवतु रूपादिसमुदायात्मनो वस्तुनो [1]धर्मत्रययोगः। रूपं रसः शब्द इत्यादि [2]तु कथम्। न हि रूपादीनां केवलानां रूपाद्यन्तराभावात् कस्यचिदाविर्भावादयः सन्ति येन लिङ्गयोगः स्यादित्याशङ्क्याह।

**रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणं।**
**काचित् प्रलीयते काचित् कथञ्चिदभिवर्धते ॥ १५ ॥**

[3]रूपमवस्थाविशेषासादनक्रमेण परिणमते। तस्यापि सत्त्वादिगुणात्मकत्वात्। यथोक्तं

[4]शब्दादीनां गुणे गुणे।
त्रयः सत्त्वादिधर्मा.... ( Verse 14. )

इति, तथा च [5]क्षणे क्षणे व्यतिरेकिणामात्ममात्राणामवस्थाविशेषाणां नवनवानामासादनात् कदाचिदवस्थाविर्भवति। **काचित्** केनचित् प्रकारेण बाह्यनिमित्तोपधानवशेन **प्रलीयते** अपचीयत इत्याविर्भावतिरोभावावनुयायिनौ[6]। [7]पुरुषार्थं हि परिणामिनां गुणानां प्रतिकलमवस्थाविशेषो भावतत्त्वदृग्भवसेयः सौक्ष्म्यात् स्थूलदृग्भिर्नावधार्यते। यथोक्तं

कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे।
विद्यते सर्वभावेषु सौक्ष्म्यात् [8]तु न विभाव्यते ॥

इति। प्रतिकलमन्तरा परिणामाभावे [9]झटिति स्थूलविशेषासादनानुपपत्तेरन्त्यविशेषदर्शनादनुमीयत एव सूक्ष्मपरिणामः। तथाहि—फलादीनां पूर्वपूर्वश्यामादिरूपापगमेऽभिनवरक्तादिरूपोत्पत्तौ [10]परिपाण्डुरूपावसानसमयप्रभवपरिपाकाविर्भावः। एवं रसादीनामपि प्रतिकलमवस्थाविशेषः परिणामपरम्परासादनेन स्वादिष्ठादिपरिणामावसानः" ॥ १५ ॥

अत्रैवार्थे भाष्यकारीयं संवादमाह।

**कथितोदक[1]वच्चैषामनवस्थितवृत्तिता।**
**अजस्रं सर्वभावानां भाष्य एवोपवर्णिता ॥ १६ ॥**

"[2]नेह कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्धते यावदनेन वर्धित-

7. A °सकत्वमिति ॥ १४ ॥ लिङ्गत्रयं°.

**15.** 1. A धर्मिणो यद्गन्धः स्पर्शो रूपं°, E² has a gap here. 2. E² has a gap here. 3. A रूपस्यावस्थाविशेषादात्ममात्राः साधनक्रमेण प° 4. A quotes this verse wrongly. 5. A क्षणव्यक्ति°. 6. A °यिनः. 7. °षार्थाहि, E² अपुरु°. 8. A. तद्न. 9. A सूर्यादिगतिस्थलवि°, E² °वे गतिस्थत°. 10. °त्तौ पाण्डु° 11. A °सायः

**16.** 1. A °ककल्पैप्पा°. 2. A परिणाम विनेदन कश्चित्.

व्यमपायेन वा युज्यते " ( M. Bhā. II. p. 198, l. 8 ).

इति भाष्ये पच्यमानजलत्वसदृक्षा चञ्चलता मूर्तीनामाख्याता । तथा चाविर्भावतिरोभावयोर्व्यापकत्वात् सर्वत्र स्त्रीपुंसलिङ्गयोगः ।। १६ ॥

यद्येवं स्थितेः कोऽवसरो यन्नपुंसकं स्यादित्यत आह ।

**प्रवृत्तेरेकरूपत्वं साम्यं वा स्थितिरुच्यते ।**
**आविर्भावतिरोभावप्रवृत्त्या नावतिष्ठते ।। १७ ॥**

उपचयापचयलक्षणे द्वे अवस्थे पदार्थानाम् । तत्रोपचयप्रवाहे या वृद्ध्याख्या प्रवृत्तिस्तस्या अभेदेनाध्यवसायात् स्थितिर्व्यवस्थाप्यते । एवमपचयप्रवाहे यापायलक्षणा प्रवृत्तिस्तस्या [1]अभेदमध्यवसाय **स्थितिः** कल्प्यते । प्रतिकलं प्रवाहयोर्भेदे वा प्रवृत्तिरूप साम्यात् स्थितिः । वृद्धिपरिणामेऽपायपरिणामे च प्रवृत्तिरूपं तुल्यमिति तदेव साम्यं स्थितिः । यद्वा आविर्भावतिरोभावयोर्या निरन्तरा प्रवृत्तिस्तया हेतुभूतया स्थितिरवकल्पते । तथाहि—कस्याश्चित् कलायास्तिरोधानानन्तरमेव यदा कलान्तराविर्भावः तदा तिरोधानस्यानिष्ठितत्वात् स्थितिरेवावसीयते । तदेवं सततपरिणामिनां गुणानामध्यवसायवशेन स्वभावैक्यं साम्यं तिरोभावापर्यवसानं वेति प्रकारत्रयेण स्थितिरिह निरूपिता ॥ १७ ॥

यद्वा किमध्यवसायापेक्षया, वस्तु[1]रूपैव स्थितिरित्याह ।

**गुणा[2] इत्येव बुद्धेर्वा निमित्तत्वं स्थितिर्मता ।**
**स्थितेश्च सर्वलिङ्गानां सर्वनामत्वमुच्यते ॥ १८ ॥**

इह सत्त्वादयो गुणा वैश्वरूप्यमापद्यमाना स्वजात्यनतिक्रमेणैव वर्तन्ते । तथा हि[3] प्रतिकलं प्रकाशप्रवृत्तिनियमानां सत्त्वादिधर्माणामनुवृत्तिः । इत्थं च गुणाः सामान्यानुगमादन्वयिप्रत्ययस्य सर्वास्ववस्थास्वेते गुणा इत्यस्य हेतवो भवन्तः स्थितिलिङ्गतामासादयन्ति । सामान्यं हि गुणरूपं स्थितिः । तत्र च सामान्ये सर्वविशेषान्तर्भावादाविर्भावतिरोभावयोरपि तदनुगमात् स्त्रीत्वादिलिङ्गभेदस्य नपुंसकलिङ्गं स्थितिशब्दवाच्यं सर्वनामेव सर्वनाम व्यवह्रियते । [4]यथा हि तदादि सर्वनाम वस्तुमात्रप्रत्यवमर्शजनकमविहितप्रवृत्ति सर्वत्र तथा नपुंसकमपि विशेषाविवक्षायामभेदेन सर्वलिङ्गपरामर्शकं [5]किं जातमित्यादावव्यक्ते गुणसन्देहे प्रयोगार्हमिति ॥ १९ ॥

17. 1. °देनाध्यवसायात.

18. 1. A वस्तुरूपेऽत्र, 2. E[2] has a gap here.. 3. A तथापि. 4. A तथा. 5. A om. किं.



तदेवं गुणावस्था लिङ्गमिति निर्णीते सर्वत्र तस्याः सम्भवात्[1]

' कुतो व्यवस्था ' ( M. Bhā. II, p. 198, l. 9. )

इति भाष्ये चोदयित्वा

विवक्षातः ( M. Bhā. II, p. 198, l. 10. )

व्यवस्थेत्यु[2]क्तम् । तद् व्याख्यातुमाह ।

**स्थितेषु [3]सर्वलिङ्गेषु विवक्षानियमाश्रयः ।**
**कस्यचिच्छब्दसंस्कारे व्यापारः क्वचिदिष्यते ॥ १९ ॥**

सत्त्वादिगुणत्रयमयेषु [4]सर्वभावेष्वाविर्भावादिरूपसम्भवेऽपि योग्यशब्दनिबन्धनविवक्षानियमाश्रयेण **कस्यचिद्** एव लिङ्गभेदस्य कस्मिंश्चिच्छब्दे संस्कारार्थं **व्यापारः** स्त्रियां पुंसि नपुंसके चेत्येवमुपात्तः । शब्दशक्तिनियमाद्धि नियतलिङ्गोपाधे[5]रर्थस्याभिधानम् । प्रयुक्तानां चेदमन्वाख्यानमिति व्यवस्था सिद्धा ॥ १९ ॥

दृष्टान्तेनैतद् साधयति ।

**सन्निधाने निमित्तानां किञ्चिदेव प्रवर्तकम् ।**
**यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ २० ॥**

वस्तुन्यनेकनिमित्तसन्निधानेऽपि शब्दानां स्वशक्तिवैचित्र्यात् **किंचिदेव** तत्र **प्रवर्तकम् ।** तद्यथा तक्षणच्छेदनाद्यनेकक्रियासन्निधावपि[1] तक्षणमाश्रित्य तक्षायमित्यभिधानमर्थस्य । शरावादिकरणेऽपि कुम्भकरणनिमित्तः कुम्भकारशब्दः । एवं स्त्रीत्वादिविशिष्टेष्वप्यर्थेषु शब्दानां [2]लिङ्गनियमेन प्रवृत्तिरभिधानवैचित्र्यात् । तथाहि

' तस्योक्तौ लोकतो नाम ' ( M. Bhā. II, p. 198, l. 11. )

इति लोकप्रसिद्धिर्नियतलिङ्गाभिद्योतनोपायः शब्दानामुक्तः ॥ २० ॥

स च न यः कश्चिल्लोकोऽत्र ग्राह्य इत्याह ।

**भावतत्त्वदृशः शिष्टाः शब्दार्थेषु व्यवस्थितं[1] ।**
**यद् यद् धर्मेऽङ्गतामेति लिङ्गं तत्तत् प्रचक्षते ॥ २१ ॥**

इह लोकशब्देन शिष्टा विवक्षिताः । तेषां च वस्तुपरमार्थसाक्षात्कारिता लक्षणम् । ते हि निरावरणख्यातयोऽभिधेयेषु समवेतं स्त्रीत्वादि लिङ्गमभ्युदये यद् यद् यस्य शब्दस्य साधनतामेति तत् तदेव तस्याचक्षते । अतश्च यल्लिङ्गस्य शब्दस्य धर्म-

19. 1. AP तस्यास्°. 2. E[2] om. इत्युक्तम्–० श्रयः । कस्य. 3. A त्रिषु लि°. 4. AE[2] सर्वेष्ववि° 5. A. पायैरर्थे°.

20. A °धानेऽपि. 2. A °यमे प्र° E[2] °यमे च प्र°.

21. 1. P. °ताः.

साधनत्वं शिष्टैरुपलब्धं तस्य तथाभूतस्यैव प्रसिद्धस्य सतः साधुत्वमभ्युपगन्तव्यम् । तथा च प्रायोक्त्री[2] विवक्षात्र न लौकिकी स्वेच्छारूपेत्युक्तं भवति । अत एव शिष्टसमाचारादेव सिद्धौ शब्दानां लिङ्गविशेषाभिद्योतनशक्तिप्रतिपादकं

‘ स नपुंसकम् ’ ( P. 2. 4. 17 )

5 इत्येवमादि शास्त्रं प्रत्याख्यातं

‘ लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ’

इति । शिष्टप्रसिद्धेश्चावि[3]गीतप्रमाणभावादाः शब्देषु लिङ्गव्यवस्था न सङ्कीर्यते, यथायथं विषयभेदेन व्यवस्थानात् ॥ २१ ॥

एतदेव निदर्शनोपक्रमं साधयति ।

10 **स्वरभेदाद् यथा शब्दाः साधवो विषयान्तरे ।**
**लिङ्गभेदात् तथा सिद्धात् साधुत्वमनुगम्यते ॥ २२ ॥**

सूक्ष्मरूपस्योदात्तादेः स्वरस्य विशेषाद् यथा जातिरूपाभेदेऽपि **शब्दा** [1]विषय-विशेषाश्रयणेन प्रतिनियतसाधिमावलम्बिनः । तथा हि

‘ अक्षस्यादेवनस्य ’ ( Phitsūtra 35 )

15 इति देवनाक्षव्यतिरेकिणोऽक्षशब्दस्याद्युदात्तत्वं देवनाक्षस्यान्तोदात्तत्वमित्याद्युदात्तः शकटाक्षादावेव साधुर्न देवनाक्षे, अन्तोदात्तश्च तत्रैव न शकटाक्षादाविति विषयान्तर-गामितया प्रतिनियतं साधुत्वं शब्दशक्तिनियमाच्छिष्टपरिदृष्टाद्, एवं शिष्टप्रयोगादेव **सिद्धात्** निश्चितलिङ्गनानात्वात् **साधुत्वम्** अनपभ्रंशत्वं विषयविभागेन शब्दानाम-वस्थितम् **अनुगम्यते** व्यवहारे । तथा हि समप्रविभागेऽर्धशब्दो नपुंसकलिङ्गः

20 पिप्पल्या अर्धमर्धपिप्पलीति । एकदेशमात्रे तु पुल्लिंगः । सारशब्दो न्यायादनपेते नपुंसकलिंगः, नैतत् सारममिति । उत्कर्षे पुंल्लिंगः, चन्दनसारः खदिरसारः ।

“ पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे । ”

इत्याद्युदाहार्यम् ॥ २२ ॥

यद्येवं स्वरसंस्कारनियमो यथा शिष्टप्रसिद्धः शास्त्रेऽनुमीयते तथा लिङ्गनियमोऽपि

25 कस्मान्नानुविधीयते येन प्रत्याख्यात इत्यत आह ।

**प्रयोगो विप्रयोगश्च लोके यत्रोपलभ्यते ।**
**शास्त्रमारभ्यते तत्र न [1]प्रयोगाविपर्यये ॥ २३ ॥**

2. AE² प्रयैक्तृवि°  3 A °श्चापि प्रमाणभावतः, E² श्चाविनीतप्र°. P° श्चावगतप्र°.
22. 1. P भेदवि°
23. 1. AE² °योगोविप°



अक्षीणि मे दर्शनीयानि, पादा मे सुकुमारतरा इति विपरीतयापि प्रयोगस्य लोके दर्शनाद्

‘ बहुषु बहुवचनम् ’ ( P. 1. 4. 21 )

इत्यादि शास्त्रमारभ्यते विप्रयोगनिवृत्त्यर्थम् । यत्र तु विपरीतः प्रयोगो न दृश्यते किं[2] तत्र शास्त्रेण, नियमार्थत्वाच्छास्त्रस्यानियमे[3] नियमप्रवृत्तेर्व्यवच्छेद्याभावे तदप्रवर्तनात् । 5 तथा[4] च

‘ ते प्राग्धातोः ’ ( P. 1. 4. 80 )

‘ उपसर्जनं पूर्वम् ’ ( P. 2. 2. 30 )

इत्येतद्

‘ [5]न वानिष्टादर्शनात् ’ ( Vā. 2, on P. 2. 2. 30 ) 10

इति प्रत्याख्यातम् । एवं

‘ [6]लिङ्गमशिष्यम् ’ ( M. Bhā. II, p. 198, l. 16 )

इत्यपि । तदेवं शब्दशक्त्यनुसारेण शिष्टप्रयोगान्नियतलिङ्गाः सिद्धा इति शब्दधर्म-स्तात्पर्यदृशा लिङ्गमवतिष्ठते, वस्तुधर्मस्य नियतस्य शब्दैरावेदनात् । तथा च वार्तिकम्—

“ एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्, अवयवान्यत्वाच्च । ” 15
( Vā. 6. 7 on P. 4. 1. 92 )

इति ॥ २३ ॥

तदेतद् गुणावस्था लिङ्गमित्यस्मिन् मते कथमुपपद्यते इति व्याचष्टे ।

**उपाधिभेदादर्थेषु गुणधर्मस्य कस्यचित् ।**
**निमित्तभावः साधुत्वे विवक्षा च व्यवस्थिता ॥ २४ ॥** 20

गुणानां सत्त्वादिमयानां शब्दादीनां धर्मो लिङ्गम् । सत्त्वादयो हि प्रधानशब्द-वाच्याः सूक्ष्मतमा गुणा व्यवहारं न साक्षादवतरन्तीति तत्परिणामरूपाणां रूपादी-नामाविर्भावाद्यवस्थारूपं[1] लिङ्गमाख्यातं भाष्ये । तस्य लिङ्गस्य वस्तुष्ववस्थित[2]स्यावच्छे-दकत्वेन कस्यचिदेवान्वाख्यानहेतुत्वं व्यवस्थितम् । प्रतिनियतस्य शब्दस्य तत्र नियता **विवक्षा**[3] । तथा हि यत्र शब्दान्यत्वं तत्र लिंगनियमः । तद् यथा पुष्यस्तारका 25 नक्षत्रमिति । असति तु शब्दान्यत्वे तस्यैवावयवान्यत्वाद् अर्थेषु लिङ्गभेदाः शब्दैः

2. AE² °ते इति अत्र शा°.  3. A °मेनाप्रवृ°.  4. E² has a gap up to तदेवं.
5. A अत्रानिष्ट°.  6. A. लिङ्गशास्त्रम्.

24. 1. E² has a gap from °रूपंलिङ्ग°–तदयमुपाधेर.  2. A °तत्वात्तस्याव.
3. A om. विवक्षा–प्रकाश्यन्ते । तद.

प्रकाश्यन्ते । तदयमुपाधेरवच्छेदकस्य वस्तुगतस्य वक्ष्यमाणस्य महत्त्वादेर्भेदादन्यथात्वात् त्रिष्वपि लिङ्गेषु वस्तुगतेषु गुणावस्थारूपेषु कस्यचित् प्रतिनियतस्य समाश्रयणमिति वाक्यकारेणाप्युक्तम् ॥ २४ ॥

अत्रैव निदर्शनमाह ।

**हिमारण्ये महत्त्वेन युक्ते स्त्रीत्वमवस्थितम् ।**
**ह्रस्वोपाधिविशिष्टाया कुट्याः प्रसवयोगिता ॥ २५ ॥**

महत्त्वलक्षणेनोपाधिना संबद्धयोर्हिमारण्ययोः स्त्री¹त्वं संस्त्यानं समवेतम् । महद्धिमं हिमानी, महदरण्यमरण्यानीति । तथा ह्रस्वत्वलक्षणेनोपाधिनावच्छिन्नायाः कुट्याः प्रसवेन पुंस्त्वेन संबन्धः । कुटी चोपलक्षणमेकयोगनिर्दिष्टयोः शमीशुण्डयोरपि[2] । ह्रस्वा कुटी कुटीरः, शमी शमीरः, शुण्डा शुण्डारः । स्वार्थिकश्चायं प्रत्यय इति सर्व एव शब्दोऽवयवान्यत्वाद् भिन्नलिङ्गः । एवं दुष्टो यवो यवानीत्यादिरुदाहार्यः ॥ २५ ॥

ननु चोपाधिभेदमात्रात् कथं स एव शब्दो लिङ्गान्तरयोगी स्यादित्याशङ्क्याह ।

**शब्दान्तराणां भिन्नेऽर्थे उपायाः प्रतिपत्तये ।**
**एकतामिव निश्चित्य लघ्वर्थमुपदर्शिताः ॥ २६ ॥**

इह लघुनोपायेन शब्दानामनुशासनम् । तत्र च

" [1]यावदयं सामान्येन शक्नोत्युपदेष्टुं तत्तावदयमुपदिशति "

( M. Bhā. I. p. 113, l. 10 )

इत्युक्तत्वाद् हिमादिशब्दसामान्यमाश्रित्यार्थान्तरविषयशब्दान्तरानुशासनं क्रियते हिमानी कुटीर इत्यादि । एवं हि लाघवं सम्पद्यते । अन्यथा प्रतिविशेषं विशिष्टेऽनुशासने महद् गौरवं स्यात् । एवमपि चानुशासनेनाभेदोऽर्थभेदादन्यत्वमेव शब्दानां भाविकमिति प्रतिनियतलिङ्गा विलक्षणा एव शब्दा यथास्वमर्थविशेषनियता न त्ववयवापचयः । **लघ्वर्थम्** इति । लाघवार्थमित्यर्थः । वृत्तिविषये भावप्रधानो लघुशब्दः, गुरुलाघवमिति यथा । तदित्थमनेन

' एकार्थे शब्दान्यत्वम् '

इत्यादिना

' [2]लिङ्गमशिष्यम् '

25. 1. A °त्वमवस्थितम्. 2. P 5. 3. 88.
26. 1. M. Bhā. has यत्तावदयं. 2. om. अशिष्यम्—सन्मतिनी लिङ्गम्.



इति च प्रत्याख्यानेन शब्दशक्तिभेदोपवर्णनतात्पर्यरूपेण गुणावस्था सर्वत्र सम्भविनी लिङ्गमिति सूचितं भवति । वाक्यकारस्यापीदमेव दर्शनमिति वार्तिकोन्मेषे कथितमस्माभिः ॥ २६ ॥

मतान्तरेण संस्त्यानप्रसवादि लक्षयति ।

**उत्पत्तिः प्रसवोऽन्येषां नाशः संस्त्यानमित्यपि ।**
**आत्मरूपं तु भावानां [1]स्थितिरित्यपदिश्यते ॥ २७ ॥**

पूर्वं सांख्यदर्शनाश्रयेण संस्त्यानादि विभक्तम् । इदानीं वैशेषिकादिनयेनोच्यते । **उत्पत्तिः** अपूर्वावयवोपजनः प्रसवः पुंस्त्वम् । पूर्वदर्शने तु स एवाविर्भाव इति विशेषः । **संस्त्यानं** संहननमवयवानामपचयो निरन्वयो विनाशः स्त्रीत्वम् । पूर्वं तु तिरोभावमात्रमुक्तम् । नित्यानामनित्यानां च भावानामनौपाधिकं निजं तत्त्वं **स्थितिः** नपुंसकम् । तत्र नित्यानां चैतन्यमाकाशमिति शरीराद्युपाधिसंसर्गे तु यथा पूर्वमाविर्भावतिरोभावावुक्तौ तथात्रापि पक्षे चैतन्यस्योत्पत्तिविनाशौ व्याख्येयौ [2]पुरुषस्थितिरिति । एवमाकाशस्यापि संयोगिधर्मोपचारात् प्रसवयोगः । अनित्यानामपि सर्वावस्थास्वनुवर्तमानमेकत्वेन प्रत्यभिज्ञायमानं स्वरूपं स्थितिः [3]नपुंसकं तत्त्वमिति व्यवहारात् प्रसवः प्रसूतिः प्रसवनं, संस्त्यायः संस्त्या संस्त्यानमित्यत्र प्रसवादीनामन्येषामभावान्मृगतृष्णावत् कल्पितं लिङ्गम् ।

बुद्ध्या कल्पितरूपेषु लिङ्गेष्वपि च संभवः ।
स्त्रीत्वादीनाम् .... ( verse 7. )

इति वा निर्णीतमेतत् । तथा हि — प्रकृतिः स्वरूपेणाभिधत्ते वस्तु । प्रत्ययस्तु यथायथं स्त्रीत्वादिलिङ्गयुक्तमाहेत्यवास्तवत्वेऽपि शब्दप्रकल्पितोऽत्र भेदः प्रकृतिप्रत्ययाभ्यां लिङ्गस्य स्वरूपेण विशेषणत्वेन च प्रतिपादनात् । अत एव

' भावस्य च भावयुक्तत्वाद् ' ( Vā. 7, M. Bhā. II p 200 l. 7,

इत्युक्तम् भाष्यमपि स्त्रीत्वेन युज्यत इति । एवमाविर्विनाश इति विनाशोपजनायोगेऽप्यर्थस्य लिङ्गयोगः शाब्दः । तथाभिव्यक्तिदर्शनेऽभिव्यङ्ग्यः अभिव्यक्तिरभिव्यञ्जनमिति शब्दप्रमाणको लिङ्गभेदो ' भावस्य च भावयुक्तत्वाद्' इत्यत्र वार्तिकोन्मेषे विस्तरेण यथातत्त्वमस्माभिर्व्याख्यात इति तत एवावधार्यम् । गतमेतत् ॥ २७ ॥

इदानीं ' शब्दोपजनितोऽर्थात्मा लिङ्गम् ' इत्येतद्दर्शनं मतान्तरेणावस्थापयितुमाह ।

27. 1. AE² °त्युपदिश्यते । 2. A om. पुरुषस्थितिः, L² has a gap here.
3. A °कत्वमि°.

**इष्टं निमित्तं केषाञ्चिज्ज्ञात्यादिवदवस्थितम् ।**
**दृष्टवच्छब्दसंस्कारमात्रं तु परिकल्पितम् ॥ २८ ॥**

केषाञ्चिच्चेतनानामर्थानां समवेतमुपलब्धमेव स्तनकेशादि निमित्तं स्त्र्याद्याकारस्य [1]प्रत्ययस्य । तथा हि तत्र [2]प्रतिनियता जातिः समवेतोपलब्धा । तथा स्तना-
5 द्युपव्यञ्जनमपि लिङ्गानाम् । अन्यत्र तु तारकादौ तद्दर्शनाभ्यासात् सत्त्वमवगम्य कल्पितं लिङ्गं शब्दात् सत्त्ववचनात् तारका पुष्ये नक्षत्रमिति । प्रतीतेः शब्दसंस्कारमात्र-सतत्त्वमन्वाख्याने समाश्रितम् । एतत् पुनर्

'अन्योन्यसंश्रयं त्वेतद्'

इति पूर्वदूषितमिहान्यथोपन्यस्तम् । प्रयोगात् किलावसितस्य लिङ्गस्य चेतनविषयादन्यत्र
10 समारोपाच्छब्दसंस्कारहेतुत्वमात्रं न तु वास्तवरूपतेत्यनेनापि नयेन व्याप्तिसिद्धिरित्यर्थः ॥ २८ ॥

अत्रैव निदर्शनमाह ।

**यथा प्रसिद्धेऽप्येकत्वे नानात्वाभिनिवेशिनः ।**
**नानात्वं जनयन्तीव शब्दा लिङ्गेऽपि स क्रमः ॥ २९ ॥**

15 निश्चितेऽपि वस्तुन **एकत्वे** दाराः आपः गृहाः सिकताः इत्यादयः **शब्दा** धर्मभेदाश्रयबहुत्ववृत्तयस्तत्र बहुत्वं जनयन्तीव तथा व्यवसायजननात्, न तु परमार्थता, तथा **लिङ्गेऽपि** स्त्रीत्वादौ **स क्रमः** [1]परिपाटिः । बहिरसतोऽपि तस्य तारकादौ प्रकाशनात् ॥ २९ ॥

एवञ्च कृत्वा 'शब्दसंस्कारो लिङ्गम्' इत्यन्तिममेव दर्शनं प्रमाणभूत-
20 मभ्युपगच्छन्ति ।

**इदं वेयमयं वेति शब्दसंस्कारमात्रकम् ।**
**निमित्तदर्शनादर्थे कैश्चित् सर्वत्र वर्ण्यते ॥ ३० ॥**

इदं वस्तु, इयं व्यक्तिरयमर्थ इति त्रिलिङ्गानां शब्दानां सर्वत्र वस्तुमात्रे बहिर्निमित्तानपेक्षा प्रवृत्तिर्न व्याहन्यत इति अस्मान्निमित्तदर्शनाच्छब्दान्वाख्यानमात्रं लिङ्ग-
25 मभ्युपगन्तव्यम् । बाह्येऽर्थे तस्य लौकिके रूपानवधारणाच्छास्त्रसमयान्तःपातिनः परमुपकल्पयन्ति । [1]शब्दार्थोऽर्थ इति दर्शनाद् बहीरूपत्वेनाध्यवसायात्[2] युवत्यादिभ्योऽ-

28. 1. AE[2] प्रत्ययास्तु. 2. AE[2] om. प्रतिनियता–°न्यस्तम्.
29. 1. A परिपाटि.
30. 1. A शब्दार्थानिति. 2. A °यानुपपत्त्याऽर्थवि°



विशेषसम्प्रत्ययो न विरुध्यते । बहिः [3]सदसत्तानपेक्षणाच्च शब्दार्थस्यानुशासनाङ्गस्य

'स्त्रियाम्' ((P. 4. 1. 3.)

इत्यादेरविशेषेण लिङ्गप्रत्ययविषयमात्रेऽनुगमः । युवतिः खट्वेत्यादौ स्त्रीप्रत्ययस्यासदाकारस्य वा सदाकारस्य[4] वाविशेषात् । वास्तवे तु शब्दान्वाख्याननिमित्तेऽङ्गी-
क्रियमाणे राहोः शिरः, स्वस्य स्वभावः इत्यादौ व्यतिरेकविभक्तिः कथम् । 5
[5]तस्मादसतोऽपि बाह्यत्वेनावसितस्य लिङ्गस्यान्वाख्याननिमित्तत्वम् । अत एव

'टावृचि' (P. 4. 1. 9.)

इति ऋचोऽभिधेयत्वेनोपादानं युक्तम् । तदत्र

'शब्दोपजनितोऽर्थात्मा'

इत्यस्माद् दर्शनात् सर्वत्रैव शब्दादवधृतस्य शास्त्रसाधुत्वनिमित्तभाव इत्ययं विशेषः । 10
तत्र तु दर्शने विषयान्तरे भूयसा दृष्टस्यान्यत्र समारोपोऽभिमत इति दर्शनभेदः । **कैश्चिद्** इति वचनाद् ये गुणावस्थारूपं लिङ्गं वस्तूनां विवेकेन परिज्ञातुमशक्तास्तेषामिदं दर्शनमिति प्रतिपादयति । सति तु विवेककौशले यथाप्रविभक्तमेव लिङ्गं न्याय्यमिति [6]ध्वनयति ॥ ३० ॥

बहिरगृह्यमाणस्य कथं शब्दसंस्कारनिमित्तत्वमिति चेदाह । 15

**नावश्यं विषयत्वेन निमित्तं व्यवतिष्ठते ।**
**इन्द्रियादि [1]यथादृष्टं भेदहेतुस्तदिष्यते ॥ ३१ ॥**

यदन्यस्यावच्छेदनिबन्धनं तन्नियोगतो ज्ञानगोचरतया नावतिष्ठते । यस्मात् **तद् भेदहेतुरिष्यते** अवच्छेदकमभ्युपगम्यते । अवच्छेदकं च नियमेन ग्रहणगोचरतां न भजते । तथा हि चक्षुरादीन्द्रियमगृह्यमाणमपि स्वज्ञानस्य यथायथं नियतविषयस्य 20
विषयान्तरावच्छेदं विदधात्येव । एवं कारणं कार्यावच्छेदवदृष्टमपि, इति लिङ्गस्यापि शब्दसंस्कारकार्य[2]कारणस्यागृह्यमाणस्य स्वकार्यशब्दसंस्कारनिमित्तत्वमन्वाख्याने समुपादीयमानं युक्तमेव । **चक्षुरादि** इत्यादिग्रहणाद् राजपुरुष इत्यादौ वृत्तिशब्दे [3]संबन्धस्यागृह्यमाणस्यापि भेदहेतुत्वं गृह्यते । तथाहि राजपुरुषो नीलोत्पलमित्यादिशब्दाः
संबन्धनिमित्ततयान्वाख्याताः समासे सबन्धस्याप्रतीतावपि तदपरेभ्यो भिद्यमानं स्वार्थ- 25
विशेषमर्पयन्ति । तथा व्यक्तौ पदार्थे जातेरप्रतीतावपि स्वाश्रयावच्छेदकत्वं येन गवादिशब्दैः प्रतिनियतमेव द्रव्यमभिधीयते । तथा चेदं बाह्यं निमित्तमगृह्यमाणमत्र सदृशं निदर्शनम् ।

3. A बहिःसत्ता° 4. A om. सदाकारस्य. 5. P °स्मादवसिते. 6. AE[2] ध्वनति.
31. 1. A यथा दृष्टं, E[2] has a gap here. 2. P °कार्यस्याकार°, E[2] has a gap here. 3. A वृत्तेः शब्दसंबन्धस्य°.

इन्द्रियं त्वध्यात्ममगृह्यमाणत्वसाम्याद् दृष्टान्तः । तदेवं यथासम्भवं लिङ्गं विचारितम् । सिद्धान्तस्तु यथाभाष्यं गुणावस्थारूपं लिङ्गमित्यस्माभिर्वार्तिकोन्मेषे यथागमं व्याख्यातं तत एवावधार्यम् । गुणधर्मरूपे हि लिङ्गे धर्मशून्यस्य सर्वथैवाव्यवहार्यत्वादवस्तुष्वपि वस्तुत्वाभिमानाल्लौकिकानां लोकसम्प्रत्ययसमारूढस्यैव शब्दार्थत्वादात्मादीनां रूपादीनां तमश्छायाप्रभृतीनां च सर्वेषां लिङ्गयोग उपपन्नः । अभा[4]वशशविषाणादीनामपि वस्तुभूतोत्तरपदा[5]र्थाश्रयं लिङ्गं, न चान्यथा, भावोपाश्रयत्वादभावो व्यवह्रियत इति व्यापकमिदं संस्त्यानप्रसवौ स्थितिश्चेति लिङ्गत्रयं सिद्धान्तितमवगन्तव्यम । इत्यन्तः पदसंस्कारनिमित्तभूताः पदार्थाः पर्यवसितविचाराः ॥ ३१ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे

लिङ्गसमुद्देशस्त्रयोदशः ॥

---

4. A अभावे. 5. A °रपदाश्रय.

# अथ वृत्तिसमुद्देशः

असमस्तपदगतानर्थान् विचार्य समस्तपदविषयान् विचारयितुं पञ्चप्रकारवृत्तिपदविचारः प्रस्ताव्यते । तत्र प्रथमं समानाधिकरणतद्धितवृत्तिविचारः । तथाहि

" कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः "
( Vā. 1. on P. 5. 3. 74 )

" कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा टावादिषु "
( Vā. 3. on P. 5. 3. 74 )

इति प्रत्ययार्थपक्षं समानाधिकरणपक्षं च दोषवन्तमुद्भाव्य

" सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात् स्वार्थे प्रत्ययविधानात् "
( Vā. 2. on P. 5. 3. 74 )

इति प्रकृत्यर्थविशेषणपक्षोऽवस्थापितः । येन धर्मेण कुत्सादयः प्रतिपाद्यन्ते तद्धर्मयुक्तार्थाभिधायिनः प्रातिपदिकात् तेनैव कुत्सादेरुपादानात्तद्द्योतनाय स्वार्थे कनादयः प्रत्यया विधेया इति वार्तिकार्थः । एवञ्च प्रकृत्यर्थ[1]विशिष्टः प्रत्ययार्थो न कुत्सादिधर्ममात्रमिति लिङ्गवचनोपपत्तिः। उपात्तकुत्सादेरेव च शब्दात् प्रत्यय इति तत्समानाधिकरणादिद[2]मादेः स्वयमनुपात्तकुत्सादेस्तदभावः । एवं स्थिते केन धर्मेण कुत्सादय इत्युक्तम्

' स्वार्थमभिधाय शब्दो निरपेक्षः ' ( M. Bhā. II. p. 424, l. 3 )

इत्यादि । स्वार्थादिपञ्चकाभिधायिनः प्रातिपादिकात् स्वार्थादिनिमित्तकुत्सनादिद्योतनाय कनादयः प्रत्यया इति प्रकृत्यर्थविशेषणपक्षः ।

" प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः " ( M. Bhā. II. p. 424. l. 7. )

इति च । न सुबन्तात् प्रत्ययविधानपरमेतद् वचनम्, अपि तु पञ्चकार्यनिमित्तत्वात् कुत्सनादेर्देवदत्तक इत्यादौ कुत्सादिमात्रे प्रत्ययेन द्योतिते प्रकरणादेस्तद्धेतुर्लिङ्गादीनामन्यतमोऽवधार्यते । स च सुबन्तेन द्योत्यत इति विशिष्टकुत्साद्यर्थप्रतिपादनाय विभक्त्यन्तः प्रवर्तत इत्युच्यते । तदेतद् व्याचष्टे ।

**कुत्साप्रशंसातिशयैः समासार्थे [3]तु युज्यते ।**
**पदं स्वार्थादयः सर्वे यस्मात् कुत्सादिहेतवः ॥ १ ॥**

---

1. 1P. °र्थोवि° 2. A °दित्यादेः. 3. A समासार्थःप्रयु°.

स्वार्थद्रव्यलिङ्गसंख्याकर्मादिलक्षणेनार्थेन परिपूर्णाभिधेयं पदं स्वार्थादिनिमित्तेन विशिष्टेन कुत्साद्यर्थेन युक्तमवधार्यते । स्वार्थादयश्चान्यत्र व्याख्याता नेह प्रपञ्च्यन्ते । तदत्र प्रातिपदिकार्थनिमित्तत्वात् कुत्सादेस्तद्विशिष्टार्थाभिधायिनः प्रातिपदिकादेवाधि-[4]कारात् प्रत्ययः । प्रत्ययान्ताद्विभक्तिपराच्च, कुत्सादिहेतोर्विशिष्टस्याभिव्यक्तिरिति [5]**समासार्थं** तेन संबध्यत इत्युच्यते । तत्र स्वार्थनिमित्ता कुत्सा यथा पटुकः, पण्डितकः, मृदुक इति । पाटवादेरपरिपूर्णत्वाद् दुष्टत्वाद्वा कुत्स्यतेऽर्थः । एवं पटुरूपः पटुतर इत्यादि प्रशंसातिशययोः स्वार्थनिमित्तयोरुदाहार्यम् । द्रव्यस्य विशेष्यत्वेन प्राधान्याद् धर्मान्तरमुखेनैव तन्निमित्तः[6] कुत्सादिर्बोद्धव्यः । लिङ्गनिमित्ता कुत्सा यथा पुरुषे क्लीब-त्वप्रतिपादनार्था स्त्रीत्वारोपेण कुत्सा, निर्लज्जत्वान्वाख्यानाय वा स्त्रियां पुंस्त्वारोपेण पुरुषोऽयं स्त्री स्त्रीयं पुरुष इति । परार्थे शब्दप्रयोगादेव कुत्सावगतेः कप्रत्ययस्यायम-विषयः । एवमेकत्रैव दुर्भरत्वाद् बहुत्वसमारोपादिदमेव मे [7]सहस्रमिति संख्यानिमित्ता कुत्सा । प्रत्ययोऽत्र पूर्ववन्न भवति । एवं प्रशंसादावपि यथायोगं प्रदर्शनीयम् ॥ १ ॥

तदत्र कुत्सितकः अनुकम्पितकः इति को न प्राप्नोति स्वशब्देनाभिहितत्वादिति भाष्ये चोदितं परिहर्तुमाह ।

**देवदत्तादिकुत्सायां वर्तते कुत्सितश्रुतिः ।**
**कुत्सितस्था तु या कुत्सा तदर्थः को विधीयते ॥ २ ॥**

कुत्सां प्रवृत्तिनिमित्तमाश्रित्य देवदत्ते कुत्सितशब्दो वर्तते । स च कुत्सा-संबन्धोपलक्षितलिङ्गसंख्याकर्माद्युपाधिकं द्रव्यमभिधत्त इति स्वार्थमात्रे विश्रान्त्यभावा-दर्थान्तरे लिङ्गादावपि तात्पर्याद् बाह्यकुत्साप्रतिपादने सामर्थ्याभावात् तत्र प्रत्यय [1]उत्पद्यते । स्वार्थभूता हि प्रातिपदिकवाच्या देवदत्तादेः कुत्सा । तद्व्यतिरिक्ता तु बाह्या स्वार्थादिनिमित्ता प्रत्ययवाच्या । तद् यथा देवदत्तशब्दात् प्रियकुत्सनादिसाधारणार्था-भिधायिनः कप्रत्ययः कुत्सासंबन्धं प्रकाशयति तथा कुत्सितशब्दादर्थान्तरनिमित्त-प्रवृत्तिनिमित्तभूतकुत्साभिधायिनः स्वार्थगतां बाह्यां कुत्सां प्रकाशयितुं कप्रत्यय इत्यर्थः ॥ २ ॥

एवमतिशायनेऽपि स्वशब्देनाभिहिते तत्प्रत्ययाप्रसङ्ग इति समानन्यायत्वाच्चोदितं भवतीति तदपि प्रकृतसमाधानाय प्रतिविधत्ते ।

---

4. P °कारम°.   5. A समाज्ञार्थः E[3] समासार्थ.   6. AE[3] I °त्तं. कुत्सादि बोद्धव्यम्.
7. A साहसं.

2. 1. A प्रत्ययानुत्पत्तेः



**प्रकृष्ट इति शुक्लादिप्रकर्षस्याभिधायकः ।**
**प्रकृष्टस्य प्रकर्षे तु तरबादिर्विधीयते ॥ ३ ॥**

योऽतिशयेन शुक्लः शुक्लतरः स **प्रकृष्टः** शुक्ल इत्युच्यते । निरतिशयापेक्षया हि सातिशयः शुक्लस्तरबन्तेन वा शुक्लशब्देनोच्यते, केवलेन वा प्रकृष्टशब्देन । तथा च शुक्लादिगतस्य प्रकर्षस्य प्रकृष्टशब्दोऽभिधायक इति न तत्रैव ततस्तरप्प्रत्ययः । यस्त्व-परः प्रकृष्टेभ्योऽपि तस्य प्रकर्षः स नाभिहित इति तदभिधानाय तरप् क्रियते प्रकृष्टतर इति । यथा ज्येष्ठनमायेत्यतिशायनप्रत्ययान्तरम् । आदिग्रहणात् प्रशस्तरूपमिति प्रशंसोपाधेः प्रत्ययान्तरमुदाहार्यम् । एवं कुत्सितक इति कुत्सितस्थे कुत्सान्तरे कः ॥३॥

किं पुनः कुत्सितस्य कुत्सान्तरमित्यत आह ।

**कुत्सितत्वेन कुत्स्यो वा न सम्यग् वापि कुत्सितः ।**
**स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते ॥ ४ ॥**

स्वशब्देन कुत्सित इत्यनेन सामान्यशब्देनाभिहितेऽर्थे विशेषो नावधार्यते । किमस्याकार्यकरणान्निन्दार्हत्वेनैव कुत्सितत्वम्, उत [1]युक्तकार्येपि शत्रुणा दुष्टत्वारोपेण गर्ह्यत इति । उत्पन्ने तु प्रत्यये विशेषावधारणम् । तथा हि कुत्सितमस्य कुत्सितत्वं न सम्यगिदं कुत्सितत्वं शत्रुणा तु द्वेषेणाध्यारोपितमिति [2]प्रत्ययान्तादवगम्यते कुत्सित-क[3]शब्दात् । सा हि कुत्सितस्य कुत्सा या निर्दोषस्यैव क्रियते । यद्वा कुत्साया अपि निन्द्यतरत्वेन कुत्साविशेषः । तथा चानिर्धारितधर्मविशेषनिबन्धनकुत्सा कुत्सितशब्द-प्रवृत्तिनिमित्तं ब्रह्महत्यादिविशेषनिबन्धना तु कप्रत्ययहेतुरिति विशेषः । तदेवं कुत्सितार्थसमवेतां द्वितीयां कुत्सामाश्रित्य समर्थितम् ॥ ४ ॥

यद्वा नास्त्येवात्र द्वितीया कुत्सा । यैव तु प्रातिपदिकेनोपात्ता तत्रैव प्रत्यय इत्याह

**न च साम्प्रतिकी कुत्सा भेदाभावात् प्रतीयते ।**
**पूज्यते कुत्सितत्वेन प्रशस्तत्वेन कुत्स्यते ॥ ५ ॥**

कुत्सोपलक्षितस्य द्रव्यस्य कुत्सितशब्देन प्रियकुत्सनादिसाधारणस्याभिधानाद् वर्तमानकुत्साभिसंबन्धो नावधार्यतेऽस्मात् । तथाहि—तत् कुत्सयोपलक्षितं द्रव्यं, कदा-चित् **पूज्यते** प्रशस्यतेऽपि कुत्सितरूप इति । [1]यथा वृषलरूपो दस्युरूप इति । तथया प्रशस्तत्वेनोपलक्षितं निन्द्यते प्रशस्तक इति अपरिपूर्णप्रशंसोऽध्यारोपितप्रशंसो वा । कस्यचिद्धि प्रशंसा न परिसमाप्ता, अंशेन खण्डितत्वात् । [2]कस्यचित् प्रशंसा न

---

4. 1. AE[3] °येऽपि.   2. A प्रत्ययात्तावदव°.   3. P कुत्सितश°.   4. IP कुत्साया
5. 1. M om. यथा—दस्युरूप इति.   2. I. M om. कस्यचित्—ध्यारोपितत्वात्.

विद्यते, अरिणाध्यारोपितत्वात् । कस्यचित्तु अरिणा प्रशस्तस्याप्यप्रशस्तत्वमारोप्यते । एवं कुत्साव्यभिचारसंभवात् कुत्सितशब्दाद् वर्तमानकुत्सासंबन्धमनवगतं द्योतयितुमुपपद्यते कप्रत्ययः । एवमनुकम्पितक इत्यनेनैव न्यायेनानुकम्पायां कप्रत्ययः समर्थनीय इति समानाधिकरणतद्धितवृत्तौ किञ्चिद् विचारितम् ॥ ५ ॥

यथा कुत्सादिभिः समासार्थं पदं संबध्यते तथावच्छेद्यावच्छेदकभावेनापीति समानाधिकरणसुब्वृत्तिं विचारयितुमाह ।

**विशेषणविशेष्यत्वं पदयोरुपजायते ।**
**न प्रातिपदिकार्थश्च तत्रैवं [1]व्यतिरिच्यते ॥ ६ ॥**

इह वीरः [2]पुरुष इति वीरादिशब्दोऽनपेक्षितेतरेतरपदसमन्वयोऽव्यतिरिक्तस्वार्थमात्रवचनः । तथा च पदान्तरसन्निधानेऽपि तस्य तावत्येवाभिधा निश्चीयते । तत्र च संबन्धे गुणप्रधानभावस्यावश्यंभावाद् विशेषणविशेष्यभावो वाक्यार्थः पदयोः समन्वितयोरधिको जायते न प्रातिपदि[3]कार्थयोः । यथा राज्ञः पुरुष इत्यत्र व्यधिकरणपदविषये राजप्रातिपदिकार्थस्यैव विशेषणत्वमिति ततः षष्ठी न विशेष्यादुपकार्यत्वेन स्वनिष्ठात् । तथा च

षष्ठी शेषे ( P. 2. 3. 50. )

इत्यत्रोक्तम्—

अर्थरूपमेवैवंजातीयकम् ( M. Bhā. I. p. 464, l. 17-18 )

इति । विशेष्यलक्षणमर्थरूपमव्यतिरिक्तस्वार्थं स्वनिष्ठमित्यर्थः । यदा च समानाधिकरणविषये विशेषणविशेष्यभावे पदार्थपृष्ठपातित्वेन वाक्यार्थता तदा तत्र प्रातिपदिकार्थो न व्यतिरिच्यते रूपान्तरेण न विपरिणमत इति प्रथमा नोपसंख्येया । तथा चोक्तम् —

‘ न वा वाक्यार्थत्वाद्, यदत्राधिक्यं वाक्यार्थः सः ।
( M. Bhā. I. p. 464. l 10 )

इति । व्यधिकरणविषये तु विशेषणस्य रूपान्तरापत्तिमवसाय भेदमबुद्ध्वा चोदितं

“ [4]प्रातिपदिकार्थमात्रे प्रथमाविधाने पदसमानाधिकरण उपसंख्यानमधिकत्वात् ”
( Vā. I. on. P. 2. 3. 46. M. Bhā. I. p. 46. l, 23 )

इति । अवच्छेद्यावच्छेदकभावस्य चानियमश्चोदितः ।

“ विशेषणविशेष्ययोरुभयविशेषणत्वादुभयविशे[5]ष्यत्वाच्चोपसर्जनाप्रसिद्धिः ”
( Vā. I. on P. 2. I. 57 )

6. 1. AE[3] I तत्रैवं ह्यतिरिच्यते. 2. AE[3] वीरपुरुष. 3. A °पदिकयोः 4. The Vā runs as follows: प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमालक्षणे पद°. 5. The Vā has उभयोश्च विशेष्यत्वाद्.



इति । विशेष्याभिमतेनापि विशेषणाभिमतस्य स्वात्मनि नियमनात् तस्यापि तं प्रति विशेषणत्वमिति द्वयोरपि विशेषणत्वमिति समासशास्त्रे प्रथमानिर्देशादुपसर्जनसंज्ञायां पूर्वनिपातः पर्यायेण स्यात् । अत्र समाधिरुक्तः

“ न वान्यतरस्य प्रधानभावात् तद्विशेषकत्वाच्चेतरस्योपसर्जनस्य प्रसिद्धिः ।
( Vā. 2 on P 2. l. 57. M. Bhā. I, p. 399, l. 11. )

इति तत्र । नियमेन गुणप्रधानभावः किंकृत इति व्याचष्टे ।

**विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातार्थो विशेषणम् ।**
**परार्थत्वेन शेषत्वं सर्वेषामुपकारिणाम् ॥ ७ ॥**

इह विशेषणविशेष्ययोर्लक्षणमन्वर्थेन नाम्नैवावेदितं भेद्यं विशेष्यं भेदकं विशेषणमिति । इदं तु गुणप्रधानताज्ञापनार्थम् । तत्रोच्यते । [1]संबन्धान्यथानुपपत्त्या च सिद्धो गुणप्रधानभावः, द्वयोः समयोः संबन्धायोगादिति कुतः सङ्करः, प्रसिद्ध्यप्रसिद्धिभ्यां व्यवस्थापनात् । तथा हि सामान्यात्मना क्रियासंबन्धितायामुपक्रान्तं विशेष्यं ज्ञातमपि स्वगतेनात्मभूतेन विशेषेणानिश्चितमिति तन्निश्चयाय ज्ञापकत्वादेव निश्चितोऽर्थो गुणादिः प्रवर्तमानो विशेषणम् । ततश्च ज्ञाप्यं प्रधानं विशेष्यं, ज्ञापकं परोपकारायोपादीयमानं शेषभूतमप्रधानं विशेषणम्, द्रव्यस्य च साक्षात् क्रियासंबन्धात् तदेव तत्र प्रधानम् । गुणस्तु तद्द्वारेण क्रियासंबन्धमनुभवन् द्रव्यावच्छेदकोऽप्रधानभूतः । सर्वत्रैव सगुणस्य द्रव्यस्य क्रियासंबन्धितया विधीयमानत्वम् । आधारद्वारको वा गुणानां क्रियासंबन्धः । न तु द्रव्यमनूद्य गुणस्य पृथक् क्रियायां विधानमिति व्यवस्थितो गुणप्रधानभावः । तेन

“ कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति कृष्णाजिनेन दीक्षयति कृष्णविषाणया कण्डूयति ”

इत्यादौ सर्वत्र गुणविशिष्टस्य द्रव्यस्य विधानात् तस्यैव प्राधान्ये सति विशेष्यत्वमितरस्य तु कृष्णगुणस्य विशेषणत्वमित्युपसर्जनप्रसिद्ध्यर्थमवस्थितो गुणप्रधानयोर्नियमः । स च समानाधिकरणसमासे षष्ठीसमासे च ॥ ७ ॥

तथाहि—

**विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः ।**
**सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥ ८ ॥**

7. 1. A ins. नात्मभूतानि विशेषणानि before संबन्धा°.

8. 1 M om. प्रयुज्यते-°नियतगुणसंबद्धे

पटस्य शुक्ल इति द्रव्यगुणाभिधायिपदप्रयोगे शाब्दो गुणप्रधानभावः । तथा ह्यत्रोपसर्जनं प्रधानोपकारपरिणतं स्वार्थमाचष्ट इति गुणविभक्तिं षष्ठीमुपादत्ते । प्रधानं तु स्वात्मन्यवस्थितमपरोपकारीति प्रथमया युज्यत इति नियतो **विभक्तिभेदो** व्यधिकरणे विषये । वीरः पुरुष इत्यादौ तु समानाधिकरणे विषये द्वावपि द्रव्यशब्दौ स्वनिष्ठं स्वार्थमाचक्षाते । तथा च प्रथमैव । सामर्थ्यनिबन्धनस्तु गुणप्रधानभाव उक्तो

विशेष्यं स्यादनिर्ज्ञातम् ( verse 7. )

इत्यादिना । एवं च सत्यपि गुणप्रधानभावे शब्दाशब्दत्वकृतो विशेषः सामानाधिकरण्यवैयधिकरण्ययोरिति षष्ठीसमासा( ना? )धिकरणयोः समासयोर्भेदः ॥ ९ ॥

यदि तर्हि समानाधिकरणे विषये द्वावपि द्रव्यशब्दौ परस्परानुपकारकप्रधानार्थवाचकौ विशेषणविशेष्यभावात्मकस्तदा कथमनयोः परस्परसंबन्ध इत्यत आह—

**द्रव्येऽनिर्ज्ञातजातीये कृष्णशब्दः [1]प्रयुज्यते**
**अनिर्ज्ञातगुणे चैव तिलशब्दः प्रवर्तते ॥ ९ ॥**

अभेदोपचारान्मतुब्लोपाद्वा **कृष्णशब्दो** द्रव्ये वर्तते । स च गुणनिमित्तक इति तत्र नियतजातीयतया निश्चयस्ततो नास्ति । अविनाभावात् तु जातिमात्रमवधार्यते एव । एवं **तिलशब्दो**ऽपि जातिनिमित्तोऽनिश्चितनियतगुणसंबद्धे द्रव्ये वर्तते । तथा च द्वयोरपि विशेषाकाङ्क्षित्वम् ॥ ९ ॥

एवमपि कथं परस्परेण संबन्ध इत्याह ।

**सामान्यानामसंबन्धात् तौ विशेषे व्यवस्थितौ ।**
**रूपाभेदाद् विशेषं तमभिव्यङ्क्तुं न शक्नुतः ॥ १० ॥**

अनिश्चितनियतजातिगुणानि कृष्णतिलशब्दाभिधेयानि द्रव्याणि सामान्यान्यत्र विवक्षितानि । तेषामत्र स्वात्मन्यवस्थितानां परस्परोपकाराभावात् संबन्धो न स्यादित्येकवाक्यतावशात् संबन्धान्यथानुपपत्त्या प्रथममेवात्र **विशेषे** कृष्णतिलशब्दौ **व्यवस्थितौ** । कृष्णशब्देन ह्यत्र तिलजातीयमेवाभिधित्सितं तिलशब्देन च कृष्णगुणं द्रव्यम् । स च विशेषः प्रतिपत्तृभिः परस्परसंबन्धात् प्रागवधारयितुं न शक्यते । अन्यजातीयेऽपि कृष्णशब्दस्य प्रवृत्तेरन्यगुणेऽपि तिलशब्दस्यैवंविधस्येति प्रतिपत्त्रपेक्षया विशेषानभिव्यक्तिरुच्यते । तदपेक्षयैव चान्विताभिधानपक्षे पदान्तरस्य विशिष्टार्थाभिव्यक्तिहेतुत्वं कथ्यते । वक्त्रभिप्रायात्तु विशिष्ट एवोपक्रान्तोऽर्थः संबन्धः (द्धः ?) ॥ १० ॥

9. 1. M om. प्रयुज्यते °नियतगुणत्रंबद्धे ।



स एव वाक्यैकतावशादभिव्यज्यत इत्याह ।

**तावेवं सन्निपतितौ भेदेन प्रतिपादने ।**
**अवच्छेदमिवाधाय संशयं व्यपकर्षतः ॥ ११ ॥**

**एवम्** इति रूपाभेदाद् विवक्षितविशेषप्रतिपादने प्रतिपत्तारं प्रत्यशक्तत्वेन प्रवृत्तौ कृष्णतिलशब्दौ विशेषोपलक्षितस्य द्रव्यस्य प्रत्यायने प्रतिपत्तृगतं तिलातिलविषयं कृष्णाकृष्णविषयं च सन्देहं निवारयतः, कृष्ण[1]शब्देऽन्यजातीयाद् व्यावृत्तिं तिलशब्दे[2] चान्यगुणादावाय । कृष्णशब्दो हि तिलजातियमेव तिलशब्दसन्निधानेऽर्यमाहेत्यन्यजातीयात् तस्य निवृत्तिः । एवं तिलशब्दः कृष्णगुणमेवेत्यन्यगुणादस्यावच्छेदः । स चात्र पूर्वमेव स्वीकृत इतीवशब्दः । प्रतिपत्ता हि सति संबन्धेऽवच्छेदमवैति । यदुक्तं भाष्ये—

" कृष्णशब्दस्तिलशब्देनाभिसंबध्यमानो विशेषवचनः सम्पद्यते । तथा तिलशब्दः कृष्णशब्देनाभिसंबध्यमानो विशेषवचनः सम्पद्यते " ( M. Bhā. I. p. 399 l. 7 )

इति । तदानीं विशेषवचनत्वस्याभिव्यक्तिरित्यर्थः ॥ ११ ॥

तदेवं संबन्धः समर्थितः । स चात्र सामानाधिकरण्यस्वभावः । सामानाधिकरण्यं च शब्दयोर्भिन्ननिमित्तप्रयुक्तयोरेकस्मिन्नर्थे वृत्तिरिति । यदि [1]समानाभिधेयत्वलक्षणं तदा विशेषणविशेष्यभावोऽर्थद्वारकस्तयोर्नोपपन्नो भेदाश्रयत्वात्[2] तस्य । अर्थैक्ये तदभावात् । अथार्थयोः समानाश्रयत्वं सामानाधिकरण्यं तदा गुणद्रव्ययोरधिकरणान्तरा(र?)भावात् कथमत्र तदुपपत्तिः । विशेषणविशेष्यभावस्तु स्याद् द्रव्यगुणयोः । अथ गुणस्य द्रव्यजातेश्चैकाधिकरण्यमाश्रीयते तदा विशेषणविशेष्यभावो न स्यात् । तयोर्द्रव्यावच्छेदप्रवृत्तयोरन्योन्येनानभिसंबन्धादिति । एतदाशङ्क्य समर्थयितुमाह ।

**द्रव्यात्मा गुणसंसर्गभेदादाश्रीयते पृथक् ।**
**जातिसंबन्धभेदाच्च द्वितीय इव गृह्यते ॥ १२ ॥**

इह द्रव्यात्मा निरंशवस्तु तत्तदुपाधिभेदारूषितरूपं व्यवहारयोग्यमिति कृष्णगुणसमवायोपहितभेदमन्यदिव कृष्णशब्दाभि[3]धेयम् **आश्रीयते** । एकैकव्यावृत्तिनिष्ठत्वाच्छब्दानां तदभिधेयं भागशः खण्डरूपमेव नियतं प्रतीयते । ततश्च जातिसमवायोपलक्षितं तिलशब्देन द्वितीयमिव द्रव्यं प्रत्याय्यते । एकस्यैव जातिगुणावच्छिन्नस्य प्रतिपादनादेकैकशब्दव्यापारापेक्षया विच्छिद्येव सम्प्रत्ययादिवशब्दः ॥ १२ ॥

11. 1. A °शब्दो. 2. A ° ब्देनान्यगुणावछेदमाधाय.
12. 1. M. °नार्थाभिधे°. 2. M. भेदाश्रयसत्त्वात्. 3. AE[2] कृष्णशब्दाभिधेयभेदम्. P. कृष्णतिलाभि°.

एतदेव समर्थयितुमाह ।

**निमित्तैरभिसंबन्धाद् या निमित्तसरूपता ।**
**तयैकस्यापि नानात्वं रूपभेदात् प्रकल्पते ॥ १३ ॥**

निमित्ताद् [1]गुणजात्यादेर्निमित्तवत्यर्थे द्रव्ये निमित्तसरूपप्रत्ययो जायमानः स्वप्रत्ययं[2] विभक्तमेव दर्शयति । तथा च जातिगुणोपरागाद्भिन्नं द्रव्यद्वयमाधेयम् ॥ १३ ॥

तस्य त्वाधारभूतं तृतीयं द्रव्यमभिसंबन्धकाले बुद्धया [1]निर्भज्यत इत्याह ।

**द्रव्यावस्था तृतीया तु यस्यां संसृज्यते द्वयम् ।**
**तयोरवस्थयोर्भेदादाश्रयत्वे नियुज्यते ॥ १४ ॥**

जातिगुणोपाधिसंसर्गप्रविभक्तशरीरद्वयमाधेयं यत्र **संसृज्यते** सम्भेदमापद्यते तत् तृतीयं द्रव्यरूपमाधारभूतमवच्छेद्यम् । अवच्छेदकात् तस्माद् द्वयादन्यदाश्रयत्वे तयोर्द्वयोः **नियुज्यते** कल्प्यते ॥ १४ ॥

कथमेकस्य [1]वस्तुतो द्रव्यस्य भेदकल्पनेत्याह ।

**बुद्धयैकं भिद्यते भिन्नमेकत्वं चोपगच्छति ।**
**बुद्धयावस्था विभज्यन्ते सा ह्यर्थस्य विधायिका ॥ १५ ॥**

इह प्रत्ययरूढार्थाभिधायिनः शब्दा यथाप्रत्ययं भेदाभेदाभ्यां व्यवहारं [2]वर्तयन्ति । प्रत्ययश्च स्वनिमित्तानुविधानेनार्थाकारान् बहिर्निर्मिमीत एव । तथा च प्राक्समासाद्वाक्येऽभिभेदाच्छुरितस्य द्रव्यद्वयस्याभिधानम् । समासे तु भेदस्तिरोहितोऽभिहितः । सोऽर्थोऽन्तर्भूत इति पदसमुदायात्मकमेकं पदमभेदेन कृष्णतिला इत्यर्थमभिधत्ते । तथा च नीलमञ्जरी मत्तमधुकरी इति पुंवद्भावः समानाधिकरणलक्षणः सिद्धः ॥ १५ ॥

बुद्धिप्रकल्पितश्च भेदाभेदव्यवहारः कात्यायनाचार्यस्याप्यभिमत इत्याह ।

**व्यपदेशिवदेकस्मिन् बुद्धया नानार्थकल्पना ।**
**तथा कल्पितभेदः सन्नर्थात्मा व्यपदिश्यते ॥ १६ ॥**

'तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थम्'
( Vā. 3 on P. 1. 1. 21. M. Bhā ( I, p. 76. l 23–p. 77, l. 1 )

इति व्यपदेशिवद्भाववचनम्

'अवचनाल्लोकविज्ञानात् सिद्धम्'
( Vā. 5. on P. 1. 1. 21. M. Bhā. I. p 77 l. 10 )

13. 1. E[3] गुण इत्यादे°. 2. E[3] स्वप्रत्येयं.
14. 1. E[3] नियुज्यते.
15. 1. AE[2] वस्तुनो. 2. I वर्तयति.



इति प्रत्याचक्षाणो वार्त्तिककारो बुद्धिप्रतिभासिनं शब्दार्थमभ्युपगच्छति । तथा हि बुद्धिसमारोपितभेदाश्रयेण मुख्यवदेकस्मिन्नपि द्विर्वचनादिकार्यं सिद्धम् । शब्दप्रयोगाच्च प्रत्ययस्य गौणमुख्ययोरविशेषः । [1]बाधकानुदयात् । अत एव

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ( Y. Dar. I. 6 )

इत्यत्र विकल्पाद् विपर्ययो भेदेनोक्तः । विकल्पो हि पुरुषस्य चैतन्यं स्वरूपमित्यत्राभिन्नस्यापि भेदप्रदर्शने राज्ञः पुरुष इतिवत् प्रतीतिसाम्यम् ॥ १६ ॥

शिलापुत्रकस्य शरीरमित्यभेदेऽपि भेदो लौकिको व्यपदेशिवद्भावे दृष्टान्तितः । तं व्याचष्टे—

**क्रियाभेदेन दृष्टानामश्मादीनां पुनः पुनः ।**
**किञ्चिद्दर्शनमन्येन दर्शनेनापदिश्यते ॥ १७ ॥**

अनेकशः पेषणादिक्रियाभेदोपधारितभे[1]दानां शिलापुत्रकादीनां विवक्षितैकक्रियासंबन्धित्वेन ज्ञानमनेकक्रियागतेन ज्ञानेन संबन्धितयावच्छिद्यते । [2]नानाक्रियासंबन्धिनः शिलापुत्रकस्येदमेक[3]क्रियासंबन्धि प्रतिनियतं शरीरमिति ॥ १७ ॥

एवमिणादिधातुविषयेऽप्येकाच्त्वं भेदकल्पनया भवतीत्याह—

**प्रयोगभेदाद् धातूनां प्रकल्प्य बहुरूपताम् ।**
**भेदाभेदावुपादाय क्वचिदेकाच्त्वमुच्यते ॥ १८ ॥**

एकोऽच् यस्य सोऽयमेकाजिति बहुव्रीहावाश्रिते एकवर्णेष्वन्यपदार्थस्य वर्तिपदार्थभिन्नस्याभावाद् द्विर्वचनाप्रसक्तौ

"एकवर्णेषु च व्यपदेशिवद्वचनात्" ( Vā. 2. on P. 6. I. I, M. Bhā. III, p 1, l. 8. )

इत्युक्तम् । ततः एति,[1] अयनम्, इतः, एता, एतव्यम्, आयन् इत्यादिबहुभेदभिन्न[2]प्रयोगगतनानारूपाश्रयेणान्यपदार्थं प्रतिनियतप्रयोगगतभेदाश्रयेण वर्तिपदार्थं च परिकल्प्य इयायेत्यादौ द्विर्वचनसिद्धिरुक्ता ॥ १९ ॥

यद्वा

**अन्वयव्यतिरेकाभ्यामर्थवान् परिकल्पितः ।**
**एको धात्वर्थविगमाद् वर्णत्वेनोपचर्यते ॥ १९ ॥**

इणो धातोरेत्यादौ पदे प्रत्ययरूपभिन्नेऽप्यनुगमाद् योऽनुगतोऽर्थः स वाच्यः ।

16. 1. P. साधका°.
17. 1. I. °तच्छेदा°. 2. M. नानाविधक्रि°. 3. I. °मेकमेकक्रि°.
18. 1. A एव. 2. P °दप्रभिन्न°.

अन्यत्र तस्मिन्नेव प्रत्यये धात्वन्तरप्रयोगे तदप्रतीतेरित्यर्थवतोऽस्य निरर्थकमिदं वर्णरूपमेकोऽजिति कल्पनया व्यवह्रियते। धातुशब्दो हि क्रियावचनस्य संज्ञेति तेनार्थवानसावुच्यते। अजिति त्वनपेक्षितार्थसंबन्धवर्णविशेषात्मकं रूपमभिधत्ते। तथा च 'कल्पते[1] व्यपदेशः, एकोऽज् यस्य सोऽयमेकाजिति। प्रथमत्वमप्यसत्यप्रथमेऽपेक्षणीये पूर्वत्वात् समारोपितं यथा प्रथमगर्भेण हतेति निर्णीतम् ॥ १९ ॥

तदेवं यथा बुद्धिप्रकल्पितभेदाश्रयेणात्र व्यपदेशसमर्थनं तथा सामानाधिकरण्यमपि बौद्धभेदाश्रयमिति प्रकृतं निगमयति।

**[1]द्रव्यात्मानस्त्रयस्तस्माद् बुद्धौ नाना व्यवस्थिताः।**
**आश्रयाश्रयिधर्मेणेत्ययं पूर्वेभ्य आगमः ॥ २० ॥**

जातिगुणाच्छुरितमाधेयं द्रव्यद्वयं तदाधारभूतं तु तृतीयं गुणजातिविशिष्टबुद्धिभेदाद् भिन्नमिति विभक्तमात्मग्रहणं सर्वत्र निरंशवस्तुवाचकमित्युपाधिभेदेनापि प्रतीतौ निरंशवस्तुविश्रान्तिः सूचिता, यथा[2] सामानाधिकरण्यं वाक्येऽपि सिध्यति। तथा च तत्र पुंवद्भावोपपत्तिः। एष च वृद्धानामाम्नाय आदरणीयो न स्वमनीषिकाचर्चितः। तदेवं

'समानाधिकरणेषूपसंख्यानमसमर्थत्वाद्'

(Vā. 28. on P. 2. 1. 1., M. Bhā. I, p. 370, l. 1)

'द्रव्यं पदार्थ इति चेत्' (Vā. 21 on P. 2. 1. 1., M. Bhā. I, p. 370, l. 14.)

इति द्रव्यपदार्थपक्षे वीरपुरुषशब्दाभ्यां द्वाभ्यामप्येकस्य द्रव्यस्य प्रतिपादनाद् भिन्नाभिधेयाभावे भेदाधिष्ठानस्य संसर्गस्याभावात् समासाभावो यश्चोदितः स द्रव्येऽपि पदार्थे प्रतीयमानवीरत्वादिगुणभेदकृतं द्रव्यस्य भेदमाश्रित्य समर्थितः। जातावपि हि पदार्थे प्रतीयमानैकद्रव्याश्रयं सामानाधिकरण्यं वीरपुरुषत्वयोराश्रयणीयम्, अन्यथानुपपत्तेः। एवमर्थयोः सामानाधिकरण्यमधिकरणान्तरविभजनात् समर्थितम्। अत एव विशेषणविशेष्यभावोऽपि सिद्धः। यो हि यमभेदेनोपश्लिष्यति स स्वरूपेण नियोगतः तमुपरञ्जयतीति दृष्टम् ॥ २० ॥

तदित्थमर्थयोः सामानाधिकरण्यमुपपाद्य शब्दयोरप्युपपादयितुमाह।

**सामानाधिकरण्यं च शब्दयोः कैश्चिदिष्यते।**
**विशेषणविशेष्यत्वं संज्ञासंज्ञित्वमेव वा ॥ २१ ॥**

19. 1. A कल्प्यते.
20. 1. A द्रव्यात्मगास्त्र°. 2. A यथा.



कृष्णतिलशब्दयोर्भिन्ननिमित्तप्रयुक्तयोरेकस्मिन् जातिगुणविशिष्टे द्रव्ये प्रवर्तमानयोः समानाभिधेयत्वं सामानाधिकरण्य[1]मुच्यते। एवं विशेषणविशेष्यभावोऽपि तयोरेव। कृष्णशब्दो हि तिलशब्दं स्वार्थविशिष्टेऽर्थेऽवस्थापयति। तिलशब्दोऽप्यन्यविशेषप्रतिपादनादपावर्तमानोऽवच्छेद्यः। संज्ञासंज्ञिभावोऽपि प्रत्यस्तयोस्तयोरेव। तथाहि—प्रदेशस्थो वृद्धिशब्दः संज्ञासंज्ञिवाक्यस्थेन वृद्धिशब्देन प्रत्यायितः स्वरूपोपधानेन संज्ञिनं प्रतिपादयति आदैज्-इत्यादैच्छब्दोपहितरूपम्। अतश्च स्वरूपोपधानेन प्रत्यायनात् सोऽयमित्यभिसंबन्धात् सामानाधिकरण्यमेकविभक्तित्वं च विशेषणविशेष्ययोः संज्ञासंज्ञिनोश्च वृद्धिवाक्ये वर्णितम्। तदिह निदर्शनत्वमन्तर्भाव्य दर्शितम् ॥ २१ ॥

प्रकारान्तरेणार्थयोः सामानाधिकरण्यमाह।

**केषाञ्चिज्जातिगुणयोरेकार्थसमवेतयोः।**
**वृत्तिः कृष्णतिलेष्विष्टा शब्दे द्रव्याभिधायिनि ॥ २२ ॥**

**कृष्णतिलेषु** प्रतिपाद्येषु **वृत्तिः** एकार्थीभाव **इष्टा**[1]। तथाहि—सति विशेषणविशेष्यभावे सा भवति। अस्ति चात्र सः, जातिगुणयोरेकत्राश्रये वृत्तेः। यदेव द्रव्यं जातिनिष्ठं तिलशब्देन साकाङ्क्षमवगमितं तदेव कृष्णशब्देनावच्छिद्यते। अतस्तद्वाच्यो गुणो विशेषणम्। गुणनिमित्तो हि कृष्णशब्दो द्रव्य इति तस्य तात्पर्यार्थो गुणः, द्रव्यस्य तिलशब्देनाप्याक्षेपात्। **शब्दे द्रव्याभिधायिनि** इति सामानाधिकरण्यार्थमाह। कृष्णशब्देन हि गुणमात्राभिधाने तिलस्य कृष्ण इति वैयधिकरण्यं स्यात्। तथा च वृत्तिर्न भवेत्। षष्ठीसमासस्यापि गुणेन न इति निषेधात्। एवं तिलशब्देन जातिमात्राभिधान इति जातिविशिष्टद्रव्याभिधानमत्रापि पक्षे। गुणप्रधानभावकृतस्तु पक्षभेदः। तथा च प्राधान्येन वाच्यस्य द्रव्यस्य वस्तुतोऽधिकरणान्तराभावाद् द्रव्यपदार्थपक्षे पूर्वं बौद्धभेदाश्रयेण समर्थितम्। इदं तु जातिपदार्थपक्षे कथ्यते। न च जातिगुणौ निराश्रयावत्र तिलकृष्णशब्दाभ्यां प्रत्याय्यौ येन तयोरेकाधिकरणत्वं सामानाधिकरण्यं न स्यात्। नापि तयोः स्वतो विशेषणविशेष्यत्वं, द्रव्यावच्छेदे प्रवृत्तयोरन्योन्यसमन्वयाभावात्। तस्माद् द्रव्यद्वारेणैवात्र विशेषणविशेष्यभावो विवक्षितः। तिलशब्देन जातिनिष्ठस्य द्रव्यस्याभिधानात् कृष्णशब्दः प्रवृत्तिनिमित्तद्वारेण तत्र विशेषणमित्येव युक्तम् ॥ २२ ॥

यत्र तु द्रव्याभिधानं नास्ति केवलगुणाभिधानं तत्र नान्तरीयकद्रव्याक्षेपेऽपि विशेषणविशेष्यभावाभावात् समानाधिकरणसमासाभाव इत्याह।

21. 1. AE[3] °ण्यं मुख्यम्.
22. 1. IMP इष्टः.

**संस्तु रूपरसादीनामाश्रयो नाभिधीयते ।**
**द्रव्याभिधानेन विना ततस्ते द्वन्द्वभाविनः ॥ २३ ॥**

रूपरसादिशब्दाः स्वभावत एव द्रव्यान्निष्कृष्टरूपं स्वार्थमाचक्षते । निराश्रयस्य तु गुणस्याभावात् सामर्थ्याक्षिप्तमत्र द्रव्यम् । तथा चाभि[1]धाद्वारेण द्रव्य[2]स्याविषयीकरणाद् रूपरसयोः परस्परमसंबन्धाद् विशेषणविशेष्यभावाभाव इति समानाधिकरणसमासो न भवत्यत्र । अपि तु द्वन्द्वं भावयन्ते प्राप्नुवन्ति, द्वन्द्वो वा भावी एषामिति । द्वन्द्वपदवाच्या रूपरसादयः । ते वा रूपरसादिशब्दा द्वन्द्वभाजः । तदेवं सामानाधिकरण्यं विशेषण-विशेष्यभावश्चेत्युभयं विचारितम् ॥ २३ ॥

इदं तु वक्तव्यम्—कृष्णतिलशब्दयोर्द्वयोरपि द्रव्यशब्दत्वाद् गुणजातिनिमित्ताश्रयेण द्रव्ये प्रवृत्तेः समवायतिरोहितभेदत्वस्य समानत्वेन द्रव्य[1]व्यवधिना क्रियायोगस्य तुल्यत्वाद् विशेषणविशेष्यत्वानियम इत्युपसर्जनाप्रसिद्धौ चोदितायां द्रव्यं प्रधानमिति परिहृतं भाष्ये । तत् कथं जातिनिमित्तस्यैव द्रव्यशब्दत्वात् प्राधान्यं न गुणनिमित्तस्या-पीत्याह ।

**द्रव्याभिधायी कृष्णादिराङ्क्षावान् प्रवर्तते ।**
**निमित्तानुविधायित्वात् तत् तिलादौ न विद्येत ॥ २४ ॥**

इह गुणगुणिनोरभेदोपचारात् कृष्णशब्दो द्रव्यमभिधत्ते । क्रियया गुणो न साक्षात् संबन्धमुपैति, अपि तु द्रव्यद्वारेण, द्रव्यस्यैव शक्त्यधिकरणत्वादिति द्रव्याकाङ्क्षो गुणः क्रियायां प्रवर्तते । द्रव्येण च नित्यमपि[2] योगाभावात् ततो भिन्नः स्वयमनर्ह एव संबन्धे । तथाहि कदाचिद् द्रव्यान्निष्कृष्यापि गुणो व्यवह्रियते । उपजनापायौ हि गुणस्य द्रव्ये । अत एव मतुप् षष्ठी च भवति ।

अव्यतिरेकात् सिद्धमिति चेद् दृष्टो व्यतिरेकः

( Vā. 4. M. Bhā. III, p. 394, l. 10 )

इति चोक्तम् । जातिस्तूत्पत्तिप्रभृत्याविनाशाद् द्रव्येणाव्यभिचरितसंबन्धा, अरूप-कत्वात् । अतश्च निमित्तं जातिमुत्पत्तिकाल एव प्राप्तसंबन्धामलक्षितविवेकामनुवर्तते योऽभिधेयमुखेन तिलादिशब्दः तत्र तत्साकाङ्क्षप्रवृत्तित्वं नास्ति । यथा हि गुणो द्रव्याकाङ्क्षो भवन् क्रियया द्रव्यव्यवधिना समन्वयमेति नैवं जातिस्तद्रहितस्य द्रव्य-स्याभावात् । आत्मकल्पैव हि सा तस्येति साक्षादेव जातिमद् द्रव्यं क्रियायोगि । अतश्च

23. 1. M. °धानद्वा°. 2. M. °स्य विष°.
24. 1. A द्रव्याव्यव. 2. I. °त्यमवियोगा°.



जातिमद् द्रव्यं विशेष्यं प्रधानमुक्तं गुणो विशेषणमिति तदभिधायिनोरपि शब्दयोः परस्परावच्छेदकत्वेऽपि नियतो विशेषणविशेष्यभाव इत्यर्थः ॥ २४ ॥

तदेतदाह ।

**एवं जातिमति द्रव्ये प्रत्यासन्ने क्रियां प्रति ।**
**गुणधर्म गुणाविष्टं द्रव्यं भेदाय कल्पते ॥ २५ ॥**

**एवम्** इति । [1]यथोदितान्निमित्तानुविधानात् तिलशब्देन जात्याच्छुरितस्य द्रव्यस्य प्रतिपादनात् तस्यैव साक्षात् क्रियायोगः । कृष्णशब्देन तु गुणाच्छुरितं द्रव्यं न जात्याविष्टमिव अपि तु गुणस्येव स्वभावो यस्य तद् व्यवहितक्रियासंबन्धं गुणभूत-मुच्यत इति तद्विशेषणं विशेष्यावच्छेदादत्रेत्यर्थः । नीलोत्पलं पश्यति, स्वादु फलमा-स्वादयति, सुरभि कुसुममाजिघ्रति, [2]कर्कशशिलामामृशति, इति साक्षाद्योग्या अपि रूपादयो न दर्शनादिक्रियाभिः संबध्यन्ते, समुदायार्थस्य द्रव्यस्यैव विशेषणविशिष्टस्य श्रुत्यावेदितकर्मभावस्य क्रियासमन्वयावगमात् । उत्पलस्य रूपं पश्यतीत्यादावपि वास्तवेन रूपेण गुणस्य द्रव्यद्वारेणैव क्रियायोगः संयुक्तसमवायात् । श्रौतेन तु रूपेण रूपादि-भिरिदं तदिति सर्वनामप्र[3]त्यवमर्शयोग्यस्य द्रव्यस्यैव प्रतिपादनम् । एवं पटस्य रूपं जायत इत्यादावपि शाब्देन रूपेण द्रव्यमेव क्रियायोगीति गुणस्य द्रव्यव्यवधानेन क्रियासमन्वये नास्ति व्यभिचारः । एवं द्रव्याभिधायित्वेऽपि कृष्णादेर्गुणशब्दस्य विशेषणत्वमुपपादितम् ॥ २५ ॥

सम्प्रति तदभावेऽपि तत् प्रतिपादयितुमाह ।

**गुणमात्राभिधायित्वं केचिदिच्छन्ति वृत्तिषु ।**
**अजाश्वादिषु सम्बन्धाद् रूढीनामिव रूढिभिः ॥ २६ ॥**

वाक्ये कृष्णशब्दो गुणावच्छिन्नद्रव्यवचनः । वृत्तौ तु तिलशब्देनैव द्रव्यस्या-भिधानाद् गुणमात्रं तद्विशेषणभूतमाहेति युक्तम् । गुणविशिष्टस्य द्रव्यस्य प्रतीतेर्गुणो विशेषको व्यवस्थाप्यते । यथा राजपुरुष इत्यत्र षष्ठ्यभावेऽपि राजार्थः । दृष्टं च द्रव्यशब्द-स्यापि वृत्तौ गुणमात्राभिधायित्वम् । यथा अजाश्वो देवदत्त इत्यत्राजाश्वशब्दयो रूढ्या नियतजातीयद्रव्याभिधायित्वे विरोधात् संबन्धो न स्यादित्यविद्यमानजन्मानोऽश्वा यस्ये-त्यजन्मलक्षणधर्ममात्रवचनत्वेऽजशब्दस्य संबन्धोपपत्तिः, एवमिहापि भिन्नयोः कृष्णतिल-शब्दयोः संबन्धाभावाज्जातिशब्देनैव द्रव्यस्याख्यानात् तस्यैव पुनरभिधाने प्रयोजनाभावाद् गुणमात्रवचनः कृष्णशब्दः सामर्थ्याद् वृत्तौ व्यवतिष्ठते । एकार्थीभावकृतश्चायं वृत्तौ विशेष

25. 1. AE[3] यथोचि. 2. AE[3] °शिलामा°. 3. M °नामयोग्यस्य, P °मान(प्र)योगयोग्यस्य.

इति वृत्तिषु इत्याह । तथा च व्यतिरेकविभक्त्यभावेऽव्यतिरिच्यमानशरीर एव गुणो द्रव्यमत्र विशिनष्टि । यथा राजपुरुष इत्यत्र पुरुषार्थैकीभावमापन्नो राजार्थः पुरुषम् । मीमांसकास्तु राजशब्दो वृत्तौ लक्षणया पुरुषार्थमभिदधातीत्याहुः । तच्चायुक्तम्, मुख्यस्यैव राजार्थस्यैकार्थीभावाद्विशेषकत्वेन पुरुषार्थोपादानोपपत्तौ लक्षणाया अभावात् । मुख्यासंभवे हि साम्युपगमनीया । लक्षणायां च राजानं पुरुषमुपास्त इत्यत्र वाक्येऽपि राजशब्दः पुरुषं लक्षयेत् । स्वस्वामिसंबन्धश्च नियोगतो न प्रतीयेत । लक्षणायाः सामीप्यादिनिमित्ताया अपि भावात् । पुरुषशब्देनैव च पुरुषार्थस्य प्रतीतत्वान्न लक्षणा । कार्ष्णोत्तरासङ्गमाकर्षतीति च श्रुत्यर्थसम्भवे कथं लक्षणा । न चेदं नोपसर्जनमिति शक्यते वक्तुम् पूर्वपदप्रकृतिस्वरावधारणाद् बहुव्रीहित्वावसायात् ॥ २६ ॥

प्रकारान्तरेणापि गुणवचनस्य कृष्णादेर्विशेषणत्वे नियममाह ।

**तिले पूर्वमुपात्ते वा तत्रैव मतुबिष्यते ।**
**स च धर्मः समासेषु गुणस्तस्माद् विशेषणम् ॥ २७ ॥**

तिलजात्यवच्छिन्ने प्रथममुपात्ते विशेष्ये सामान्यस्वभावेनावसिते विशिष्टगुणतयावसायार्थं कृष्णशब्दः प्रवर्तमानो गुणवचनो मतुब्लोपात् तत्रैव वर्तते । अत्र हि कृष्णोऽस्यास्तीति मतुप् तिलद्रव्य एव हि संबन्धिनि सामर्थ्यात् गुणशब्दात् कृतः । तस्य

'गुणवचनेभ्यो लुक्'

(Vā. 3 on P. 5. 2. 94. M. Bhā. II. p 394, l. 7.)

इति लुक् सामर्थ्यलभ्यो नोक्तः । स च संबन्धाख्यो धर्मो मतुपः [1]प्रक्रमात् तदर्थत्वेन प्रत्यासत्तेरवगम्यमानः समासेष्वन्तर्भवति ।

'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्नः'

(M. Bhā. I. P 395, l. 5-6.)

इति । तस्मात् समासविषयात् संबन्धाख्यात् धर्माद्धेतोर्गुण एवावच्छेदकः, संबन्धेन द्रव्ये स्वरूपसमर्पणात् । जातिस्तु न गुणशब्देन पूर्वमुपात्तं द्रव्यमवच्छिनत्ति, गुणापेक्षया जातेरत्यासन्नत्वात् पूर्वं तदात्मनैव द्रव्यस्य निरूपणौचित्यात् । गतमेतत् ॥ २७ ॥

एवं समानाधिकरणवृत्तिं विचार्य द्वन्द्वैकशेषवृत्तिं विचारयितुमाह ।

**अनुस्यूतेव भेदाभ्यामेका प्रख्योपजायते ।**
**यदा सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः ॥ २८ ॥**

26. 1. P पुरुषैकार्थीभा°.
27. 1. E[3] क्रमात्.



[1]इहैकक्रियागुणनिवेशार्थमर्था बुद्ध्या निरूप्यमाणाः क्रियागुणद्वारेणेतरेतरस्यापेक्षया समुदायभावमापद्यमानाः साहभाव्येन वक्तुमभिप्रेता द्वन्द्वैकशेषलक्षणसमासपदवाच्या भवन्ति । समुदायश्चात्र नावयवव्यतिरिक्तः, अपि तु त एवावयवाः संहन्यन्ते । [2]तथा चात्रावयवभेदाभासानुविद्धा प्रतीतिर्नैयमिकी । अवयवाभासाच्च द्विवचनबहुवचने न विरुध्येते । न हि यथा समासान्तरेष्वेक एवान्यावच्छिन्नोऽर्थः प्रधानं तथात्र । सर्वेषां पदार्थानां समकक्ष्यत्वादवयवभेदानुगतैकप्रख्यावशाच्चोद्भूतावयवभेदः समुदायो वृत्तिपदवाच्यः । स चावयवाव्यतिरिक्त इत्यवयवशब्दैरेव व्यपदिश्यते धवखदिरपलाशा इति । यस्त्ववयवव्यतिरिक्तः स शब्दान्तरेणोच्यते समुदायो वनं यूथमित्यादि । एकप्रख्यान्यथानुपपत्तेश्चायं समुदायः परस्परापेक्षैः प्रत्येकमेव पदैरुच्यते । तत्रावधार्यमाणेन समुदायेन भेदरूपस्य तिरोधानाद् इव शब्दः । एकसमुदायाभिधायित्वेऽपि च द्वन्द्वस्य [3]पट्वीमृद्व्याविति समानाधिकरणलक्षणः पुंवद्भावो न भवति, वाक्ये व्यभिचारसम्भवात् तद्गतस्य समानाधिकरणत्वस्याश्रयणात् । वृत्तौ त्वेकार्थीभावात् तदव्यभिचारः । [3]पट्वी च मृद्वी चेति तु वाक्ये भेदप्रतीतिप्राधान्यम् । अत एव भेदाधिष्ठानेन समुच्चयेन योग इति समानाभिधेयत्वाभावः ॥ २८ ॥

भेदानुवेधस्य सहविवक्षायामविशेषात् समाहारेतरेतरयोः को भेद इत्यत आह ।

**इतरेतरयोगस्तु भिन्नसङ्ख्याभिधायिनाम् ।**
**प्रत्येकं च समूहोऽसौ समूहिषु समाप्यते ॥ २९ ॥**

सहविवक्षायामनेकानुस्यूतैकप्रख्यारूपायां [1]द्वैतमवयवप्राधान्यं सङ्घप्राधान्यं च । तत्रावयवप्राधान्यमितरेतरयोगस्य विषयः । तथाहि— भिन्नमुद्भूतभेदं सङ्ख्यं समूहं येऽभिदधति तेषामयं वाच्यो द्वन्द्वपदानाम् । प्रतिभागं ह्यसौ समूहः पर्यवस्यति । तत एकैकस्यापि वाच्यः । प्रत्यवयवसमाप्तो हि समुदाय एकावयवदृष्टावपि गृह्यते । एवमेकावयववाचकेनाप्यभिधीयते । यथा च भूयोऽवयवदृष्टौ स्फुटमवधार्यते तथा समुदायादपि स्पष्टार्थाभिधायिनः स्फुटा प्रतीतिः । तथा च प्रत्यवयवं प्रतिपत्तावपि न शब्दान्तरवैयर्थ्यम् । संघप्राधान्ये तु समाहार इत्यर्थादुक्तम् । इत्यमनुस्यूतभेदत्वे समानेऽप्ययं विशेषस्तु शब्दयोल्योऽवयवप्राधान्यलक्षणः । अयमेव चैकशेषस्यापि द्वन्द्वापवादस्य विषयः ॥ २९ ॥

उद्भूतावयवभेदः समुदायः प्रत्यवयवसमाप्तोऽभिधीयत इत्यत्र सदृशं निदर्शनमाह ।

**व्यापारसमुदायस्य यथाविश्रयणादिषु ।**
**प्रत्येकं जातिवद् वृत्तिस्तथा द्वन्द्वपदेष्वपि ॥ ३० ॥**

28. 1. M. ins, before इहैक° the following-पट्वीमृद्व्यौ । समासे तु एव-प्येकार्थवृत्तिता । भिन्नमत्राधिकरणं प्राग्वृत्तेस्तत्र गृह्यते । 2 . A यथा. 3. AE[3] पद्वी.
29. 1. A °यां चैतदव, E[3], I °यां चैतमव° M. om. संघप्राधान्यं.

क्रमिकस्य पूर्वापरीभूतस्य क्रियाकलापस्य पच्यादेः यथाक्रममधिश्रयणादिव्यापाररूपे भागे[1] जातेरिवाध्यासाद् वृत्तेः स एको दृश्यमानो वर्तमानः क्रियावयवः पचतीति [2]वर्तमानकालाभिधायिप्रत्ययान्तपदवाच्यो यथा समर्थितः प्राक् एवं द्वन्द्वपदवाच्योऽपि समुदायः प्रत्यवयववृत्तिरिति प्रतिपदमाभिधेयकमापद्यते । द्वन्द्वपदार्थेष्वेकैकस्यान्यापेक्षाप्रतीतिरवयवान्तरश्रवणे परिसमाप्यते । इयमेव चात्रावयवानुविद्धसमुदायप्रतीतिः । जातिरपि प्रतिव्यक्ति परिसमाप्तेत्येकैकव्यक्त्यभिधायिनापि गवादिशब्देन प्रत्याय्यते । प्रथमव्यक्ति[3]दर्शनेऽस्पष्टावभासा व्यक्त्यन्तरग्रहणे स्फुटीभवति । एवमन्योन्यापेक्षिणामधिश्रयणादीनां पचिप्रत्ययः स्फुटः ॥ ३० ॥

स्यादेतत् । तादर्थ्यादधिश्रयणादिरपि पचिरिति युक्तं तत्राभिधानम्, जातावपि जातिशब्देन । इह पुनर्धवखदिरादिशब्दः पृथगर्थतया वाक्येषु ज्ञातः कथमेकार्थाभिधायी वृत्तौ स्यादित्याशङ्क्य दृष्टान्तेन व्युत्पादयति ।

**शौण्डार्धर्चपुरोडाशच्छत्रिणोऽत्र निदर्शनम् ।**
**ते विष्णुमित्रा इति च भिन्नेषु सहचारिषु ॥ ३१ ॥**

' सप्तमी शौण्डैः ' ( P. 2. 1. 40. )
' अर्धर्चाः पुंसि च ' ( P. 2. 4. 31. )

इत्यत्र गणपठितधूर्तादिशब्दभेदाश्रयं बहुवचनम् । तच्चैवमुपपद्यते यदि धूर्तादयोऽपि शौण्डादिशब्दवाच्याः । कथं च ते तथा भवन्ति यदि (न?) साहचर्यादध्यारोपितशौण्डादिभावाः । एवं पुरोडाशा इति बहुवचनान्यथानुपपत्तेः सहचरिता अपि करम्भपरिवापधानापयस्या अभिधीयन्ते । तथा छत्रिणो यान्ति ध्वाजिनो यान्ति, ते विष्णुमित्रा इति साहचर्यादध्यारोपितान्यथारूपास्तच्छब्दवाच्या दृष्टाः । एवं द्वन्द्वैकशेषयोर्द्विवचनबहुवचनान्यथानुपपत्त्या प्रतिपदमनेकार्थत्वमवस्थाप्यते । एकक्रियागुणविषयत्वेन साहचर्यात् परस्पररूपापत्तेः ॥ ३१ ॥

तदाह ।

**अर्थान्तराभिधायित्वं तथार्थान्तरवर्ति[1]नाम् ।**
**याभ्यां चैकमनेकार्थं ताभ्यामेवापरं पदम् ॥ ३२ ॥**

30. 1. E³ om. भागे, P भावे. 2 AE³ °धायी लट्प्रत्य. 3 A स्पष्टानवभासा E³ ने यदि स्पष्टाव°, M. °नेऽवमृष्टाव°.

31. 1. E³ om. तथा.

32. 1. AE³ र्तिना.



यथा शौण्डादिषु साहचर्यादर्थान्तराभिधानं तथात्रेति दार्ष्टान्तिके योजितम् । सहचरितयोरेव परस्पररूपाध्यासेनाभिधानेऽन्यस्यासहचरितस्याभिधानाभावादुपात्ताभ्यामेव धवखदिरावित्यत्र प्रत्येकमनेकार्थता । तथा च बहुवचनाभाव इत्याशयः । क्रिया चार्थान्तरेऽध्यासहेतुरत्रोक्ता, यदि प्रक्षरतीति प्लक्षो न्यग्रोधेऽप्येतत् तुल्यमिति । तदेवं वार्तिककारोक्ता युगपदधिकरणता व्याख्याता । स हि

" चार्थे द्वन्द्ववचने असमासेऽपि चार्थसम्प्रत्य[2]यादनिष्टप्रसङ्गः "
( Vā. 1 on P. 2. 2. 29., M. Bhā I. p. 431, l. 1. )

इति चोदयित्वा

' सिद्धं तु युगपदधिकरणे द्वन्द्ववचनात् ' ( Ibid. Vā. 2. )

इति न्यासान्तरं पपाठ । युगपदेकेन शब्देन यदाधिकरणमभिधेयं द्वन्द्वपदवाच्यमभिधीयते समुदायरूपं परस्परारोपितस्वार्थं तदा द्वन्द्वो वक्तव्य इत्यर्थः । एवं सहविवक्षायां द्वन्द्व इत्युक्तं भवति । तत्रैव युगपदधिकरणवचनतायाः समर्थितत्वात् । ननु चाभिधानक्रमादभिधेयक्रमोऽवश्यंभावीति कथं हि युगपदधिकरणवचनता । नैतत् । प्लक्षन्यग्रोधौ धवखदिरपलाशा इत्यत्र यदि न्यग्रोधार्थप्रतिपत्तिकाले प्लक्षार्थस्य नावगतिः पलाशार्थप्रतिपत्तिकाले च यदि धवाद्यर्थस्य नावगतिः तदा न्यग्रोधपलाशशब्दयोरेकार्थत्वादेकवचनमेव स्याद्, न द्विवचनबहुवचने । अतो द्विवचनबहुवचनान्यथानुपपत्त्यात्रैकैकोऽपि शब्दोऽनेकार्थाभिधायीत्यनुमानाद् युगपद्वाचिता निश्चीयते । तदुक्तं

" शब्दपौर्वापर्यादर्थपौर्वापर्याभिधानमिति चेद् द्विवचनबहुवचनानुपपत्तिः "
( Vā. 10 on P. 2. 2. 29, M. Bhā. I, p. 431, l. 25. )

इति उद्भूतावयवभेदश्च समुदाय इति समुदाश्रयमेकवचनं न चोदनीयम् । साहचर्यं चार्थान्तराभिधाने हेतुर्लोकप्रसि[3]द्धयार्थान्तरत्वात् कथ्यते । प्रक्षरणं तु विस्तारेणावस्थानं न्यग्रोधेऽप्यस्तीति तस्यासौ स्वार्थ एव । तदुक्तं

" कारणाद् द्रव्ये शब्दनिवेश इति चेत् तुल्यकारणत्वात् सिद्धम् "
( Vā. 10. on P. 2. 2. 29., M. Bhā. I. p. 432, l. 26. )

इति । न चैवमतिप्रसङ्गो वाक्येऽपि न्यग्रोधशब्देन प्लक्षार्थस्य प्रतिपादनप्रसङ्गात् । यतस्तद्विषयं[4] चेत्युक्तम् । वृत्तिविषये शब्दानां शक्तिवैचित्र्यादर्थान्तराभिधानं न तु सर्वत्रेत्यर्थः । अत एव तत्र साहचर्यादितदितीतरस्याप्रयोगे तदभाव उक्तः । एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेद् अनुक्तत्वात् प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोग

2. A °प्रत्ययः. 3. AE³ द्धया°. 4. AE³ °यश्चेयु°.

इति । एवं चेतरेतरसंनिधाने भारोघन्तृवत् परस्परशक्त्याविर्भावनाद् नियतविषयमेव परस्पराभिधानं शब्दानामित्युक्तम्

‘ अभिधानं पुनः स्वाभाविकम् ’ ( M. Bhā. I. p. 434, l. 3. )

इति । तदेवं समर्थिता युगपदधिकरणवचनता । भाष्यकोरण तु

‘ दुःखा दुरुपपादा चेयम् ’

इत्युक्त्वा पाणिनीय एव सूत्रन्यासः समर्थितः किल । नेयं प्रतीतावुपारोहतीति दुःखा, प्रमाणाभावाच्च दुरुपपादा ॥ ३२ ॥

तद् व्याचष्टे ।

**समुदायान्तरत्वाच्च तादृशोऽर्थो न लौकिकः ।**
**अन्वयव्यतिरेकाभ्यां शास्त्रार्थोऽपि न दृश्यते ॥ ३३ ॥**

इह लोकाच्छब्दार्थावसायः । न चात्र स्थितलक्षणो लौकिको[1] व्यवहारोपयोगी प्रत्येकं पदवाच्योऽर्थो नैकोऽवधार्यते । न हि शब्दान्तरस्य शब्दान्तरार्थाभिधानं लोके दृश्यते । रूढत्वाच्च लौकिकस्यार्थस्य प्रक्षरणमात्रान्न्यग्रोधः प्लक्षो नोच्यते । न हि गमनाद् गौरिति पुरुषोऽपि गच्छन् गौरित्यभिधीयते । तस्माद् द्वन्द्वलक्षणेन समुदायेनायमन्य एवावयववाच्यात् समुदायादभिधीयमानः समुदायो विज्ञेयोऽलौ[2]किकः । अथ [3]प्रकृतिप्रत्ययार्थवदापोद्धारिकोऽयमन्वयव्यतिरेकलभ्यः शास्त्रीयोऽत्र प्रत्येकं द्वन्द्वपदवाच्योऽर्थः, तदपि न । यस्मादन्वयव्यतिरेकाभ्यामत्र स्वार्थ एव प्रसिद्धः प्रत्येकं पदानामवधार्यते, न त्वर्थान्तराभिधानशक्तिरवधारयितुं पार्यते । प्लक्षशब्दसन्निधाने हि न्यग्रोधस्य प्लक्षोऽप्यर्थ इत्युच्यते, प्रतीतेः । सा च प्रतीतिस्तस्य स्वशब्दादेव सिद्धेति न स्तोऽन्वयव्यतिरेकौ । काममेकशेषे शब्दान्तरस्याप्रयोगाद् भारोघन्तृन्यायेन परस्परं शक्त्याविर्भावनादेकस्यानेकार्थप्रत्यायनशक्तत्वमनेन न्यायेन व्युत्पाद्यते । स्ववाचकस्यैवानुपहतशक्तेस्तु द्वन्द्वे सम्भवात् कुतोऽप्रतीता शब्दान्तरस्य तत्र शक्तिः कल्प्येत । उद्भूतावयवभेदस्य तु समुदायस्य समासवाच्यत्वात् द्विवचनबहुवचनोपपत्तिः । समासाद्धि द्विवचनबहुचने जायेते, नोत्तरपदमात्राद्, येन तदर्थस्य द्वित्वादियोगसमर्थने प्रयस्येत । एकक्रियागुणनिवेशापेक्षया चानेकोऽर्थः प्रत्ययैकया विषयीक्रियमाणोऽशक्योऽभिधातुमेकेन शब्देनेति पदसमूहाख्येन समासेनाभिधीयते । स च समासशब्दोऽन्वाख्येयो निरंशोऽपि [4]भागकल्पनेन व्युत्पाद्यते । ते च भागाः पृथक् पदान्तरसदृशा इति तदर्था

33. 1. IP°णोऽलौकिको°. 2. AE³ लौकि°कः. 3. AE³ °यार्थपदापोद्धा°.
4. AE³ विभाग°.



एवानुगम्यन्ते । तथा च प्रविभागेनानुशासने साकाङ्क्षमपि पदं स्वार्थ एव पर्यवस्यति । अपेक्षामात्रप्रभावितश्चायं समुदायः क्रमवतामर्थानामात्मभूतः । स कथं पदार्थमात्रप्रतीतौ प्रतिभासेत येनोत्तरपदार्थप्रतीतावेव वचनं शङ्क्येत । सङ्कलनाप्रत्ययविषयत्वात् समुदायस्य भूयोऽवयवावधारणकालेऽवधारणात् । न च विशेषणविशेष्यभावायोगाद् द्वन्द्वपदार्था न संहन्यन्त इति शङ्कनीयम् । सर्वस्य नामपदार्थस्य क्रिययैव [5]संसर्गात् । कस्यचित्तु साक्षात्क्रियया संबन्धोऽन्यस्य तु तद्विशेषणत्वेनेत्येतावान् समासान्तरेषु भेदः । द्वन्द्वे[6] तु समुदायविभक्त्या समुदायार्थस्य क्रियासंबन्धद्योतनादवयवार्थाः क्रियार्थिनः समुदायात्मतामापद्यन्ते । एतच्च परस्यापि मतम् । कथमन्यथैकैकोऽपि द्व्यर्थः स्यात् । द्वयोरेवार्थयोरपेक्षावतोः समुदायत्वात् । अत एवान्योन्यापेक्षायाः समुदायादेवार्थानामवगतेश्चरितार्थत्वाच्चशब्दो निवर्तते । वाक्ये त्वर्थानां विच्छेदप्रतिभासात् समुच्चयद्योतने च शब्दोऽपेक्ष्यते । तस्मात् समुदायादेवान्योन्यापेक्षाप्रभावितद्वित्वादियोगिनो द्विवचनबहुवचनयोरुपपत्तौ न काचिद् विप्रतिपत्तिः ॥ ३३ ॥

यत एवं

**दुःखा दुरुपपादा च तस्माद् भाष्येऽप्युदाहृता ।**
**युगपद्वाचिता सा तु व्यवहारार्थमाश्रिता ॥ ३४ ॥**

दुःखयति न चेतः परितोषयति इति **दुःखा** प्रतीतावनुपारोहात्, प्रयोजनस्य चान्यथासिद्धेः । अत एव प्रमाणाभावात् परस्य सुखेन प्रतिपादयितुं न पार्यत इति **दुरुपपादा** । सङ्कलनाविषयाश्चार्थाः समासान्तरेऽपि समुदायभावमापद्यन्त इत्यस्ति सहविवक्षा । एकजातीयविषयाश्चार्था भवन्त्येकशब्दवाच्या एकशेष इति सहविवक्षायामियं व्याहता युगपदधिकरणवचनता दुरुपपादेति वदता भाष्यकारेण कृच्छ्रोपपादनाय [1]युक्ति गर्भीकृता, ततश्चेयमङ्गीकृतैवेति ॥ ३४ ॥

तत्संभावनाबीजमाह ।

**समुदायमुपक्रम्य पदं तस्यां प्रयुज्यते ।**
**विभागेन समाख्याने ततस्तद् द्व्यर्थमुच्यते ॥ ३५ ॥**

इह प्लक्षन्यग्रोधौ धवखदिरपलाशा इत्यादिः समुदायो लौकिकोऽन्वाख्येयः शब्दोऽवयवविभागकल्पनया व्युत्पाद्यते । तत्र च यावानर्थस्तावानेव विभज्यमानस्यावयवस्यावस्थाप्यते । अत्र हि विषये यः प्लक्षादिशब्दोऽवयवः स स्वार्थमात्रे न विश्रान्तः, अपि तु

5. P. संसर्गः. 6. A द्वन्द्वेषु तु.
34. 1. P om. युक्तिः

परिसमाप्तार्थवचनः (परसंक्रान्तार्थवचनः ?) तथा च समुदायोपक्रमे परस्परसंबन्धादन्विताभि धाननयेन प्रत्येकं पदमितरपदार्थानुगतार्थाभिधानादनेकार्थमेव । तस्यां युगपद्विवक्षायां समुदायमभिधेयमुद्दिश्य प्रयुज्यते इति तथैव प्रक्रियायां प्लक्षौ च न्यग्रोधौ चेति द्व्यर्थस्यैवापोद्धारवाक्यम् । एवं धवखदिरपलाशा इत्यत्र बह्वर्थस्यापीति बोद्धव्यम् । विवक्षोपारूढो ह्यर्थः
5 शब्दानाम् । अत्र चैतावती विवक्षा । परमार्थतस्त्वभिन्न एव समासोऽर्थसमुदा[1]याभिधायीति न वाक्येऽनेकार्थत्वं लौकिकेऽस्ति । प्रक्रियावाक्ये त्ववयवधर्मेण समुदायाभिधानात् प्लक्षावयवत्वादुद्भूतावयवभेदोऽयं समुदायः प्लक्षौ न्यग्रोधावयवत्वाच्च न्यग्रोधावित्युच्यते । तद् यथा समावयवत्वात् समं चूर्णमिति । वृत्तौ त्वेकार्थीभावाद् भेदस्य विगलनात् तदधिष्ठानसमुच्चयद्योतनचशब्दा[2]प्रयोगात् समुदाये समप्राधान्येनावयवशब्दो वर्तते।
10 अन्यथा समप्राधान्याद् द्वन्द्वपदानां तदर्थस्य साक्षात्क्रियासंबन्धसंभवादितरेतरोपश्लेषाभावे वाक्य इव विभक्तार्थाभिधायित्वाद् द्विवचनाद्यनुपपत्तिरेव स्यात् । समासान्तरेषु हि प्रधानमुखेनोपसर्जनं क्रियया युज्यत इति तेन संसृज्येत, न तु द्वन्द्वे, सर्वेषां समप्रधानत्वात् । तस्मात्तत्रैकैकेन पदेन समुदायार्थाभिधानमवश्याभ्युपगन्तव्यं येन परस्परार्थसमन्वयोपपत्तावुद्भूतभेदस्य समुदायस्याभिधानाद् द्विवचनबहुवचनोपपत्तिः । आश्रयतो हि लिङ्गवचना-
15 न्यत्र प्रतिपादयिष्यन्ते । वृत्तिवाक्ययोश्च शब्दशक्तिवैचित्र्यं सुप्रसिद्धमिति वाक्ये लौकिकेऽ[3]दृष्टार्थान्तराभिधानशक्तिरपि शब्दो वृत्तौ तदभिधायी युज्यते । अत एवोक्तं

‘ तद्विषयं च ’ ( Vā. 12, on P. 2.2.29 M. Bhā. I. p. 433, l. 8. )

इति । इति सिद्धा युगपदधिकरणवचनता द्वन्द्वैकशेषयोः ॥ ३५ ॥

एकमेव शब्दशक्तिवैचित्र्यकृतं विशेषं वृत्तिवाक्ययोः प्रतिपादयति ।

20 **वाक्येऽपि नियताः धर्माः केचिद् वृत्तौ द्वयोस्तथा ।**
**ते त्वभेदेन सामर्थ्यमात्र एवोपवर्णिताः ॥ ३६ ॥**

वाक्ये व्यपेक्षायां केचिदर्थभेदा[1] नियताः, केचिद् वृत्तावेकार्थीभावे, केचिद् वृत्तिवाक्ययोर्द्वयोः साधारणा इति यद्य[2]पि भेदः तथापि नासाविदन्तया विषयभेदेन शास्त्रे निर्दिष्टः । अपि तु

25 “ समर्थः पदविधिः ” ( P. 2. I. 1. )

इति सामर्थ्यसामान्य एव निरूपिता भिन्ना धर्माः । अनाश्रितविशेषे सामर्थ्ये निर्दिष्टे सति यथायथं ते [3]विभक्ताः । सामर्थ्यमात्रमेतन्नियत[4]रूपमुक्तमित्यर्थः ॥ ३६ ॥

---

35. 1. AE[3] P °दायार्थाभि°. 2. A °शब्दासज्ञात E[3] °शब्दाप्रसङ्गात.
3. AE[3]IP °किके दृ°

36. 1. AE[3] °दाश्रिय°, I °दनिय° 2. M. ins. प्रधानपदस्यार्थेन सह तादात्म्यापन्न उपसर्जनार्थ एकोऽर्थ after यद्य. 3. E[3] विविक्ताः 4. I °नियमरूप°, M. °निरूपकम्°



एवं सामान्येनाभिधाय विशेषेण निर्णेतुमाह—

**वृत्तौ विशेषवृत्तित्वाद् भेदे सामान्यवा[1]चिता ।**
**उपमानसमासादौ श्यामादीनामुदाहृता ॥ ३७ ॥**

“ उपमानानि सामान्यवचनैः ” ( P. 2. 1. 55 )

5 इत्यत्र शस्त्रीश्यामेत्युदाहृतम् । तथा च श्यामाशब्दो विशिष्टायां शस्त्र्यामुपमानभूतायां तदुपमितायां वा देवदत्तायां वर्तत इति विशेषवृत्तित्वात् कथं सामान्यवचन इति चोद्ये

“ प्रागभिसंबन्धाद् यः सामान्यवचनः ” ( M. Bhā I, p. 398, l. 19 )

इति भाष्ये समर्थितम् । आभिमुख्येन स्वभावसंभेदे[2]न यत्र पदार्थाः संबध्यन्ते असौ समासोऽभिसंबन्धशब्देनात्रोक्तः । तस्मात् प्राग् भेदे वाक्ये पृथगर्थत्वात् सामान्यवचनाः
10 श्यामादयः । शस्त्रीव श्यामेत्यत्र हि श्यामत्वसामान्यमुपमानोपमेयगतमाश्रित्य श्यामशब्दः प्रवृत्तः । वृत्तावेकार्थीभावादस्य विशेषावरोधः । एवमन्यत्रापि बोद्धव्यमुपमितसमासादौ ॥ ३७ ॥

उदाहरणान्तरमाह ।

**वृत्तिरन्यपदार्थे या तस्या वाक्येष्वसंभवः ।**
15 **चार्थे द्वन्द्वपदानां च भेदे वृत्तिर्न विद्यते ॥ ३८ ॥**

स्निग्धानि किसलयान्यस्येति वाक्ये पदानाम् **अन्यपदार्थे** स्निग्धकिसलयो वनस्पतिरिति वृत्तिवद् वृत्तिः नास्ति, अस्येत्यन्यपदार्थस्य स्वशब्देनैव वाक्ये ग[1]मितत्वात् । वृत्तौ तु मत्वर्थस्य संबन्धस्यान्तर्भावात् पदान्येकार्थीभूय संबन्धिनं प्रतिपादयन्ति । तथा **द्वन्द्वपदानां भेदे** वाक्ये चार्थे समाहारेतरेतरयोगलक्षणे वृत्तिः नास्तीति तत्र चशब्दो
20 वाचकः प्रयुज्यते । वृत्तौ त्वेकक्रियावशात् समुदितार्थाभिधायीनि पदानीति तत्र समुच्चितप्रधाने चो न प्रयुज्यते ॥ ३८ ॥

**भेदे सति निरादीनां क्रान्ताद्यर्थेष्वसंभवः ।**
**प्राग्वृत्तेर्जातिवाचित्वं न च गौरखरादिषु ॥ ३९ ॥**

भिद्यन्तेऽस्मिन्नर्था इति भेदो वाक्यं तत्र **निरादीनां** निष्क्रान्तः कौशाम्ब्या
25 इत्यादौ क्रान्ताद्यर्थवाचित्वं नास्तीति क्रान्तादेः साक्षात्तत्र प्रयोगः । वृत्तौ तु निष्कौशाम्बिरित्यादावस्ति क्रान्ताद्यर्थाभिधानम् । वाक्ये हि निरादीनामसत्त्ववाचिनां क्रियायोगिनि क्रान्तादौ द्रव्ये वृत्तिर्न संभवति । समासे तु पूर्वपदार्थस्य प्राधान्यादनेक-

---

37. 1. M. °न्यमेतदविचिता. 2. A °वसंबन्धेन भेदेन.

38. 1. A °क्येऽवगमितत्वात्, E[3] °क्ये नमितत्वात्.

क्रियायोगी द्रव्यभूतस्तदर्थोऽभिधीयते। [1]सोऽयमेकार्थीभावकृतो विशेषः। तथा गौरखरः कृष्णसर्पो लोहितशालिरित्यादिवृत्तिपदात् प्राग्वाक्ये जातिविशेषप्रत्यायनसामर्थ्यं नास्ति। न हि गौरः खरः, कृष्णः सर्पो, लोहितः शालिरित्यत्र जातिविशेषप्रतीतिः, पदसमुदाया[2]नभिधेयत्वाज्जातेर्वर्णविशेषावच्छिन्नस्यार्थस्य प्रतीतेः। जातिविशेषे तु वर्णविशेषा-
5 नादरः। ऐकार्थ्यात् तु समासेनैकपदत्वाद् विशिष्टा जातिरुच्यते। तथा च[3] जात्यभिसंबन्धे विवक्षिते कर्मधारयान्मत्वर्थीयो भवति गौरखरवदरण्यं कृष्णसर्पवान् वल्मीकः लोहितशालिमान् ग्राम इति। तेनात्र कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् प्रकृतस्येत्येतन्नावतरति। लोहितशालिर्ग्राम इति ह्युक्ते विशिष्टजातीयशालिसंबन्धो विवक्षितो न गम्येत। एवमुदाहरणान्तरेऽपि योज्यम्। तथा च भाष्यम्।
10 'अस्त्यत्र विशेषो जात्यात्र संबन्धः क्रियते' (M. Bhā. I, p. 404, l. 18)
इति ॥ ३९ ॥

तदेकस्मिन् वृत्तिवाक्ययोः स्वाभाविके विशेषे संवादकमाचार्यमतमाह।

**क्रीडायां जीविकायां च वाक्येनावचनात्तथा।**
**न नित्यग्रहणं युक्तं कौटिल्ये यङ्विधौ यथा ॥ ४० ॥**

15 वार्तिककारः पपाठ —
'उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम्' (Vā. 6. on P. 3. 1. 22. M. Bhā. II. p. 30, l. 9.)
इति।
'नित्यं कौटिल्ये गतौ' (P. 3. 1. 23.)
20 लुपसद.... (P. 3. 1. 24.)
इत्यनयोर्योगयोर्वाक्यनिवृत्त्यर्थं नित्यग्रहणं न कार्यम्, वाक्येन गतिकौटिल्यस्य भावगर्हायाश्चाग[1]मितत्वात्। कुटिलं क्रामतीति चेतःकौटिल्येनासदाचारस्यापि प्रतीतेः। चङ्क्रम्यत इति तु गतप्रत्यागतोपाधिः क्रियाविशेषः प्रतीयते। एवं गर्हितं लुम्पतीति धात्वर्थगर्हा नियोगतो न प्रतीयते। साधनगर्हाया अपि प्रतिपत्तेः। लोलुप्यत इति तु वृत्तौ भावगर्हाप्रतिपत्तिः। अनेनैव न्यायेन
25 नित्यं क्रीडाजीविकयोः। (P. 2. 2. 17.)
इत्यत्र नित्यग्रहणं प्रत्याख्येयमिति निदर्शनव्याजेन तदप्युदाहृतम्। यदि वा यथा
'नित्यं कौटिल्ये . . .

39. 1. M. om. सोऽयम्--°धेयत्वाज्जातेर्वर्ण. 2. I om. °नभिधेयत्वात्--विवक्षिते कर्मधारयान्म. 3. AE[3] चात्र.
40. 1. P. °श्चाभिहितत्वात्.



इत्यत्र साक्षान्नित्यग्रहणस्य वार्त्तिके प्रत्याख्यानं तथा[2]
'नित्यं क्रीडाजीविकयोः'
इत्यस्येति साध्यतयोपन्यासः। तदितरस्य निदर्शनत्वेन, सिद्धस्य च निदर्शनत्वात्। तदेवाचार्यमतं संवादकमुपपद्यते। उद्दालकपुष्पस्य भञ्जिका, दन्तानां लेखक
5 इति वाक्यात् क्रीडाजीविकयोरप्रतिपत्तिः। क्रीडानङ्गीभूतस्य जीवनानुपायरूपस्याप्यर्थस्य प्रतीतेः। एवं क्रियासमभिहारस्यापि चङ्क्रम्यते लोलुप्यते इत्यतोऽप्रतीतेर्नैतेभ्यस्तत्र यङ् भवति। तथा चोक्तम्।
'क्रियासमभिहारे च नैतेभ्यः' (Vā. 7on P, 3. 1.22. M. Bhā. II p. 30 1. 12.)
10 इति। एतदर्थं केचिन्नित्यग्रहणं व्याचक्षते—'कुटिलायां गतौ नित्यं, भावगर्हायां नित्यं, न क्रियासमभिहारे' इति[3]। यथा[4] च वाक्याद् विवक्षितार्थानवगमात् प्रत्याख्यातं नित्यग्रहणं तथा क्रियासमभिहारानवगमादेव तत्र प्रत्ययाभावादेतदर्थमपि न नित्यग्रहणम्। वचनानुसारिणं तु प्रति वाक्यनिवृत्त्यर्थमपि तद् भवितुमर्हति। यथा चैते वृत्तिविषया विशेषाः तथा संख्याविशेष उपसर्जनविशेषणं चयोगो व्यक्ताभिधानमिति
15 वाक्यैकनियता विशेषाः प्रोक्ताः। विशेषणविशेष्यभावादयस्तु द्वयोरप्यनुसर्तव्याः ॥४०॥
एवं वृत्तिवाक्यवैधर्म्ये सति

**निर्धारणादिविषये व्यपेक्षैव यतः स्थिता।**
**समासप्रतिषेधानां ततो नास्ति प्रयोजनम् ॥ ४१ ॥**

व्यपेक्षालक्षणसामर्थ्यं वाक्यैकनियतनिर्धारणविषये व्यवस्थितं स्वभावतो नियत-
20 मिति गवां कृष्णा संपन्नक्षीरतमेति
"न निर्धारणे" (P. 2. 2. 10.)
इति समासप्रतिषेधो नारम्भणीयः। न ह्यत्रैकार्थीभावे समासे कृते गोकृष्णा संपन्नक्षीरतमेति निर्धारणं प्रतीयते। निर्धारणहेतोर्बाह्यस्यापेक्षणीयस्य भावादसामर्थ्यादत्र समासाभाव इति तात्पर्यम्।
25 एवं
'पूरण..........' (P. 2, 2. 11.)
इत्यादिरपि प्रतिषेधोऽशिष्य इत्यनुसरणीयम् ॥ ४१ ॥

2. AE[3] न तथा. 3. A here inserts–विविक्षितार्थानवगमात्, क्रियासमभिहारस्यापि चङ्क्रम्यते लोलुप्यते इत्यतोऽप्रतीतेर्नैतेभ्यः before इति. 4. A om. यथा च वाक्यात् प्रत्याख्यातं नित्यग्रहणं तथा क्रिया.
41. 1. E[3] गवां कृ°.

ज्ञापकत्वात्तु शास्त्रस्य स्वभावसिद्धमेव शक्तिवैचित्र्यं शब्दानामनुगन्तुं शास्त्रारम्भ इत्याह ।

**विधिभिः प्रतिषेधैश्च भेदा[1]भेदनिदर्शन[2]म् ।**
**कृतं द्वन्द्वैकवद्भावे सङ्घवृत्त्युपदेशवत् ॥ ४२ ॥**

समासविधिना [3]अभेदः संसर्ग एकार्थीभावः स्वभावसिद्धो ज्ञाप्यते, प्रतिषेधेन तु [4]भेदोऽसं[5]सर्गो व्यपेक्षालक्षणो मन्दमतीन् प्रति । तद् यथा—द्वन्द्वस्य प्राणितूर्याङ्गादौ स्वाभाविकी सङ्घे समाहारे तिरोहितावयवभेदे वृत्तिः

"प्राणितूर्यसेनाङ्गानाम्" (P. 2. 4. 2.)

इत्येकवद्भावशास्त्रेण समाहार एवेति नियमेनान्वाख्यायते । दधिपयःप्रभृतीनां तु स्वाभाविकी प्रोद्भू[6]तावयवभेदे इतरेतरयोगे प्रवृत्तिः प्रतिषेधेन । विभाषावचनेन वृक्षमृगादीनामुभयत्रेति शास्त्रमनुवादकम् । न ह्यसती शब्दानां शक्तिर्वचनशतेनापि कर्तुं[7] पार्यते ।

"न वा समाहारैकत्वात्" (vā. 7 on P. 2. 4. 1, M. Bhā. I. p. 473. l. 6.)

इत्येकवद्भावप्रत्याख्यानस्य साक्षादुक्तत्वात् सिद्धत्वे सति निदर्शनत्वेनात्रोपन्यासः । न्यायस्तु समानः ॥ ४२ ॥

तदेवं वृत्तिवाक्ययोः

"समर्थः पदविधिः" ((P. 2. 1. 1.)

इत्यत्र सामान्येन यत् सामर्थ्यं निर्दिष्टं तदेव व्यपेक्षैकार्थीभावलक्षणभेदेन शब्दशक्त्यनुसारिभिर्विभक्तमित्याह ।

**सामर्थ्यमविशेषोक्तमपि लोकव्यवस्थया ।**
**वृत्त्यवृत्त्योः प्रयोगज्ञैर्विभक्तं प्रतिपत्तृभिः ॥ ४३ ॥**

समर्थपदेन सामान्यवाचिना सङ्गतार्थत्वं वृत्तिवाक्यगतमविशिष्टमित्युक्तम् । लक्ष्यैस्तु लक्ष्यमूलत्वात् स्मृतेः सूत्रकाराशयमनुसृत्य वृत्तावेकार्थीभावो वाक्ये व्यपेक्षेति विभागः कृतः । तथा च परिभाषापक्षे षत्वादिविधावपि व्यपेक्षासामर्थ्यसम्भवादस्यैव व्यापारः । नियतविषयत्वाच्च सामर्थ्यभेदस्य

'चवचनानर्थक्यं च स्वभावसिद्धत्वात्' (vā 2. on P. 2. 1. 1. M. Bhā. I, p. 364, l. 1.)

---

42. 1. M. भेदनिदर्शनम्. 2. I °निदर्शनः 3. AE³ भेदः 4. A °षेधेनाभेदो. 5. E³ संसर्गो. 6. M. has a gap here. 7. M. has a gap here.



इत्युक्तम् । एकार्थीभावकृताश्च वृत्तौ कान्ताद्यर्थप्रतीत्यादयो विशेषा उक्ताः । वाक्ये त्वेकार्थीभावाभावकृताः संख्याविशेषादयः ॥ ४३ ॥

कथमविशेषोक्तावयं प्रविभागः, विपर्ययोऽप्यत्र कस्मान्न संभाव्यत इत्याशङ्क्याह ।

**अर्थस्य विनिवृत्तत्वाल्लुगादि न विरुध्यते ।**
**एकार्थीभाव एवातः समासाख्यां[1] विधीयते ॥ ४४ ॥**

इह द्विविधा वृत्तिः, जहत्स्वार्था अजहत्स्वार्था च । जह[2]ति स्वार्थमुपसर्जनपदानि यस्यां सा जहत्स्वार्था, तद्विपरीता अजहत्स्वार्थेति मतभेदाश्रयो विकल्पः । तत्र जहत्स्वार्थायामसत्त्वेवोपसर्जनार्थः । अजहत्स्वार्थायामपि प्रधानेन सम्भेदापत्तेः पृथगसन्निति भेदाधिष्ठानस्य संबन्धस्य निवृत्तत्वात् सङ्ख्याविशेषतिरोधानाच्च विभक्तेः स्वाभाविकमर्थाभावाददर्शनमन्वाख्यायमानमुपपद्यते । तथा च समास **एका[3]र्थीभावे** युक्तः । व्यपेक्षायां तु भेदस्य संख्याविशेषाणां च संभवाद् विभक्तिश्रवणे वाक्यमवतिष्ठते । **लुगादि** इत्यादि ग्रहणात् स्तोकान्मुक्त इत्यलुक् एकवद्भाववचनं गृह्यते । भेदतिरोधानाद्धि समासेऽभेदैक[4]त्व संख्याप्रादुर्भावात् स्वाभाविकमेवैकार्थाभिधानमनुगम्यते । तथा चोक्तम्

"एकवद्वचनग्रह[5]णमनर्थकम्" (vā 2. on P. 6. 3. 1, (M. Bhā. III, p. 141, l. 15.)

द्विबहुष्वसमासः (vā3. on P. 6. 3.1, M. Bhā. III, p. 141 l. 17)

इति । तदेवमेकार्थीभावे समासविधानस्य लुगाद्यन्वाख्यानं लिङ्गमुक्तम् । तथा च वाक्यसमासयोर्नियतविषयत्वात् परस्परविषयावरोधासामर्थ्याद् विकल्पशासनमनुपपन्नम् ॥ ४४ ॥

केचित्तु वाचनिकमेव विषयनियममाहुः । तद्दर्शयन्ति ।

**व्यवस्थितविभाषा च सामान्ये कैश्चिदिष्यते ।**
**तथा वाक्यं व्यपेक्षायां समासोऽन्यत्र शिष्यते ॥ ४५ ॥**

व्यपेक्षैकार्थीभावयोर्यत् सामान्य संबन्धमात्रं सामर्थ्यमित्यविशेषेणोक्तं तत्र विभा[1]षा वाक्यसमासावप्यनुज्ञायेते । व्यवस्थितविभाषाविज्ञानाच्च व्यपेक्षायां सामर्थ्यभेदे वाक्यमेव एकार्थीभावे तु वृत्तिरेवेति शब्दशक्त्यनुसारी विषयनियमः सूत्रकाराभिप्रायमनुसरद्भिरुक्तः । वाक्यकारो चवचनं प्रत्याचख्याविति पूर्वोक्तनयेन व्यवस्थामाह । सूत्रकारस्य तु सामान्ये व्यवस्थितविभाषा स्थिता ॥ ४५ ॥

---

44. 1. A °साख्यो. 2. IP जहन्ति. 3. A एकार्थीभावो. 4. A अर्थभेदैनैरत्व°.
5. The Vā actually reads, एकवचनमनर्थकम् ।
45. 1. A विभाषायाः.

तथा च सामान्यार्थाश्रये समानशब्दत्वेऽप्येकार्थीभावकृतोऽयमपरो विशेष इत्याह ।

**तुल्यश्रुतित्वात्तत्त्वेऽपि राजादीनामुपाश्रिते ।**
**वृत्तौ विशेषणाकाङ्क्षागमकत्वान्निवर्तते ॥ ४६ ॥**

य एवं राजादिशब्दा वाक्ये त एव वृत्ताविति रूपसादृश्यादभेदे वृत्तिवाक्ययोः समाश्रितेऽपि ऋद्धस्य राज्ञः पुरुष इति वाक्यवद् ऋद्धस्य राजपुरुष इति वृत्तावपि विशेषणेनोपसर्जनार्थो न युज्यते । गमक[1]त्वाभावात् प्रधानसंसृष्टेन ह्यस्वतन्त्रेण राज्ञा ऋद्धादेरभिसंबन्धायोगात् । एकार्थीभावाद्धि[2] संबन्धस्यान्त[3]र्भावे सति कथमुद्भूतव्यतिरेकेण विशेषणेन योगः स्यादिति

"सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न" (M Bha I, p. 361. l. 5.) इति वक्तव्यम् । कृते हि समासे विशेषणयोगो न प्रतीयते उपसर्जनार्थस्येत्यगमकत्वात् प्रत्यायकत्वाभावात् तत्र विशेषणाकाङ्क्षा नास्ति । वाक्ये त्वस्ति गमकत्वात् । अतश्च शब्दशक्तिभेदादर्थभेदे वृत्तिवाक्ययोरत्यन्तमेव भेदः । सारूप्यनिमित्तं त्वभेदावसानं भ्रान्तम् । येनापि वृत्तावेकार्थीभावादुपसर्जनार्थस्य विवेकाभावात् स्व[4]विशेषणयोगो न भवतीत्यादिरत्र युक्तिरुपन्यस्यते तेनाप्येकार्थीभावकृताद्विशेषणाद्भेद एव शब्दशक्तिनिमित्तो वृत्तिवाक्ययोरुक्तो नापूर्वः कश्चित् ॥ ४६ ॥

तथा च यत्रास्ति गमकत्वं तत्रैकार्थीभावेऽपि भवति विशेषणयोग इत्याह ।

**संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते ।**
**स्वार्थवत् सा व्यपेक्षास्य वृत्तावपि न हीयते ॥ ४७ ॥**

इह केचिच्छब्दाः स्वार्थमितरापेक्षं नान्तरीयकमभिदधानाः संबन्धिशब्दाः कथ्यन्ते । तद्यथा गुरुशिष्यपितृपुत्रमातृभ्रात्रादयः । अतश्च ते वृत्तावपि स्वार्थमर्थान्तरापेक्षायोगिनमेव प्रतिपादयन्तीति गमकत्वात् तत्र सविशेषणानामपि वृत्तिर्भवतीति

"सविशेषणानां वृत्तिर्न" (M. Bha. I p. 361. l. 5) इत्य[1]त्र

"अगुरु[2]पुत्रादीनाम्" (M. Bha. I p. 361.l. 7–8)

इत्यपि न वक्तव्यम्, देवदत्तस्य गुरुकुलं देवदत्तस्य गुरुपुत्र इत्यादि । अत्र हि प्रातिपदिकमात्रेणापेक्षितं विशेषणं नोद्भूतव्यतिरेकेणेत्येकार्थीभावाद् व्यतिरेकस्यान्तर्भावेऽप्युपसर्जनेन संबध्यते । गुर्वादेर्हि वाच्यं शिष्याद्यपेक्षमित्येकार्थीभावेऽपि तदाकाङ्क्षा न निवर्तते, स्वार्थस्य निवृत्त्यभावात् ॥ ४७ ॥

46. 1. A गमकाभा°. 2. E[3] om. हि संबन्धस्यान्तर्भावे–प्रत्यायकत्वाभावात. 3. A °स्यात्यन्ताभावे. 4. A °वृत्तस्य विशे°, E[3] स्वविशेषणेनयो, P. सविशेष°.

47. 1. AE[3] इत्यत्रापि गुरु°. 2. M. Bha. has अगुरुकुलपुत्रादीनाम्.



अत्रैव प्रकारान्तरमाह ।

**समुदायेन संबन्धो येषां गुरुकुलादिना ।**
**संस्पृश्यावयवांस्ते[1] च युज्यन्ते तद्वता सह ॥ ४८ ॥**

दासीगृहवत् प्रसिद्धमेव गुरुकुलं देवदत्तेन प्रधानं विशेष्यते, न त्वत्रोपसर्जनार्थस्य गुरोर्देवदत्तापेक्षेत्यपि समर्थने किं देवदत्तस्य समीपं गुरुकुलमुतान्यथेति सन्देहेऽवश्यमिदं वक्तव्यं देवदत्तस्य यो गुरुस्तस्य कुलमित्येवमवयवान् गुर्वादीन् संबन्धेन स्वीकृत्य ते देवदत्तादयस्तद्वता अवयविना समुदायेन संबध्यन्त इत्यवयवद्वारेणैव समुदायसंबन्धो द्विमयमुदश्विद् यवानाम् इत्यादिवत् । एवञ्च य एव देवदत्तेन साक्षाद् गुरोर्योगेऽर्थः स एव संपन्न इति नास्ति प्रकारान्तरत्वमित्यत्र तात्पर्यम् ॥ ४८ ॥

प्रक्रियायां वाक्योपमर्देन वृत्तेरन्वाख्यानात् कथमत्यन्तभेद इत्याशङ्क्याह ।

**अणुधान् प्रत्युपायाश्च विचित्राः प्रतिपत्तये ।**
**शब्दान्तरत्वादत्यन्तभेदो वाक्यसमासयोः ॥ ४९ ॥**

इह राजपुरुषादयो विशिष्टार्थवृत्तयः संघाताः परमार्थतो निरंशा एव परिकल्पितपूर्वोत्तरावयवप्रविभागेन व्युत्पाद्यन्त इति मन्दमतयः श्रु[1]तिसारूप्यादुपायोपेययोरैक्यमध्यवस्यन्ति । भावतस्तु यथा रेखागवयेन सत्यगवयप्रतिपत्तावन्य एव रेखागवयोऽन्यश्च सत्यगवयः तथा[2] धूलिप्रक्षेपगतं प्रक्रियावाक्यमन्यदेव समासात् । प्रयोगसमवायि किल वाक्यमनेनोपायेन प्रदर्श्यते । तच्च व्यपेक्षैकनियतमेकार्थीभावविषयात् समासादन्यदेव । अर्थभेदेन शब्दानां भेदात् । संख्याविशेषादिश्चार्थभेदः प्रदर्शितः । क्वचित् समासान्तादेश्च संभवाद् रूपभेदोऽप्यस्ति । भेदसंसर्गलक्षणस्य प्रधानस्यार्थस्याभेदाददूरविप्रकर्षेण वाक्यप्रकृतिर्वृत्तिर्व्युत्पाद्यते तथा क्वचिद् वाक्यार्थे पदवचनमित्येवं विचित्रा व्युत्पादनोपायाः प्रक्रियायाम् । तत्र च वाक्य[3]विभक्तीनां दर्शनात् समासे लुगन्वाख्यानं नलोपादिप्रत्ययलक्षणकार्यसिद्ध्यर्थम् ॥ ४९ ॥

यद्येवं गोरथादिवृत्तिविषयेऽपि युक्तादीनां वाक्ये दृष्टानां कथं न लोपाख्यानमित्यत आह ।

**असमासे समासे च गोरथादिष्वदर्शनात् ।**
**युक्तादीनां न शास्त्रेण निवृत्त्यनुगमः कृतः ॥ ५० ॥**

48. 1. A °वयवास्ते°.

49. 1. A°योऽतिसा°. 2. AE[3] I इतरया. 3. I तत्र च विभ.

विभक्तयोऽसमासे वाक्ये दृष्टप्रयोगा इति प्रक्रियायां[1] तदभेदेन वृत्त्यनुशासने तासां प्रसङ्गाद्युक्तं यदाचार्योऽर्थाभावात् स्वाभाविकीं निवृत्तिं प्रत्ययलक्षणं[2] प्रार्थयमानोऽन्वाचक्षीत । गोरथः दधिघट इत्यादौ तु युक्तादयः प्रक्रियावाक्यगता न दृश्यन्ते, नापि तल्लोपलभ्यं किंचनापि कार्यमिति न तेषां लुगन्वाख्यानम् । तथा च दध्ना ओदनो दध्योदनो गवां रथो गोरथ इति द्रव्याणां क्रियामन्तरेणासामर्थ्यात् समासाभावे चोदिते

"सिद्धं तु समानाधिकरणाधिकारे क्ततृतीयापूर्वपदोत्त[3]रपदलोपश्च[4]"
"( Vā. 4. on P. 2, l. 35, M. Bhā. I, p. 387. l, 6. )

"षष्ठीसमासश्च युक्तपूर्णान्तः" ( Vā. 5 on, P. 2. 1. 35. M. Bhā, I p. 387. l. 10 )

इत्युक्ते, दध्ना उपसिक्तो दध्युपसिक्तः, दध्युपसिक्त ओदनो दध्योदनः, दध्नः पूर्णो दधिपूर्णः, दधिपूर्णो घटः दधिघटः, गवां युक्तो गोयुक्तः, गोयुक्तो रथो गोरथ इत्येवं समासे उत्तरपदलोपस्य वचने चोदिते

"न वा अस[5]मासेऽदर्शनात्" ( Vā 6. on P. 2. 1. 35, M. Bhā I p. 387. l. 14 )

[6]युक्तार्थसम्प्रत्ययाच्च सामर्थ्यम् ( Vā. 7. on P, 2. 1. 35 M. Bhā. I p. 387 l. 18 )

स[7]म्प्रत्ययाच्च तदर्थाध्यवसानम (Vā. 8 on P. 2. 1. 35. M. Bhā. I. P. 387, l. 20) इति प्रत्याख्यातं लोपवचनम् । दध्योदनः गुडधाना इत्यत्र[8]व्यंजनभावावगतेस्तद्धेतुभूतोपसेकमिश्रणक्रिया सामर्थ्यात् प्रतीयत इति तेन दध्ना ओदन इत्याद्येव वाक्यं क्रियते । नास्त्येवोपसिक्तादिरत्र शब्दः । एवं गवां रथः, दध्नो घट इत्येव वाक्यम् । संबन्धिसामर्थ्यात् युक्ताद्यर्थप्रतीतिः । तथाहि गवां रथस्य वाह्यवाहनसंबन्धो युक्तार्थमन्तर्भावयति । एवं दधिघटयोराधाराधेयसंबन्धः पूर्णार्थमिति यथा योगमनुसरणीयम् ॥ ५० ॥

ननु च गोयुक्तो रथः दध्युपसिक्त ओदनः दधिपूर्णो घट इति वाक्ये दृश्यन्त एव युक्तादयः, तथा प्रगतपर्णः प्रपतितपर्णः इत्यादौ प्रपर्णादिवृत्तिविषये वाक्ये गतादिशब्दः श्रूयत इति लोपोऽन्वाख्येय एवेत्यत आह ।

**शब्दान्तरत्वाद् युक्तादि क्वचिद् वाक्ये प्रयुज्यते ।**
**प्रपर्णप्रपलाशादौ गतशब्दश्च वृत्तिषु ॥ ५१ ॥**

50. 1. I °यायास्तद°. 2. A °लक्षणां. 3. I om. उत्तरपद. 4. AE[3] °लोपं.च 5. A समासो 6. E[3] युक्तार्थसम्प्रत्याच्च तदर्थाध्यवसानम्. 7. A om. संप्रत्ययाच्च तदर्थाध्यवसानम्. 8. A °इत्यन्तर्व्यं°



इह द्विविधं वाक्यम्, प्रयोगसमवायि लौकिकं नित्यं, प्रक्रियावाक्यं चानित्यमलौकिकं समासप्रकृति रेखागवयास्थानीयम् । तत्र च युक्तादिर्न दृश्यते । [1]लौकिके दृश्यते । तच्चान्यदेव गोरथादेः समासस्य पर्यायरूपमिति न पर्यायाणां गजो मतङ्गजो वृषो वृषभ इत्यादीनां गुरुलाघवादरेण लोपान्वाख्यानमुपपद्यते । प्रपर्णादिविषये वृत्तिषु एकार्थीभावेषु सत्सु क्वचित् लौकिके वाक्ये प्रगतपर्ण इत्यादौ गतशब्दः प्रयुज्यते शब्दान्तरभूत इति समन्वयः ॥ ५१ ॥

प्रयोगसमवायिनां च लौकिकेन वाक्येन वाक्यान्तरार्थभेदे प्रधानार्थापेक्षया वृत्तिरभिन्नार्थेत्याह ।

**विशेषणविशेष्यत्वं कैश्चिदेकस्तथाश्रयः ।**
**उपाये तत्त्वदर्शित्वादिष्यते वृत्तिवाक्ययोः ॥ ५२ ॥**

निरंशस्य समासस्यान्वाख्यातुमशक्यत्वाल्लौकिकवाक्यसदृशं प्रक्रियावाक्यमुपायः कल्प्यते । तत्र चान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययवदर्थापोद्धारः । अबुधास्तूपायोपेययोरैक्यमध्यवस्यन्तोऽर्था[1]भेदमत्रावयन्ति । तथा हि—य एव विशेषणविशेष्यभावो नीलमुत्पलमित्यत्र वाक्ये भे[2]दनिष्ठं च सामानाधिकरण्यं तदविलक्षणमेव नीलोत्पलमित्यत्र वृत्तौ । एवं व्यधिकरणविषयेऽपि राज्ञः पुत्र इत्यादौ विशेषणविशेष्यभावः संसर्गात्मको राजपुरुष इति वृत्त्या समान इति वृत्तिवाक्ये अभिन्ने च । तथा[3] च

'परस्परव्यपेक्षां सामर्थ्यमेके' Vā. 4 on P. 2. 1. 1., M. Bhā. I p. 365. l. 9. )

इत्येकीयं मतम् । समासेऽप्य[4]त्र व्यपेक्षैव सामर्थ्यं वाक्योपमर्देन कार्यशब्द[5]दर्शने समासप्रादुर्भावादर्थभेदायोगात् प्रातिपदिकेनैव च पञ्चकदर्शनाश्रयेण विभक्त्यर्थाभिधानात् तल्लुगन्वाख्यानं न त्वर्थस्याभवात् । तथा च तावकीनादौ विशेषणप्रतिपत्तिनिबन्धने सति सङ्ख्याविशेषोऽवधार्यत एव । [6]सर्वथा त्वेएकार्थी[7]भावेन स्यादत्र प्रतीतिः । उपसर्जनविशेषणायोगस्तु

'सविशेषणानां वृत्तिर्न' ( M. Bhā. I. p. 361. l. 5. )

इति वाचनिकः । द्वन्द्वे चशब्दस्याप्रयोगश्च तदर्थ एव तस्यानुशासनात्, न तु भेदविगमनात् तन्निष्ठसमुच्चयाभावादिति कार्यशब्दवादिनो वृत्तिवाक्ययोः प्रधानार्थभेदेन पर्याययोः सर्वथैक्यं भ्रान्त्याध्यवस्यन्ति । नैकार्थीभावो नाम विशेषकरः कश्चिद्, व्यपेक्षैव षत्वादि-

51. 1. E[3] om. लौकिके दृश्यते.
52. 1. A अर्थान्तरभेदम°, E[3] °न्तोभेदम°. 2. P ( अ ) भेद°. 3. A om. तथाच. 4. A °सेऽप्यपे°. 5. A कार्थदर्शने. 6. A यथा त्वेका°. 7. AE[3] भावादभावे.

विषयेऽपि सम्भवात् सर्वत्र सामर्थ्यमिति प्रतिपन्नाः । इत्थं च भिन्ननिमित्ताभ्यां शब्दाभ्यामेकस्यैवार्थस्य प्रत्यायनात् सामानाधिकरण्यमवच्छेद्यावच्छेदकभावश्च भेदाश्रयो वृत्तावपि युज्यते इति न तत् प्रयत्नसाध्यम् । एषां च मते वावचनेन विकल्पोऽभिन्नविषये क्रियत इति नानर्थकं तत् ।। ५२ ॥

एतदेव दर्शनं निराकर्तुमाह ।

**पदं यथैव वृक्षादि विशिष्टेऽर्थे व्यवस्थितम् ।**
**नीलोत्पलाद्यपि तथा भागाभ्यां वर्तते विना ॥ ५३ ॥**

वर्णानामानर्थक्यस्य वृक्षादौ प्रतिपादितत्वान्निरंशमविभक्तार्थप्रत्यायकं स्फोटस्वभावं पदं स्वशक्त्या नियतार्थं यथा एवं नीलोत्पलं राजपुरुष इत्याद्यपि समासपदमविभक्तावयवमभिन्नसंवित्सिद्धैकार्थप्रत्यायकं सदृशभागप्रकल्पनया प्रकृतिप्रत्ययादिवद् व्युत्पाद्यतेऽदूरविप्रकर्षेण वाक्येन । यथा वृक्षादावसन्नपि प्रकृतिप्रत्ययार्थविभागोऽन्वाख्यानार्थं कल्पितः त[1]था वृत्तावप्यवयवार्थभेदः । वाक्ये हि भेदोऽर्थस्येति संबन्धविभक्तिः । वृत्तौ त्वविभागेन पांसूदकवदर्थस्याभेदापत्त्या संबन्धविगलनात् स्वाभाविकी निवृत्तिर्विभक्तेः । संख्याविशेषोऽपि नास्ति । पञ्चके प्रातिपदिकार्थे द्योतकाभावादप्रतीतेः । पयः पयो जरयतीत्यत्र क्रियासंबन्धान्यथानुपपत्त्या शक्तिप्रतीतिः । अभेदैकत्वसंख्या च सर्वसंख्याविशेषसामान्यभूता वृत्तावस्त्युपसर्जनार्थस्य द्रव्यस्य निःसंख्यत्वाभावादिति यथायोगं सति विशेषद्योतके तदवगमो न विरुध्यते । प्रधानार्थसम्भेदादेव च स्वविशेषणेन न युज्यते उपसर्जना[2]र्थः । वचनेन तु शब्दानां शक्त्याधा[3]नायोगाद् विषयविवेको दुरवसानः । द्वन्द्वेऽपि समुच्चितप्राधान्याच्च[4]शब्दनिवृत्तिर्न तु चार्थेऽनुशासनात् । न ह्य[5]र्था विवेयतया शब्देषु निर्दिश्यन्ते आनन्त्येनाशक्यत्वात् ।

तदुक्तम्—

‘ अर्थानादेशनात् ’ ( M. Bhā. I. p. 363. l. 8 )

‘ तच्च लघ्वर्थम् ’ ( M. Bhā. I. p. 363. l. 15 )

इति । सिद्धस्य तु लौकिकस्यार्थस्यानुवादः सर्वत्र । परस्परव्यपेक्षा सामर्थ्यमिति त्वेकीयमतम् । एकार्थीभावः सामर्थ्यं परिभाषा चेत्येवं सूत्रमभिन्नतरकं भवतीति सिद्धान्तव्यवस्थापनात् । तदेवमेकार्थीभावकृतविशेषदर्शनादत्यन्तमेव वृत्तिवाक्ययोर्भेदः । केनचिदंशेन तु सादृश्याध्यवसायो भ्रमः ॥ ५३ ॥

53. 1. AE[3] om. तया. 2. A °नार्थवचनेन°. 3. A °धानयोगात्. 4. IP °नाच्च शब्द°. 5. P न ह्यत्रार्था.



न चापि सर्वत्र वृत्तिवाक्ययोः सादृश्यानुगम इत्याह ।

**श्रोत्रियक्षेत्रियादीनां न च वासिष्ठगार्ग्यवत् ।**
**भेदेन प्रत्ययो लोके तुल्यरूपासमन्वयात् ॥ ५४ ॥**

वासिष्ठगार्ग्यादौ तद्धितवृत्तिविषये यथान्वाख्यानाय प्रकृतिप्रत्ययविभागेन प्रतिपत्तिः नैवं श्रोत्रियक्षेत्रियपारशवादेः । न ह्यत्र प्रकृतिरूपानुगमो दृश्यते छन्दःशब्दपरक्षेत्रशब्दपरस्त्रीशब्दानामननुगमात् । तथा च वाक्यादन्यदेव वृत्तिपदम् । तथा सर्वत्रैव बोद्धव्यम् । एतदेव हि सामान्यतो दृष्टमत्र लिङ्गमुपोद्बलकमर्थभेदादेव सिद्धेः[1] ॥ ५४ ॥

वृत्तिवाक्ययोः शब्दभेदेऽर्थानुगमोऽपि क्वचिन्नास्तीत्याह ।

**सप्तपर्णादिवद्भेदो न वृत्तौ विद्यते क्वचित् ।**
**रूढ्यरूढिविभागोऽपि क्रियते प्रतिपत्तये ॥ ५५ ॥**

पर्वणि पर्वणि सप्त पर्णान्यस्येत्येवं सप्तपर्णशब्दो व्युत्पाद्यते । न च सर्व एवंविधो वृक्षः, अपि तु कश्चिदेव शीर्णपर्णोऽपि विशिष्टजातीयोऽभिधीयते । यद्येवं कथं सप्तपर्णादयो रूढिशब्दा इति प्रसिद्धाः न राजपुरुषादय इत्यत आह, **रूढ्यरूढि** इति । **प्रतिपत्तये** न्यायसिद्धार्थभेद[1]सम्प्रत्ययस्थिरीकरणार्थमयं विभागः प्रतिपादनोपायः । प्रधानार्थानुगमाद् राजपुरुषादौ यौगिकत्वं सप्तपर्णादौ तु वाक्यगता[2]र्थानुगमव्यभिचाराद् रूढित्वमिति विभागेन व्यवहारः । क्रमेण हि परोऽवबोध्यते । न चार्थानुगममात्रं विना रूढित्वम्, सप्तपर्णादावपि रूढिविषये क्वचित् तत्संभवात् । तथाहि रूढीनामपि क्वचित् सप्तपर्णादावनुगमोऽस्ति । न चैतावता यौगिकत्वम्, अतिप्रसङ्गात् । तदेवमनङ्गीकृतावयवार्था एव नीलोत्पलादयः समासाः प्रकल्पितावयवभेदेन व्युत्पाद्यमाना भिन्ना एव तत्त्वतो वाक्येभ्य इत्यत्यन्तभेदो वृत्तिवाक्ययोः सिद्धः ॥ ५५ ॥

यद्येकार्थीभावकृतो भेदो वृत्तिवाक्ययोस्तदा बहुव्रीहावनेकवर्तिपदसम्भवादन्यपदार्थे तेषामेकार्थीभावान्यथानुपपत्त्या परस्परसमन्वये समासान्तरमन्तरा[1] कस्मान्न भवतीत्याह ।

**या सामान्याश्रया संज्ञा विशेषविषया च या ।**
**बहुलग्रहणान्नास्ति प्रवृत्तिरुभयोस्तयोः ॥ ५६ ॥**
**सुसूक्ष्मजटकेशादौ समासोऽवयवे यदि ।**
**स्यात् स्याद् तत्रान्तरङ्गत्वाद् बाधकोऽवयवस्वरः ॥ ५७ ॥**

54. 1. A सिद्धम्.
55. 1. A °र्थभेदे. 2. E[2] °तार्थान्वयि°.
56-57. 1. A om. अन्तरा.

अतिशयेन सूक्ष्मा जटारूपाः केशा यस्य सोऽयं सुसूक्ष्मजटकेशः। अत्र सूक्ष्मजटशब्दयोः सति संबन्धे विशेषणसमासे समासान्तोदात्तत्वं स्यात्। बहुव्रीहिस्वरेण हि त्रिपदसमासगतं समासान्तोदात्तत्वं बाधितं[2]मेकविषयत्वात्। अवयवयोस्तु बहुव्रीह्यभावादप्रतिषिद्धं समासान्तोदात्तत्वमेव स्यात्। न च परत्वाद् बहुव्रीहिस्वरः अन्तरङ्गत्वादवयवस्वरश्च[3] पूर्वशालाप्रिय इतिवत्। तस्मादत्रावयवस्वरनिवृत्त्यर्थं

'विशेषणं विशेष्येण'....(P. 2. 2. 24.)

इति या कर्मधारयसमाससंज्ञा, या च

'सुप् सुपा'

इति योगविभागात् सामान्येन समाससंज्ञा सा बहुलग्रहणान्न प्रवर्तत इति वाच्यम् ॥ ५६, ५७ ॥

ननु च प्रकृतयैव महाविभाषयाऽत्रावयवयोः समाससंज्ञा द्विविधापि न प्रवर्तत इति कस्माद् नोच्यते, किं बहुलग्रहणात्तदभावः। कथ्यते इत्याशङ्क्याह।

**समुदायस्य वृत्तौ च नैकदेशो[1] विभाष्यते।**
**भेद एव विभाषायां नियतो विषयो यतः ॥ ५८ ॥**

व्यवस्थितविभाषाविज्ञानादेकार्थीभावप्रक्रमे विकल्पो नास्ति। तस्य व्यपेक्षैकनियतत्वादित्यन्यपदार्थे वृत्तिमनुभवतानवयवानामन्योन्यसंसर्गस्याविनाभावादेकार्थीभाव एवं थ्यं इति प्राप्ता समाससंज्ञा बहुलग्रहणेन निवार्यते। यदा[2] हि वृत्तिस्तदावयवयोर्वृत्तिरेव। तद्यथा पंचगवधनः वाक्त्वचप्रिय इत्यन्तरा तत्पुरुषो द्वन्द्वश्च प्रवर्तते इति तदाश्रयटच्समासान्तसिद्धिः। तदेतद् भाष्ये

'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' (Vā. 8. on. P. 2. 1. 51. M. Bhā. I. p. 395, l. 17.)

इत्येवद्वार्त्तिककारवचनसमाधानार्थमुक्तम्

'यदा[3] वृत्तिः सर्वेषां तदा [4]वृत्तिः' (M. Bhā. I. p. 395, l. 21.)

इति ॥ ५९ ॥

ननु चैकस्मिन् प्रयोगे बहुव्रीहिसंज्ञाया भावोऽवयवे तत्पुरुषसंज्ञायाश्चाभावो विभाषयानया प्रतिपाद्यताम्। अयमेव अस्या मुख्यो विषय इत्यत्राप्रवृत्तावचरितार्थैव स्यादित्याशङ्क्याह।

2. A बाधकमें°. 3. E³ IP °स्वरस्य.
58. 1. A °देशे. 2. AE³ यदि ह. 3. M. Bhā has; यदा वृत्तिपक्षस्तदा सर्वेषामेव वृत्तिः. 4. I. P. प्रवृत्तिः.



**यतश्चाविषयः सोऽस्यास्तस्मान्नास्त्यकृतार्थता।**
**अभेदप्रक्रमेऽत्यन्तं भेदानामपसारणात् ॥ ५९ ॥**

एकार्थीभावविषये पृथगर्थताभावाद् विविधभाषणरूपाया व्यपेक्षानियताया विभाषाया नास्ति प्रवृत्तिरित्यविषयेऽप्रवृत्तावस्याः कथमचरितार्थत्वम्। **अत्यन्तम्** इति। न केवलं समुदायगतो भेदो नास्ति, यावदवयवगतोऽपि। प्रधानार्थपरवशत्वेन पांसूदकवदविभागापत्तेरवयवार्थानाम्। तदेवमत्र प्राप्तः समासो बहुलग्रहणेन निवार्यते। अवयवयोरिष्टस्वरसिद्ध्यर्थं सुसूक्ष्मजटकेशः[1] सुनताजिनवासा इत्येवमादौ हि बहुव्रीहिस्वर एवेष्यते ॥ ५९ ॥

कश्चित् त्ववयवस्वरेण समुदायस्वरो न भिद्यत इति भवत्येव तत्रावयवयोः समास इत्याह।

**महाकष्टश्रितेत्ये[1]वं न स्याद् भेदः पदत्रये।**
**वृत्तावयवस्यात्वं यस्मान्न प्रतिषिध्यते ॥ ६० ॥**

**एवम्** इति। समुदायस्य वृत्तावयवयोरप्येकार्थीभावाभ्युपगमे सति महत् कष्टं श्रित इति त्रिपदसमासप्रक्रमेऽवयवयोः

'सन्महत्....' (P. 2. 1. 61.)

इति समासे विहिते भवति **आत्वम्** उत्तरपदे विधीयमानम्[2]। त्रिपदे चात्र समासे न स्यादात्वमुत्तरपदत्वस्य सर्वान्त्ये लोकविज्ञानान्मध्यपदे तदभावादित्यवयवसमास आश्रयितव्यः। स्वरे त्वत्र भेदो नास्ति। द्विपदे समासे समासान्तोदात्तस्य बाधकस्याथादिस्वरः, तस्यापि बाधकः

'अहीने द्वितीया' (P. 6. 2. 47)

इति पूर्वपदप्रकृतिस्वरः, स एवावयवसमासान्तोदात्तः ॥ ६० ॥

कश्चित्तु स्वरेऽत्र भेद इत्याह

**महारण्यमतीते तु त्रिपदाद् भिद्यते स्वरः।**
**यस्मात्तत्रान्तरङ्गत्वाद् बाधकोऽवयवस्वरः ॥ ६१ ॥**

महदरण्यमतीत इति त्रिपदे द्वितीयातत्पुरुषे समासान्तोदात्तत्वस्य बाधकं याथादिस्वरमवयवाश्रयोऽन्तरङ्गः समासान्तोदात्तो बाधेतेत्यत्र त्रिपदाद् द्विपदे तत्पुरुषे भिद्यते स्वरः ॥ ६१ ॥

59. 1. A केशान्तः सुलभाजिनवाससा.
60. 1. °ते त्वेवं. 2. A. °यमाने.

तथा हि

सतिशिष्टबलीयस्त्वात् थाथादिस्वर एव तु ।
द्विपदे तेन युगपत् त्रितयं न समस्यते ॥ ६२ ॥

महदरण्यं महारण्यमिति पूर्वं

सन्महत्....( P. 2. 1. 61 )

इति समासे पश्चान्महारण्यशब्दस्यातीतशब्देन द्वितीयासमासे सतिशिष्टस्वरबलीयस्त्वात् थाथादिस्वरोऽन्तोदात्तो भवति । सत्यत्रयवान्तोदात्तत्वे शिष्टत्वात् कक्षान्तरप्राप्त्योत्कृष्टबलत्वेन बाधकत्वात् । तदेवमत्र त्रिपदे समासे मध्योदात्तत्वं द्विपदे त्वन्तोदात्तत्वमिति भेदः । तथा च सुप् सुपेति संख्याविवक्षायां त्रिपदसमासो न भवति । महाकष्टश्रिते तु स्वरभेदाभावात् सत्यपि त्रिपदे समासे नास्ति कश्चिद् दोषः ॥ ६२ ॥

ननु च श्रितार्थे समन्वयात् परस्परसंसर्गाभावे महत्कष्टशब्दयोः कथं समासः । तच्चात्रोत्तरपदे विधीयमानमात्वं न स्यादित्यत आह ।

येषामपूज्यमानत्वं परार्थानुगमात्मके ।
विशेषणविशेष्यत्वमपि तेषां न कल्पते ॥ ६३ ॥

कष्टार्थस्य श्रितार्थानुगमे महता संबन्धाभावात पूज्यमानत्वं नास्तीति वदतामवयवानां विशेषणविशेष्यभावोऽपि न स्यादसंबन्धात । तथा च पंचगवधन इत्यादाववयवयोः समासाभावात् समासान्तोदात्तत्वं न स्यात् । पूर्वशालाप्रिय इत्यादौ चावयवाश्रयोऽन्तरङ्ग स्वरो न स्यात् । स च सिद्धान्तित :—

'नावयवतत्पुरुषत्वात् , तस्यान्तोदात्तत्वं विप्रतिषेधात्'

इति । खादिरेतरशम्य इत्यत्र चावयवसमासाश्रयः पुंवद्भावः । प्रधानानुग्रहाय चावयवाः परस्परेण संबध्यन्त एव । सगुणस्य हि द्रव्यस्य क्रियासमन्वयः । श्रौतेऽपि समन्वये द्रव्याश्रयत्वात् तद्विशेषणद्वारेणैव क्रियायोगाद् गुणस्य । तस्मादस्त्येव समुदायप्रक्रमेऽप्यवयवयोः परस्परसमन्वय इति महाकष्टश्रिते रूपस्वरविशेषाभावादभ्युपगम्यापि त्रिपदः समास उक्तः । सुप् सुपेति संख्याविशेषविवक्षैव तु सिद्धान्त इति त्रिपदो द्वितीयासमासो नास्ति । तथा च महारण्यातीत इत्यत्र द्विपदे समासे सिध्यतीष्टस्वरः । बहुव्रीहौ द्वन्द्वे चानेकग्रहणादविशेषेण समासः सिद्धान्तितः । तत्र दिक्संख्या पूर्व एवावयवतत्पुरुषः

"तद्धितार्थोत्तरपद.... " ( P. 2. 1. 51. )

63. 1. E³. °यो न°. 2. AE³ पदेषु पुं°.



इत्युत्तरपदे विहितो भवति । तथा च तत्रैव तदाश्रयोऽन्तरङ्गस्वरः । सुसूक्ष्मजटकेशादौ तु बहुलग्रहणादवयवयोर्विशेषणसासमाभावः । समुदायपारतन्त्र्ये चावयवानां पृथक् स्वकार्याप्रयोजकत्वात् समुदायसमासेनैकपक्षस्य सिद्धत्वात् । तद्यथा समुदायद्विर्वचने त्ववयवद्विर्वचनं च भवति पपाचेति । पूर्वशालाप्रिय इत्यादौ उत्तरपदे स्वरसमासान्तसिद्ध्यर्थं द्विगुर्वाचनिको भवति । खादिरेतरशम्य इति इतरा शम्या इतरशम्येति पूर्वं विशेषणसमासे कृते खादिरी इतरशम्या यस्येति द्विपदो बहुव्रीहिरित्युत्तरपदे[2] पुंवद्भावः सिध्यतीति सर्वेष्टसिद्धिः ॥ ६३ ॥

प्रस्तुतमेव वृत्तिवाक्ययोर्वैधर्म्यं विचारान्तरार्थं प्रतिपादयति ।

विशेषः श्रूयमाणोऽपि प्रधानेषु गुणेषु वा ।
शब्दान्तरत्वाद् वाक्ये तु वृत्तौ नित्यं न विद्यते ॥ ६४ ॥

ऋद्धस्य राज्ञः पुरुष इति वाक्ये गुणस्य राज्ञो विशेषः श्रूयते समृद्धतालक्षणः । वृत्तौ तु राज्ञः पुरुष इत्यत्र ऋद्धस्येति विशेषणं राज्ञो नास्ति, प्रधानार्थसंभिन्नस्य स्वविशेषणायोगात् । एतच्च वृत्तिवाक्ययोः शब्दान्तरत्वे सत्युपपद्यते । वाक्यप्रकृ[1]तौ तु वृत्तौ वाक्यगतधर्मानुषङ्गः । एवं चित्रा गावो यस्य देवदत्तस्येति प्रधानस्यान्यपदार्थस्य देवदत्तादि[2]विशेषो वाक्ये श्रुतोऽपि विवक्षितोऽपि वृत्तौ चित्रगुरित्यत्र नान्तर्भवतीति परार्थाभिधानादनुप्रयोगानुपपत्तौ चोदितायां

'न वानभिहितत्वात्' ( Vā. 5, M. Bhā. I, p. 421. l. 20 )

इत्यनुप्रयोगः समर्थितः । अन्यपदार्थसामान्यं ह्यन्तर्भवति, न तु तद्विशेषः ॥ ६४ ॥

ननु च वृत्तौ गुणस्य स्वविशेषणेनासंबन्धात् कृतपूर्वी कटमित्यत्र कृतेन कटस्य सामानाधिकरण्याभावादसति क्रियासंबन्धे कर्मता न स्यादित्याशङ्क्याह ।

विशेषकर्मसंबन्धे निर्भुक्तेऽपि कृतादिभिः[1] ।
विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्तते ॥ ६५ ॥

कृतः पूर्वं कटोऽनेन, भुक्तः पूर्वमोदनोऽनेनेति वाक्ये कटादीनां विशिष्टेन कर्मणा समन्वय इति निष्ठया तस्य विशिष्टस्य कर्मणो निर्भुक्तत्वादभिहितत्वाद् द्वितीया न भवति । वृत्तौ तु कृतपूर्वी कटमित्यत्र कृतार्थस्य प्रधानार्थानुगामित्वादसति स्वातन्त्र्ये स्वकर्मणा कटादिना सामानधिकरण्यं न स्यात् ॥ ६५ ॥

तस्मादन्य एव वाक्यस्थात् अकर्मकात् कृतशब्दात् वृत्तौ कृतशब्दोऽयमकर्मक इति बाह्येन कर्मणा कटादिना सम्बध्यत इत्याह ।

64. 1. E³ वाक्यप्रवृत्तौ. 2. A °त्तादेर्वि°, E³ त्तादिर्वि°. 3. E³ om. वृत्तौ.
65. 1. AE³ I. कृतादिवि.

**अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि[1] तत् ।**
**ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥ ६६ ॥**

वृत्तिवाक्ययोरत्यन्तभेदाद् वाक्ये विशिष्टकर्मसमन्वययोग्योऽपि कृतशब्दो वृत्तौ विशेषस्याभिधानासम्भवात् सामान्यकर्मैव प्रतीयते । तच्च नान्तरीयकत्वादविवक्षितमित्यकर्मकोऽयं कृतशब्दो भावाभिधायी सम्पद्यते । प्रसिद्धं हि नान्तरीयकं सामान्यकर्मेति । यथा दीक्षितो न ददातीति प्रसिद्धेरकर्मिका क्रिया तथेयमपीति भावेऽत्र निष्ठा कथ्यते । तथा च क्रिययावच्छिन्नः तद्धितवाच्यः कर्ता कृतपूर्वी देवदत्त इति । तस्य च बाह्येन कटादिना संबन्धो दृश्यते कटमिति । कारकाणां च क्रियाव्यपेतः संबन्ध इत्यन्यस्या अत्र क्रियाया अभावात् तद्धितार्थविशेषणभूतयैव क्रियया संबन्धो युक्त इति तदपेक्षमेव कटादेः कर्मत्वम्, कृतपूर्वी कटम्, भुक्तपूर्वी ओदनमित्यादि । भावेऽत्र निष्ठेति क्रियैव तदन्तवाच्या । तदेतदुक्तं भाष्ये—

'योऽसौ कृतकटयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते । अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भविष्यति ' ( M. Bhā. I. p. 467, l. 23–24 )

इति । वाक्ये यो विशिष्टेन कटादिना कृतस्याभिसंबन्धः स उत्पन्ने तद्धिते वृत्तौ निवर्तते । शब्दशक्तिस्वाभाव्याद् विशेषाभिधानं नास्ति वृत्तौ, सामान्यकर्मणैव संबन्धप्रतीतेः । तथा च प्रसिद्धेः कर्मणोऽकर्मिकेयं क्रियेति भावाभिधायीक्त इति तत्रत्यया क्रियया आप्य[2]मानं कटादि कर्म भवतीति समन्वयोपपत्तिरित्यर्थः ॥ ६६ ॥

ननु च तद्धितार्थे कर्तरि गुणीभूता क्रिया वृत्तावभेदेन प्रतीयते, न तु कर्तृभेदेन स्वरूपप्राधान्येनेति कथं तया कटादेः कर्मणो योग इत्याशङ्क्य निदर्शनेनैतद् व्युत्पादयति ।

**अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।**
**संबन्ध्यते क्रिया तद्वत् कृतपूर्व्यादिषु स्थिता ॥ ६७ ॥**

ग्रामं गतो देवदत्तो ग्रामं गच्छति चेत्यादौ गतादिशब्देन गमिक्रियाकर्तुर[1]भिधानाद् गमिक्रियायास्ततः कर्तुर्विविधं पृथक्त्वेन ग्रहणं नास्तीति **अविग्रहा** सा । प्रत्ययार्थे हि सर्वत्र गुणभूतः प्रकृत्यर्थः व्यापाराविष्टस्य साधनस्याख्यातात् प्रतीतेः कारकमुखेनैव क्रिया प्राधान्यं भजते । न तु स्वतः, सर्वत्र प्रकृत्यर्थस्य गुणत्वात् । एवञ्च क्रिया सर्वत्र कारकाद् भेदेन नावगृह्यते । कारकाणां हि प्रवृत्तिविशेषरूपासौ तत्समवेतैव तद[2]भिधायिप्रत्ययानुगतप्रकृतिवाच्या न्याय्या । न च केवलस्य क्रियावाचिनो धातोः

66. 1. A °भिधायकम्. 2. AI. आप्यमानः कटादिः, P. व्याप्यमानं.
67. 1. AE³ I, कर्तृभे°. 2. E³ समभिधा°.



प्रयोगोऽस्ति । इक्श्तिपादिना च सिद्धतया प्रत्याय्यते, न तु साध्यमानावस्थेन स्वरूपेण । तस्मात् कारकसंसृष्टैव सर्वा क्रिया कर्मणा संबध्यत इति कृतपूर्व्यादावपि तादृश्या एव समन्वयोपपत्तिः ॥ ६७ ॥

यदि कृतशब्दो वृत्तौ विशेषकर्मान्तर्भावयितुमसमर्थः मुण्डं करोति मुण्डयति सूत्रयति मिश्रयतीत्यादावपि वृत्तौ माणवकादेर्विशेषस्यानभिव्यक्तिः स्यात् । न च कृतशब्दवद् मुण्ड्यादिशब्दः क्रियावाचीति तस्य क्रियाविशेषेऽन्तर्भा[1]वाभावात् कथमत्र बाह्येन माणवकादिकर्मणा योग इत्यत आह ।

**मुण्डिसूत्र्यादयोऽसद्भिर्भागैरनुगता इव ।**
**विभक्ताः कल्पितात्मानो धातवः कुट्टिचर्चिवत् ॥ ६८ ॥**

मुण्डं करोतीत्यादि वाक्यं प्रकृतिप्रत्ययपरिकल्पनेनान्वाख्यानोपायमात्रमिति तद्गतभेदवासनया भागानुगम इवात्र । सत्यतः पुनर्निरस्तोद्देशविभागा विशिष्ट[2]क्रियावचना एते **धातवः** इत्थं व्युत्पाद्यन्ते, समुदायप्रतीत्यावयवप्रतीतेर्बाधनात् । ततश्च यथायथं स्वकर्मणा संबन्धो न विरुध्यते । प्रकृतिवाच्यं हि मुण्डादि गुणकर्म, प्रत्ययवाच्यास्तु करोत्यर्थ इत्यन्वाख्यानाय विभागः कल्पितः । केशच्छेदनवचनो हि मुण्डयतिः । तस्य साक्षादेव माणवकः कर्म । एवं सूत्रयत्यादौ व्याकरणादिः । गुणत्वेन नित्यसापेक्षा वा मुण्डादयो बाह्येन गुणिना माणवकादिना युज्यन्ते । केशच्छेदनं वा क्रियाविशेषरूपं करोतेः कर्म । तद्विशिष्टस्य तु माणवकादि कर्म । **कुट्टिचर्चिवत्** इति । साक्षाद्धातुषु पाठादनयोर्निरंशत्वस्य प्रसिद्धेर्निदर्शनत्वं न्याय्यम् ॥ ६८ ॥

एवमन्यत्रापि प्रकृतिप्रत्ययभेदोऽन्वाख्यानोपाय इत्याह ।

**पुत्रीयतौ न पुत्रोऽस्ति विशेषेच्छा तु तादृशी ।**
**विनैव पुत्रानुगमाद् या पुत्रे व्यवतिष्ठते ॥ ६९ ॥**

पुत्रशब्दोऽत्रासत्यः कल्पितोऽवयवः । तथा च पुत्रविशिष्टेच्छा पुत्रीयतिनाभिधीयते ॥ ६९ ॥

यदि तर्हि पुत्रे व्यवतिष्ठते तदा बाह्यैः पुत्रविशेषैः सम्बध्येतेयमिच्छेत्याशङ्क्याह ।

**प्राणैर्विना यथा धारिर्जीवतौ प्राणकर्मकः ।**
**न चात्र धारिर्न प्राणा जीवतिस्तु क्रियान्तरम् ॥ ७० ॥**

जीवतीत्यस्यार्थः प्राणान् धारयतीति । न चात्र जीवतौ प्राणशब्दोऽस्ति । नापि धारयतिर्धातुः । अत्र च विशिष्टकर्मिकैवंरूपा क्रिया प्रतीयत इत्यन्तर्भूतत्वात् कर्मणोऽकर्मकव्यपदेशमासादयति यथा ॥ ७० ॥

68. 1. E³ IP °न्तर्भावात्. 2. A विशिष्टवचनाः

**तथा विनेषिपुत्राभ्यां पुत्रीयायां क्रियान्तरम् ।**
**अन्वाख्यानाय भेदा[1]स्तु सदृशाः प्रतिपादकाः ॥ ७१ ॥**

इषिपुत्रानुगम उपायमात्रम् । परमार्थतस्तु **पुत्रीयायां** पुत्रीयाशब्दे **क्रियान्तरम्** अन्या विशिष्टा क्रिया प्रतीयते । पुत्रीयायां वा क्रियायां क्रियान्तरमिति भावप्रधानो निर्देशः । तेन क्रियान्तरत्वमित्यर्थः । एवञ्च यथा जावतेर्बाह्येन कर्मणाऽयोगस्तथा पुत्रीयतावित्यकर्मिकेयं क्रिया । तथा च भाष्यम् —

"अथ क्यजन्तस्य कानि साधनानि । भावः कर्ता च । अथ कर्म । नास्ति कर्म" ( M. Bhā II. p. 18. l. 16. )

इति । सुबन्तात् कर्मण इच्छायां क्यजिति प्रतिपादनोपायोऽन्वाख्यानं भेदेनेति पृथग्भूतपुत्रादिशब्दसादृश्यात् विभागभ्रान्तिरत्र ॥ ७१ ॥

ननु मुण्डयति माणवकमितिवत् पुत्रीयति माणवकमिति बाह्येन कर्मणा क्रियान्तरत्वेऽपि योगः कस्मान्न भवतीत्याशङ्क्याह ।

**आक्षेपाच्च प्रयोगेण विषयान्तरवर्तिना ।**
**सदपीच्छाक्य[1]चः कर्म वाक्य एव प्रयुज्यते ॥ ७२ ॥**

पुत्रविशेषलक्षणं माणवकादि कर्म पुत्रेषणाया विद्यमानमपि वृत्तावर्थान्तरप्रतीतेर्न प्रयुज्यते । पुत्रीयति माणवकमिति ह्युक्ते विषयान्तरमाचारलक्षणं तद्वाचिनोपमानक्यचः **प्रयोगेण** इच्छाविषया क्यजपह्रियते, आचारार्थप्रतीतेः । तस्मात् पुत्रमिच्छति माणवकमिति वाक्य एव विशेषकर्मप्रयोगः ॥ ७२ ॥

अनेन न्यायेनैतत् सदृशं प्रसङ्गेनान्यदप्युपपादयति ।

**प्रसिद्धेन वृ[1]तः शब्दो भावगर्हाभिधायिना ।**
**अभ्यासे तुल्यरूपत्वान्न यङन्तः प्रयुज्यते ॥ ७३ ॥**

लोलुप्यते, चङ्क्रम्यते, जङ्गम्यते इति यङि कृते गतिकौटिल्यस्य भावगर्हायाश्च प्रतीतेः क्रियासमभिहारे **यङन्तो**ऽयं सदृशोऽपि **न प्रयुज्यते** । यङन्तादतस्तदप्रतीतेः । **भावगर्हाभिधायिना** इत्यस्योपलक्षणार्थत्वात् कौटिल्याभिधायिनेत्यपि द्रष्टव्यम् । तदुक्तम् —

"क्रियासमभिहारे च नैतेभ्यः" ( Vā. 6 on P. 3. 1. 22. M. Bhā. II, p. 30, l. 12. )

71. 1. AE[3] I. भेदान्तु.
72. 1. E[3] क्ययः
73. 1. A कृतः; E[3] I. हृतः



इति एत[2]दर्थं च नित्यग्रहणं केचिद् व्याचक्षते । अभ्यासः पौनःपुन्यं क्रियासमभिहारः । इत्थं च वाक्यवाच्य एव क्रियासमभिहारोऽत्र भृशं क्रामति पुनः पुनः क्रामतीत्यादि ॥ ७३ ॥

तदेवमन्वाख्यानोपायमात्रमवयवविभागपरिकल्पना[1], समुदायार्थप्रतीत्या त्ववयवार्थसंविदां बाधादसत्या अवयवाः । तथा हि ।

**शब्दा यथा विभज्यन्ते भागैरिव विकल्पितैः ।**
**अन्वाख्येयास्तथा शास्त्रमतिदूरे व्यवस्थितम् ॥ ७४ ॥**

**यथा** इति वीप्साप्रधानम् । यथा यथा **विभज्यन्ते भागैरिव** कल्पनाकल्पितैर्निरंशत्वात सत्यत इति **अन्वाख्येयाः तथा** अन्वाख्यानोपायो भागकल्पनेति यावत् । परमार्थतस्तु **शास्त्रम्** अवयवविभागकल्पनारूपम् **अतिदूरे** नित्यादन्वाख्येयान्निरंशाच्छब्दतत्त्वाद् अवस्थितम् । प्रतिपाद[2]कशब्दनिष्ठं ह्यन्वाख्यानम् । तेन च रेखागवयस्थानीयेन सत्यगव[3]यवदव्यवस्थितशब्दप्रतिपत्तिः । अत एव चोपायानां प्रक्रियाभेदः । केचित् किल भवतिशब्दं

"भवात् तिः ।"

इति व्युत्पादयन्ति, केचिद् भूशब्दादतिप्रत्ययेन, अन्ये मध्ये विकरणेन । एवम् एकशब्दाञ्ज्ञा[4]गारिकट्, एकागार[5]शब्दाञ्जिकट् । छन्दसः श्रोत्रभावो घश्च, तदधीते वाक्यार्थे पदवचनमित्यादिप्रक्रियाभेद उक्तः । एवं पुत्रीयादिशब्देऽपि प्रक्रियाभेदोऽभ्यूह्यः । पुतो रीयेण वा पोस्त्रीयेण वा पुत्राड्डीयेण वा व्युत्पत्तिः । इत्थं च व्युत्पत्तावपि पुत्रीयशब्दो विशिष्टक्रियावचन इत्यकर्मकत्वम् । यदा च व्युत्पत्तौ नियमाभावस्तदौणादिका अपि केचिदष्टाध्याय्यां व्युत्पाद्यन्ते ॥ ७४ ॥

इत्थमवयवानामसत्यत्वं सार्वत्रिकं निगमयति ।

**अर्थस्यानुगमं कञ्चिद् दृष्ट्वैव परिकल्पितम् ।**
**पदं वाक्ये पदे धातुर्धातौ भागश्च मुण्डिवत् ॥ ७५ ॥**

वाक्यार्थ एव स्थितलक्षणो वाक्यस्यैवाखण्डस्य वाचकत्वात् । तथा चापोद्धारबु[1]द्ध्यार्थसामान्यं वाक्यार्थे विशेषेऽनुरूपमुद्धृत्य तावदर्थं पदं नाम पृथगन्वाख्यातुमपोद्ध्रियते । निरंशस्य वाक्यस्यानेकरूपस्यान्वाख्यातुमशक्यत्वात् । पदं हि सर्ववाक्येषु

2. A तदर्थं.
74. 1. A °ल्पनं. 2. A प्रतिपादिकश° 3. I. P. सत्यगवव°. 4. A °ब्दादेकागा. 5. A गर्तरशब्दाड् डिकन्.
75. 1. A °द्धार्यसामा°.

समानरूपमित्यर्थसामान्यवाचि शक्यते व्युत्पादयितुम् । तच्च व्युत्पादितं यथायथं वाक्येषु संनिपतितं तत्त[2]द्वाक्यगतविशेषस्वीकाराद् विशिष्टार्थव्यवहारसाधनं जायते। न च पूर्वं सामान्यार्थं भूत्वा विशेषं स्वीकर्तुं समर्थम्

सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते ।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥[3]

इत्यादिदोषापातादिति । सामान्यभूतमर्थरूपं **परिकल्पितम्** उच्यते । यथैव हि पदेन व्यवहाराभावात् परिकल्पितरूपं तद् एवं तदर्थोऽपि । तदपि च पदं प्रकृतिप्रत्ययपरिकल्पनया व्युत्पाद्यत इति तत्राप्यपोद्धाराश्रयेण परिकल्पितान्वयव्यतिरेकवशेनार्थमात्रा प्रविभज्यते[4] प्रकृतिप्रत्यययोः । **धातुः** इत्युपलक्षणं[5] प्रकृतिरूपस्य । प्रत्ययोऽपि च गृह्यते ।

तत्रापि च प्रकृतिरूपं मुण्डिसूत्रिपुत्रीयाद्यवयवविभागेन प्रकृतिप्रत्ययकल्पनया व्युत्पाद्यते । एवमस्तिं सकारमातिष्ठन्ते । अकारस्त्वागमोऽत्रेति केचित् । तथा अतिप्रत्ययस्तिप्रत्ययो विकरणश्चेति वा । एवं स्यति स्यतः स्यन्ति प्रत्ययाः स्यो वा विकरण इत्येवमन्यदप्यूह्यम् । एवञ्च भागपरिकल्पने वर्णेष्वेवावस्थानं तेषां तुरीयादिभागानामव्यवहा[6]र्यत्वात् । तत्रापि वा परमाणुपर्यन्तभागपरिकल्पने न कश्चित् शब्दः स्यादित्यवश्यं भेदवादिना वर्णेष्वभिन्नत्वमभ्युपगन्तव्यमभिन्नप्रतीतेः । इत्थं च प्रथममेव वाक्यगतया अभिन्नसंविदा भेदस्य बाधनाद् वितयत्वं कस्मान्नोच्यते । व्यवहारेऽपि वाक्यमेव प्रथमप्रतीतम्[7] । तथा च तदेवाभिन्नबुद्धिप्रत्यायितमस्तु सत्यम् । एतच्च वाक्यकाण्डान्निश्चेतव्यम् ॥ ७५ ॥

तदेवं प्रक्रियाभेदेऽपि ।

**अविप्रयोगः साधुत्वे व्युत्पत्तिरनवस्थिता ।**
**उपायान्[1] प्रतिपत्तृणां नाभिमन्येत सत्यतः ॥ ७६ ॥**

**साधुत्वे** विषये विविधः[2]प्रयोगो नानाविधं प्रतिपादनं नास्ति स्थितलक्षणस्य शब्दस्योपेयस्योपायभेदेऽप्येकरूपत्वात् । उपाया हि प्रतिपादनाङ्गभूता प्राप्तावुपेयस्य

2. A °तद्वाक्य° 3. A treats this as a Kārikā of the Vrttisamuddesśa but it is a quotation of Vāk II, 15 in the commentary on verse 75. What follows the quotation is a continuation of the commentary on 75. 4. I. P. °ज्यते । प्रकृ°. 5. I. P. °णम् । प्र°. 6. A°हारार्यत्वात् 7. P °तीति.

76. 1. AE[3] I. °याव. 2. P °घप्रयो°.



चरितार्थत्वात् तिरोभवन्तीति न[3]तेषु सत्यताभिमानः कार्यः । विचित्रत्वाच्च प्रतिपाद्यप्रतिपादकयोर्यथारुचि प्रवृत्तौ **व्युत्पत्तिः** परं भिद्यते । सर्वत्रैव चायमेव क्रमः । अविद्यैव हि विद्योपायः । प्रतिपत्तिकाले गत्यन्तराभावाद् यथाकथञ्चित प्रतिपादनसंभवादुपेयप्राप्तिश्च तथा भ[4]वन्ती दृश्यते । तदुक्तम् —

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।[5]
अनागमविकल्पा तु स्वयं विद्योपवर्तते ॥ ( Vāk. II. 233. ) इति ॥ ७६ ॥

सर्वत्रैव चोपायानामसत्यत्वे यदृच्छाशब्दवन्नैमित्तिकोऽपि शब्दो निरस्तावयवविभाग इति नास्ति तत्त्वतो भेदः शब्दानामित्याह ।

**यथैव डित्थे डयतिः पाचके पचतिस्तथा ।**
**डयतिश्च पचिश्चैव द्वावप्येतावलौकिकौ ॥ ७७ ॥**

**यथैव** इति । अस्यैव स्पष्टीकरणम्—**द्वावप्येतावलौकिकौ** लोकव्यवहारेऽप्रसिद्धौ । [1]प्रकृत्यादिविभागस्य लोकेऽसंप्रत्ययान्निरंशस्य डित्थ पचति(पाचक?)रूपस्य समुदायस्य लोके प्रयोगादुभयत्रा[2]पि समानैवार्थगतिर भिन्नार्थसमुदायात् । कल्पनया तु डयतिधातुरसंभवदर्थो डित्थस्यान्वाख्यानायापोद्ध्रियते । पचतिस्तु सम्भवदर्थः पचति (पाचक?) शब्दस्येत्येतावान् भेदः । तथा च चतुष्टयी शब्दानां प्रवृत्तिरुद्घोष्यते साधुत्वस्य सत्यत्वे[3] ॥ ७७ ॥

तस्मादभिन्नादभेदपूर्वका भेदाः कल्पिताः शिष्टैरबुधान् प्रति व्युत्पत्त्यर्थमित्याह ।

**प्रकृतिप्रत्ययावूह्यौ पदात् ताभ्यां पदं तथा ।**
**अनुबन्धस्वरादिभ्यः शिष्टैः शास्त्रं न तान् प्रति ॥ ७८ ॥**

शब्दानां शिष्टाः प्रमाणम् । ते हि भावतत्त्वदृशो यद् यद् धर्मेऽङ्गतामेति तत्तत् साधुत्वेनाभ्युपयन्तः **प्रकृतिप्रत्ययावनुगुणावूहित्वा** लौकिकं पदं तावद् वाक्यादपोद्धृतं व्युत्पादयन्ति । तथा च **ताभ्यां प्रतिपाद्याः पदम्** । ऊहितमवयन्ति । डित्यादि वा पदं प्रत्यक्षकल्पेनोपदिष्टमित्यनुगुणप्रकृतिप्रत्ययोहे कारणम् । पचत्यादौ तु प्रकृतिप्रत्ययोपदेशेनानुमानकल्पे[2]न शब्दानुशासने संघातस्योहात् । द्विविधं हि शिष्टैरनुशासनं प्रारब्धम् । साक्षादुपेयनिर्देशेन यथा निपातनम् । उपायनिर्देशानुसारेण वा यथा विधिः । तत्र च प्रकृतीनामनुबन्धो अकारादिरुपग्रहदर्शनान्नियतः कल्पितः । प्रत्ययानां तु स्वरवृद्ध्यादि-

3. AE[3] नैतेषु. 4. AE[3] तथाविर्भवन्ती. 5. A gives this Kārikā as a part of the Vrttisamuddea, but it is only a quotation form Vāk, II.

77. 1. A I प्रसिद्ध्यादि° 2. A °दुपपत्तावपि. 3. AE[3] सम्यक्त्वे.

78. 1. A प्रतिपाद्यपदमू°. 2. A °कल्पने.

दर्शनात् तथैवानुबन्धप्रक्लृप्तिः । शिष्टानां तु निरावरणख्यातित्वात् प्रतिभात्मनि विवृत्तानामेव यथावत् सर्वभावगतत्वप्रख्यानात् संप्रत्युपदेशेन न कृत्यमनादिशास्त्राभ्यासादेव सिद्धेः । तथा च क्वचिदुपायानपेक्षापीत्यसत्या एव ते । अत एवोद्घुष्यते शिष्टपरिज्ञानार्थाष्टाध्यायीति ॥ ७८ ॥

यस्तु शिष्टस्मरणमनादृत्य शास्त्रमात्रशरणः सः

**शास्त्रदृष्टिस्तु शास्त्रस्य प्राप्तिमात्रेऽप्यनिश्चिते ।**
**युज्यते प्रत्यवायेन शास्त्रं चक्षुरपश्यताम् ॥ ७९ ॥**

बहुलमन्यतरस्यामेकेषामित्यादिसामान्यलक्षणात् **प्राप्तिमात्रे** कस्यचिद् विधेर्विषयविभागेन **अनिश्चिते** शिष्टप्रयोगमननुसृत्य स्वेच्छयैव शब्दान् प्रयुञ्जानोऽसाधुशब्दप्रयोगादधर्मेण संबध्यते । प्रयोगमूलौ हि धर्माधर्मौ । तस्माच्छिष्टप्रयोगानुसारेण लक्षणं विषयविभागेनावस्थापयितव्यम् । यद्येवमस्तु शिष्टप्रयोग एव, किमनर्थकेन शास्त्रेणेत्याह—**अपश्यताम्** शिष्टप्रयोगं साक्षादकुर्वतां **शास्त्रम्** एव चक्षुरिव **चक्षुः**, शब्दतत्त्व[1]दर्शननिबन्धनत्वात् । एवञ्च शास्त्रेण लक्षितान् शब्दान् ज्ञात्वा लक्षणनिरपेक्षमेव साधून् प्रयुञ्जानान् शिष्टाननुमिमते । तेभ्यश्च सामान्यलक्षणे भ्रान्तिमपनयन्तीति शास्त्रमपि सफलम् । तथा च

'लक्ष्यलक्षणे व्याकरणम्'
(Vā 14. पस्पशाह्निक M. Bhā. I, p. 12 l. 15.) इत्युक्तम् ।
'सैषा शिष्टपरिज्ञानार्थाष्टाध्यायी' (M. Bhā. III. p. 474, l. 11,)
इति च ॥ ७९ ॥

यदि तर्हि शास्त्रं चक्षुः किमिति तत् क्वचिद्
'न वानिष्टादर्शनात्' Vā. 2. on P. 2. 2. 30, M. Bhā. I, p. 435, l. 9)
[1]इति प्रत्याख्यायत इत्याशङ्क्याह

**अर्थान्तराभिधानाच्च पौर्वापर्यं न भिद्यते ।**
**राजदन्ताहिताग्न्यादिराजाश्वादिषु सर्वथा ॥ ८० ॥**

राजदन्तादौ लौकिकं यन्नियतं **पौर्वापर्यं तन्न भिद्यते** नान्यथा कदाचिदपि भवतीति विप्रयोगादर्शनाच्छास्त्रमत्र प्रत्याख्यायते । प्रयोगो विप्रयोगश्च द्वयं यत्रैकस्मिन्नर्थे दृश्यते तत्र शास्त्रारम्भो विप्रयोगनिवारणेन सफलः । इह तु दन्तराजः अश्वराज इति

3. A नि निवृत्ता°.
79. 1. P °त्तनिदर्शन°.
80. 1. A शास्त्रमत्र प्र°.



प्रयोगविपर्यासे विवक्षितविपरीतोऽर्थो गम्य[2]ते न तु य एव राजदन्त इत्यादौ । समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तकः । आहिताग्न्यादौ तु प्रयोगानियमेऽप्यर्थभिदो दृश्यत इति प्रत्याख्यानमेव युक्तम् । क्वचित्तु पाठः "पौर्वापर्यं न विद्यते" इति । पौर्वापर्यमुपदेश्यत्वेन नास्तीत्यर्थः ॥ ८० ॥

यदि तर्हि विप्रयोगा[1]दर्शनाच्छास्त्रमत्र प्रत्याख्यायते तदा गर्गा इत्यादावपि लुक्शास्त्रेण किं कार्यमित्यत आह ।

**विनैव प्रत्ययैर्वृत्तौ ये भिन्नार्थाभिधायिनः ।**
**गर्गादयो लुका तेषां साधुत्वमनुगम्यते ॥ ८१ ॥**

शब्दानां स्वाभाविकमर्थाभिधानमिति वृत्तावेकार्थीभावे गर्गा वत्सा इत्यादयोऽपत्यप्रत्ययमन्तरेण प्रकृत्यर्थभिन्नं प्रत्ययार्थमपत्यलक्षणमाचक्षते । गार्ग्य इत्यादि च प्रत्ययसहितं तदभिधानं दृष्टम् ।

'न केवला प्रकृतिः प्रयोक्तव्या' (M. Bhā. I. p. 234, l. 15.)
'परश्च' (P. 3. 1. 2.)

इति नियमेनावेदितम् । अत[2]: शास्त्रप्रक्रियानुसारेण केवलस्य प्रकृतिरूपस्यासाधुत्वे प्राप्ते लुगन्वाख्यानमुपपद्यते ॥ ८१ ॥

न[1]न्वेवमपि सोऽयमित्यभिसंबन्धादपत्ये गर्गादीनां प्रयोगः सिध्यति । तद् यथा भृगुश्चरति, अङ्गिराश्चरतीत्यपत्यवतोऽपत्ये प्रयोग इति किं लुगन्वाख्यानेनेत्यत आह ।

**सोऽयमित्यभिसंबन्धात् प्रत्ययेन विना यदि ।**
**बभ्र्वादयः प्रयुज्येरन्नपत्ये नियमो भवेत् ॥ ८२ ॥**

अपत्यापत्यवत्संबन्धपूर्वकः सोऽयमित्यभेदेनोपचारादपत्यवताऽपत्यमित्युच्यते गर्गा[2] इति । **सोऽयमित्यभेदसंबन्धः** कथ्यते । बहुवचनानुपपत्त्या हि गर्गापत्यान्युच्यन्ते, मूलप्रकृतेरेकत्वाद् बहुवचनानुपपत्तेः । तत्र चाभेदसंबन्धे भेदसंबन्धस्याविवक्षितत्वाद् अपत्यप्रत्ययो नास्तीति शक्यते लुगवक्तुम्, किन्तु अभेदसंबन्धस्योपचरितस्य नियतभेदपूर्वकत्वाभावादन्तेवासिनोऽपि गर्गस्य समारोपितगर्गरूपा बहुवचनेन प्रत्यायन्त इत्यपि शक्यते वक्तुमिति नियमेनापत्यादीनामभिधानं न प्र[3]तीयेत । तस्मादपत्ये नियमार्थमपत्यप्रत्ययस्य लुगुच्यते । स्वभावादेव तु प्रत्ययरहिता प्रकृतिस्तदर्थं ब्रूते । अन्यत्र प्रत्ययलक्षणार्थं लुक्, इह त्वर्थनियमार्थम् ॥ ८२ ॥

2. A. गम्येत.
81. 1. AE[3] °योगदर्श° 2. AE[3] अतश्चात्र शा°
82. 1. P. न चैव°. 2. E[3] शक्या इति. 3. P. प्रतीयते.

प्रस्थस्येयमितीदमर्थप्रत्ययस्य तर्हि लुगारम्भणीयोऽन्यथा नियमेन भार्या न प्रतीयेतेत्याशङ्क्याह ।

**सोऽयमित्यभिसंबन्धे लिङ्गोपव्यञ्जनादृते ।**
**प्रष्ठादिषु न जायैव नियमेन प्रतीयते ॥ ८३ ॥**

5 सत्यप्यत्रापि यत्नं विना भार्यायामभेदोपचारान्नियमो न स्यात् । अस्ति ह्यत्रापि यत्नः

'पुंयोगादाख्यायाम्' (P. 4. 1. 18.)

इति स्त्रीप्रत्ययो लिङ्गोपव्यञ्जनो[1]यतः । आख्याग्रहणाद्धि यादृशः पुंसि दृष्टप्रयोगः शब्दस्त[2]द्रूपादेव स्त्रीप्रत्ययोऽन्वाख्यायेत इति तद्धितान्तस्याख्याऽरूपत्वाभावात् तदनु[3]-
10 प[4]त्तावनुमितायां सत्यप्यभेदसंबन्धे स्त्रीप्रत्ययसहायात् प्रष्ठादिशब्दाद् भार्यावगतिः । ननु भगिन्यादावपि कथं न संप्रत्ययः । नैवम् । प्रस्थानकर्तृत्वासङ्गाद्धि स्त्रियामपि प्रस्थाने संविधानं संपादयन्त्यां पुंशब्दः प्रवर्तते । संविधातृत्वं भार्याया एवोपपद्यते, नान्यस्याः ॥ ८३ ॥

प्रस्थो व्रीहिरित्यादौ तर्हि प्रस्थेन प्रमित इति नियमप्रतिपत्त्यर्थं प्रत्ययस्य
15 लुगन्वाख्येय इत्याशङ्क्याह ।

**मानमेयाभिसंबन्धविशेषेऽङ्गीकृते तथा ।**
**प्रस्थादीनामसाधुत्वं तद्धितेन विना भवेत् ॥ ८४ ॥**
**तद्धितो योगभेदेन वाक्यं वा स्याद् विभाषितम् ।**
**परिमाणाधिके तत्र प्रथमा शिष्यते पुनः ॥ ८५ ॥**

20 अत्राप्यध्यारोपेणाभेदसंबन्धे मानमेययोगो नियमेन न प्रतीयेत, सामीप्यादेरपि संभवादिति

'तदस्य परिमाणम्' (P. 5. 1. 57.)

इति योगविभागेन **तद्धितः** स्यात् । **वाक्यं** वा महाविभाषया, प्रस्थः परिमाणमेषां व्रीहीणामिति । यत्नान्तरं परिमाणाधिके प्रातिपदिकार्थे प्रथमालक्षणमारब्धम् ।
25 निमित्तरूपेण निमित्तिनः प्रस्थप्रमितस्य व्रीह्यादेर्गौणस्याभिधाने प्रातिपदिकार्थग्रहणादेव सोऽयमिति संबन्धे सिद्धा प्रथमा । प्रस्थः परिमाणमेषां व्रीहीणामिति । परिमाणातिरिक्ते प्रमेये भूयः परिमाणग्रहणेनोपदिश्यते । तेन प्रथमान्तात् परिमाणशब्दान्मुख्यत[1] एव

83. 1. A om. प्रष्ठ—यस्य. 2 AE[3] नोऽस्तियतः आ°. 3. A °शब्दः प्रयोगस्तद्रूपादेव स्त्रीवृत्तेरयं प्रययो. E[3] शब्दप्रयोगः तद्रूपादेव स्त्रीवृत्तेरयं प्र°. 4. A AE[3] तदनुपपत्तौ.
84, 85. 1. AE[3] मुख्यतयैव.



प्रमेयं[2] प्रतीयते । **तद्धितोऽपि** विभाषितो वचनसामर्थ्यान्न बाध्यते प्रास्थिक इति । **वाक्यम्** अपि भवति ॥ ८४, ८५ ॥

ननु च परिमाणवाचि प्रातिपदिकं कथं परिमेये वर्तते इत्याह ।

**व्यतिरिक्तस्य साधुत्वे तदेव च निदर्शनम् ।**
**युज्यतेऽङ्गीकृताधिक्यं तत् सर्वाभिर्विभक्तिभिः ॥ ८६ ॥**

तदे[1]व परिमाणात् पुनः प्रथमाविधानं ज्ञापकं मानमेयसंबन्धोपहितव्यतिरेकार्था- 5
भिधाने । प्रस्थादेः स्वाभाविकं ह्यर्थाभिधानं ज्ञाप्यते । तथा च तद्धितेनेव भिन्नं प्रमेयं प्रथमयाभिधीयते । तत्र चान्तरङ्गे मानमेयसंबन्धे चरितार्था प्रथमा बाह्यक्रियाविभाविते कर्मादिके भेदे आधिक्येऽपेक्षिते संबन्धे विभक्त्यन्तरैर्द्वितीयादिभिर्बाध्यते । अतो बाह्यक्रियाविभावितकर्मादिशक्तिभेदलक्षणं प्रातिपदिकार्थाधिक्यमङ्गीकृतं स्वीकृतं येन तत् परिमेयवाचि पदं यथायथं सकलाभिर्द्वितीयादिविभक्तिभिः युज्यते संबध्यते । 10
प्रस्थं पचति, प्रस्थेन क्रीतमित्यादि । एवमभेदोपचारादभिधानेऽपि नियमार्थं लुगादियत्नारम्भः ॥ ८६ ॥

गुणगुणिनोस्तु स्वभावादेव नियतो योग इति किमर्थं गुणवचनेभ्यो मतुबो लुगन्वाख्यानमित्याह ।

**शुक्लादिषु मतुब्लोपो व्यतिरेकस्य दर्शनात् ।** 15
**असाधुत्वनिवृत्त्यर्थं साधवस्ते विदादिवत् ॥ ८७ ॥**

पटस्य शुक्ल इति व्यतिरेको दृष्टः । तथा च शुक्लः पट इत्यव्यतिरेके मतुप् स्यादिति केवलायाः प्रकृतेरसाधुत्वशङ्का स्यादिति व्यतिरेकनिबन्धनस्योत्पन्नस्य मतुप्प्रत्ययस्य युक्तं लुगन्वाख्यानम् । तथाहि

'अव्यतिरेकात् सिद्धम्' (Vā. 4. on P. 5. 2. 94, M. Bhā. II. p. 394, l. 10) 20

इत्युक्त्वा

'दृष्टो व्यतिरेकः' (ibid)

इति पुनर्लुगेव समर्थितः । लुगन्वाख्यानद्वारेण च विदाः, गर्गाः इत्यादिशब्दवद् गुणिनि संबन्धाद् वृत्तिराख्यायते । यथा[2] हि स्वार्थविशिष्टापत्यार्थाभिधानाद् बिदा 25
इत्यादयः प्रयोगा[3]र्हाः तथा शुक्लादयोऽपि, न तु सोऽयमित्यभिसंबन्धादेवेत्यर्थः ॥ ८७ ॥

2. A प्रथमं मेयं प्र°, E[3] प्रथमेयं प्र°.
86. 1. A तदेवं.
87. 1. E[3] व्यतिरे° 2. A तथा. 3. A प्रयोगः.

तदेवं समानाधिकरणवृत्तेः प्रस्तावेन विशेषणविशेष्यभावसमर्थनपूर्वकं प्रसक्तानुप्रसक्तायातं विचारं परिसमाप्य प्रकृतमेव विशेषणविशेष्यभावं वृत्तावभेदप्रतीतेरनुपपद्यमानमाशङ्क्यैकीयमतेन तावदुपपादयितुमाह ।

**विशेषणाद् विशेष्येऽर्थे तद्भावाभ्युच्चये सति ।**
**पुनश्च प्रतिसंहारे वृत्तिमेके प्रचक्षते ॥ ८८ ॥**

इहैकया प्रत्यया द्वयोर्विशेषणविशेष्ययोर्ग्रहणे परस्परोपकाराग्रहणात् किंभूतो विशेषणविशेष्यभावः स्यात् । न हि वस्तुतो नियतजातीयं विशेषणं नाम किंचिदस्ति । न चाप्यत्र शाब्दी प्रतीतिरेका युज्यते । अभिधा[1]नक्रमाद्धयभिधेये क्रमिकैव प्रतीतिर्न्याय्या । ततश्च

'नागृहीतविशेषणा विशेष्ये बुद्धिः'

इति पूर्वं विशेषणग्रहणं ततो विशेषणाद्धेतोरवच्छेदकत्वेन गृहीताद् विशेष्ये **तद्भा**[2]**वस्य** विशेषणरूपस्य **अभ्युच्चये** अतिरेके **सति पुनः प्रतिसंहारे**ऽसन्निवेस्त[3]द्भावाभ्युच्चयस्यैवोपेक्षणे वृत्तिरेकार्थीभावः । विशेष्ये ह्यतिशयमाधाय कृतार्थं विशेषणं न स्वरूपेण विशेष्यमतिरेचयति, मा भूद् द्वयर्थावसाय इति । तथा च विशिष्टस्यैवार्थस्य वृत्तावबधारणमुपपद्यते ॥ ८८ ॥

तदेतन्मतं दूषयति ।

**निमित्ते प्रत्ययः पूर्वो नानुप्राप्तो निमित्तिना ।**
**निमित्तवति बुद्धेश्च न निमित्तसरूपता ॥ ८९ ॥**
**संस्कारसहिताद् ज्ञानान्नोपश्लेषः स्मृतेरपि ।**
**व्यापारे तन्निमित्तानां न ग्राह्यं स्यात् तथाविधम् ॥ ९० ॥**

भिन्नज्ञानालम्बनवादे दूषणमिदम् । **नि**[1]**मित्ते**ऽवच्छेदकाभिमते विशेषणे प्रथमः **प्रत्ययो निमित्तिना** विशेष्याभिमतेन[2] नासादितः । न हि विशेषणग्रहणकाले विशेष्यग्रहणमत्र पक्षे, तस्य तदानीमस्तमयात् । **निमित्तवति च** विशेष्याभिमते या बुद्धिर्ज्ञानं तत्र निमित्तस्य विशेषणस्याप्रतिभासनान्न तदाच्छुरितत्वम् । एवं च वस्तुस्वरूपमात्रग्रहणं ज्ञानं कथं तत्र विशेषणतां विशेष्यतां च गृह्णीयात् । विशेष्यापेक्षं हि विशेषणत्वं विशेषणापेक्षं च विशेष्यत्वमिति परस्परज्ञाने परस्परस्वरूपानाभासनादापेक्षिकं विशेषणविशेष्यत्वं न गृहीतं स्यात् । अथ पूर्वज्ञानाहितवासनासव्यपेक्षमुत्तरं

88. 1. P. अभिधाक्र° 2. A. I. तद्भेदस्य. 3. A तथा चाभ्युच्चयस्यैवापेक्षणे.
89-90. 1. AE[3] न नि°. 2. AE[3] °तेनानासादितः



ज्ञानमिति, तस्मात् क्रमेण द्व[3]योरनुभवेऽपि पश्चात् संस्कारक्रमेणायाता स्मृतिस्तत्रावच्छेद्यावच्छेदकभावमावेदयत इत्युच्यते, तदपि न यस्माद् यथानुभवं स्मृतिरूपजायत इत्यनुभवगृहीतार्थरूपाधिक्यमुपश्लेषं परस्परयोजनमवच्छेद्यावच्छेदकत्वेन सङ्घटनं कथं सावकल्पयेत् । एवं ह्यननुभूतार्थविषयत्वं तस्या वि[4]घटेतेत्यप्रमाणं स्यात् । अथ यथा स्मृतिर्बाह्यविषयानुसन्धानात् तद्विषया कथ्यते तथा[5] बाह्यस्य तदानीमभावादान्तरस्यानुसंधातुः प्रमातुर्या विचित्राः शक्तयः ता अपि तस्या निमित्तमिति तेषां तन्निमित्तानां व्यापारेऽत्रावच्छेद्यावच्छेदकभावं प्रत्युपयोगे कथ्यमानेऽनुभवग्राह्यं बाह्यं वस्तु विशेषणविशेष्यरूपं न स्यात् । प्रमातृशक्त्यैवासत्यपि संश्लेषेऽर्थानां घटनादिति न भाविको विशेषणविशेष्यभावः समर्थितः ॥ ८९, ९० ॥

मा भूद् भाविक इति चेदाह ।

**अन्तःकरणवृत्तौ च व्यर्था बाह्यार्थकल्पना ।**
**तस्मादनुपकारो वा ग्राह्यं वा न तथा स्थितम् ॥ ९१ ॥**

अन्तःकरणं क्रिया यस्यासावनुसंधाता । प्रमातैवं कथ्यते । सर्वार्थग्राहकं वा मनोऽन्तःकरणं, तस्य वृत्तौ व्यापारेऽत्र विशेषणविशेष्यभाव[1]विषयेऽभ्युपगम्यमाने सर्वत्रान्तःकरणस्यैवाभासो बहीरूपतयाध्यस्तो भवत्वर्थः, तावतैव लोकयात्रासिद्धेरिति किमनुपपद्यमानेन बाह्येन कल्पितेन प्रयोजनमिति बाह्यार्थवादिनं प्रतीदमुच्यते । तस्य हि विशेषणविशेष्यभावादिसंबन्धो वस्तुसमवाय्यभिमतः । तथा च कल्पनानामनुभवमूलत्वमिति तदनुभवायातोऽयं विशेषणविशेष्यविकल्पः । तत्र च यथास्वं विषयोपक्षयत्वात् प्रत्ययस्य तटस्थस्यार्थस्य विशेष्यावच्छेदकलक्षणो नास्त्युपकारः । अनुसंधातृप्रमातृवशेन तु मानसे विकल्पेऽभ्युपगते ग्राह्यस्य तद्रूपशून्यत्वमित्युक्तार्थनिगमनम् ॥ ९१ ॥

एवं परमते भिन्नज्ञानावलम्बनपक्षेऽनुपपत्तिमुद्भाव्य स्वमतेनैकज्ञानावलम्बनवादेन वास्तवं विशेषणविशेष्यभावमवस्थापयितुमाह ।

**अनुस्यूतेव संसृष्टेरर्थे बुद्धिः प्रवर्तते ।**
**व्याख्यातारो विभज्याथ तां भेदेन प्रचक्षते ॥ ९२ ॥**
**तदात्मन्यविभक्ते च बुद्ध्यन्तरमुपाश्रिताः ।**
**विभागमिव मन्यन्ते विशेषणविशेष्ययोः ॥ ९३ ॥**

इह यथावस्तु प्रत्ययाः [1]प्रभवन्ति । वस्तु च जातिगुणोपाधिविशिष्टमभिन्नमित्यभिन्न एव प्रत्ययः । समवायतिरोहितभेदा हि जात्यादयो वस्तूनामा[2]नुरूपकाः तत्र

3. A तयोर°. 4. E[3]I. P. तस्यापि घटेते°. 5. AE[3] चाबाह्यस्यत°.
91. 1. P °भावादिवि°. 3. A तयोर°
92-93. 1. AE[3] I. भवन्ति 2. AE[3] °मारूपका.

समवायिनः। श्वैत्यात् (?) श्वैत्ये बुद्धे[3] श्वेते बुद्धिः, ते कार्यकारणभूते इति पारमार्थिकपदार्थभेदावलम्बने[4]ऽनौचित्यात् क्रमस्योच्यते। प्रतिभासवेलायां तु क्रमो नास्ति विशिष्टस्यैव वस्तुनो झटित्येकप्रत्ययारोहात्। अत एव केचिद् जात्यादीन् संसर्गिणोऽपह्नुवते। एवञ्च भेदावभासपूर्वकस्य संसर्गस्याभावाद् अनुस्यूतेव बुद्धिः जात्यादिभिः संसर्गिभिः कथ्यते। परमार्थतो भेदपूर्वकस्य संसर्गस्यार्थानामभावात्। वस्तुस्थित्या त्वेवमुच्यते। एवमभिन्नबुद्धिप्रतिभासिनोर्नीलोत्पलादौ गुणद्रव्ययोर्भेदपूर्वकस्यावच्छेद्यावच्छेदकभावस्याभावः किंतु निरंशस्य वस्तुनः परेभ्यः प्रतिपादयितुमशक्यत्वात् प्रतिपादनकाले प्रतिपादकास्तान् संसृष्टान्[5] जात्यादीनर्थानपोद्धारबुद्धया पृथक्कृत्यायं गुणो जातिर्वा विशेषणमिदं द्रव्यं विशेष्यमिति बुद्धयन्तरविभागेन पूर्वप्रतिपादितरीत्या प्रतिपादयन्ति। तथैव च प्रतिपद्यन्ते प्रतिपत्तारः। एवञ्च वस्तुबीजमनुसृत्य प्रतिपादनाद् बाह्येऽस्ति सद्भावो विशेषणविशेष्यत्वस्य। [6]तदेव हि बाह्यं संसृष्टं व्याख्यानाय विभज्यते। तत्र ह्यस्ति गुणा[7]दिर्विशेषणं द्रव्योपरञ्जकं, जात्यादिरहितस्य द्रव्यस्यायोगाच्च तदवच्छेद्यं, संबन्धश्च समवाय इति सर्वं वास्तवम्। तथा च विभागकल्पनोपायेन तदात्मा[8]विभक्त एवार्थः प्रतिपादितो भवति। तथैव च विभागबुद्धयाहितविशेषणविशेष्यरूपतया प्रतिपद्यन्ते व्यवहर्तारः। यद्यपि विभागावस्था वाक्यदशा तथापि वाक्या[9]वस्थागतज्ञानवासनया वृत्तावपि विशेषणविशेष्यप्रतीतिरस्त्येव। परमार्थतस्तु वृत्तौ निरंश एवार्थ इति सापि निरंशा वाचिका सिद्धा। तदेवं धर्मभेदेन वृत्तिवाक्ययोरत्यन्तभेदः प्रतिपादितः ॥९२, ९३॥

मतान्तरमप्युपक्षिप्तं भाष्ये

'अथ ये वृत्तिं वर्तयन्ति किं त आहुः। परार्थाभिधानं वृत्तिः।'

(M. Bhā. I. p. 364, l. 6.)

इति। तद् व्याचष्टे।

अबुधान् प्रति वृत्तिं च वर्तयन्तः प्रकल्पिताम्।
आहुः परार्थवचने त्यागाभ्युच्चयधर्मताम् ॥ ९४ ॥

निर्विभागं वृत्तिपदार्थरूपमवगन्तुमशक्ताः प्रतिपत्तारोऽबुधाः। ते हि यथाश्रुतग्राहिणो यथावद्वचनं वाचनिकं मन्यन्ते। ततश्च तान् प्रति वाक्योपमर्देन प्रक्रियायां वृत्तिर्व्युत्पाद्यमाना वाक्यप्रकृतिकैवावतिष्ठते। ततश्च वाक्यमपि नित्यं स्वविषय इति

3. A बुद्धे श्वेतबुद्धिः, E[3] बुद्धे श्वेतबुद्धिः. 4. I. P. °नेऽनौचित्यात्. 5. A om. संसृष्टान्, E[3] तत्संसृष्टान्. 6. A तस्मादेव, E[3] °ज्यततः। स्यादेव हि वा°. 7. A गुणाषत्वादिभिः, E[3] गुणदिभिर्वि. 8. A तदात्मा विभ°. 9 A वाक्यगतज्ञान°.



तस्यानुच्छेद्यत्वात् तत्प्रकृतित्वेन समारोपिता कल्पिता वृत्तिर्निर्वर्त्यते। तत्र कारणाद् कार्यमधिकार्थक्रियाकारि दृष्टं पटादि। एवमिहापि वृत्तिलक्षणस्य कार्यस्य वाक्यगतपदार्थाधिक्यं न्याय्यमिति परार्थाभिधानं वृत्तिलक्षणमारभ्यते। परस्यान्यस्य प्रधानस्य पदस्य योऽर्थः तस्योपसर्जनपदेन प्रत्यायनम् तत्र

'एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।' (Vāk II. 250)

इति नये वाक्यावस्थायामुपसर्जनपदस्य परार्थाभिधानशक्तिप्रतिघातापेक्षया वृत्तौ परार्थाभिधानमुच्यते। अनेकार्थप्रत्यायनसामर्थ्याद्धि स्वार्थ एव स[1] तस्य तत्र भवति परा[2]र्थः। यदा तु

'अन्यायश्चानेकार्थत्वम्'

इति नयस्तदा[3] वृत्तावन्यदेवोपसर्जनपदमित्यर्था[4]न्तरमुपादत्ते। एवं परार्थवचने सति द्वैतं भवति। वाक्यावस्थागतमर्थं परित्यज्योपसर्जनं वृत्तौ परार्थमभिदधाति। तद्यथा कलशे दधि स्थितमपनीय क्षीरं निधीयते, नावस्थित एव दधनि निधातुं शक्यते तत्। सेयं जहत्स्वार्था वृत्तिः। अपौरुषेये शब्दार्थसंबन्धे कथं त्याग इति चेत्, न। अनुपादान एवात्र त्यागोपचारात्। यथा ह्यग्निसंयोगः पाकजान् विशेषणानुत्पाद्य परमाणुषु निवर्तते तथोपसर्जनार्थः प्रधाने विशेषमाधाय तावन्मात्रप्रयोजनत्वान्निवर्तते। अत्र निदर्शनं भाष्येऽभिहितम्।

तद् यथा। 'तक्षा राजकर्मणि प्रवर्तमानः[5] स्वं कर्म जहाति।'

(M. Bhā. I. p. 364, l. 12)

इति। कोशसमाहरणसन्निधानादौ राजकर्मणि व्याप्रियमाणस्तक्षा स्वं दारुच्छेदचतुरश्रीकरणादिव्यापारं जहाति। स्वव्यापारापरित्यागे राजकर्मणोऽनुष्ठातुमशक्यत्वात्। एवं स्वार्थानुपादानेन पदान्तरार्थोपादानमुपसर्जनानां वृत्तौ न्याय्यमनेन निदर्शनेन। अन्ये तु मन्यन्ते—अवस्थित एव प्राच्येऽर्थेऽर्थान्तराभ्युच्चयोऽसावुपसर्जनपदानामाधिक्यम् ॥ तथा हि—सिकताकलशे जलं निहितमवतिष्ठते। लाक्षादिहेतुजनितश्च रागातिशयस्तन्तूनां कार्येऽप्यनुवर्तते। एवमुपसर्जनपदस्य स्वार्थोऽर्थान्तरोपादानेऽपि। युक्तं चैतत्। दृष्टस्यार्थस्य स्वरूपवच्छब्दैस्त्यागायोगात्। अत्रापि निदर्शनं भाष्येऽभिहितम्—

'भिक्षुको द्वितीयां भिक्षामासाद्य पूर्वां न जहाति, सञ्चयायैव यतते।'

(M. Bhā. I. p. 365, l. 1.)

इति। तदियमजहत्स्वार्था वृत्तिः। [6]एवञ्च राजार्थेन पुरुषार्थस्य विशेषणाद् विशिष्टार्थ-

94. 1. A om. स तस्य. 2. A परार्थं. 3. A तदवृत्ता°. 4. A °र्थोवपरम्°
5. M. Bhā. प्रवर्तते. 6. A om. एवञ्च राजार्थेन—उद्भूतावयव.

सम्प्रत्ययः । यद्येवं राजार्थस्यापि सम्भवाद् वृत्तौ राजपुरुष इत्यत्र द्विवचनं प्राप्नोति
धवखदिरादिवत् । नैतदस्ति । द्वन्द्वे समप्राधान्याद् द्वयोरुद्भूतावयवभेदत्वात् समुदायस्य
युक्तं द्विवचनम् । इह तु विशेषणविशेष्यभावावच्छिन्नमर्थान्तरमेवानभिधेयमवयवैः
समुदायेनोपादीयते । यथा बहुव्रीहौ [7]लोहितवसनश्चित्रगुरित्यादि । ततश्चावयवा-
5 र्थाहितभेदस्य [8]परार्थस्य समुदायेनाभिधीयमानत्वात् ततः परा विभक्तिः समुदायार्थ-
निवेशिनीं संख्यामुपादत्ते । तथा चार्थवत्त्वे समुदायस्यानेकवचनस्य परिहार उक्तः ।

"संघातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः ।"
(Vā. 3 on P. 2, 1. 1. M. Bhā. I, p. 365, l. 7)

इति । तदेवं **त्यागश्चाभ्युच्चयश्च** यो **धर्मः** स्वभावोऽस्या वृत्तेः तद्भावस्तत्ता, तामाहुः॥९४॥
10 परार्थाभिधानलक्षणायां तस्यां तत्र[1] जहत्स्वार्थायां वृत्तौ चोदितम्—

'राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, औपगवमानयेत्युक्तेऽ-
पत्यमात्रस्य' (M. Bhā. I, p. 364, l. 8)

इति । ननु चोपसर्जनपदानामर्थत्यागे [2]प्रयोगः किमर्थ इति कथं न चोद्यते । नास्त्येतत् ।
यावो यावक इतिवत् पर्यायरूपेण राजपुरुष इति प्रयोगोपपत्तेः तथैकार्थीभावलक्षण-
15 सामर्थ्यनिबन्धना समाससंज्ञापि यथा स्यादिति । अविशेषेण तु समाधिरुक्तः

'जहदप्यसौ स्वार्थं नात्यन्ताय जहाति । [3]अथवान्वयाद् विशेषणं भविष्यति'
(M. Bhā. I, p. 364, l. 15)

इति । एतद् विवृणोति ।

**अन्वयाद् गम्यते सोऽर्थो विरोधी वा निवर्तते ।**
20 **द्व्यर्थमर्थान्तरे वापि तत्राहुरुपसर्जनम् ॥ ९५ ॥**

उक्तमेतदग्निसंयोगाहिता विशेषाः परमाणूनां निवृत्तेऽप्यग्निसंयोगेऽनुवर्तन्त
इति । एवमुपसर्जनपदार्थः प्रधानार्थं विशेष्य[4] निवर्तत इति तदाहितविशेषानुगमाद्
विशिष्टः पुरुषः प्रतीयते, न पुरुषमात्रम् । अत्र भाष्ये मल्लिकापुटो दृष्टान्तोऽभिहितः ।
कुसुमसं[5]पर्कोपहितगन्धविशेषानुवृत्तेरपनीतकुसुमोऽपि पुटस्तद्व्यपदेश्यः । एवमर्थस्य त्यागे
25 कथं नात्यन्ताय जहातीत्युच्यते, न[6] ह्यंशेनार्थो निवर्तते अंशेनावतिष्ठत इत्याशङ्क्य
पक्षान्तरमाह—**विरोधी वा निवर्तत** इति । प्रधानार्थावच्छेदप्रतिद्वंद्वी स्वभावोऽपैत्यु[7]-

7. E[3] °तवनश्चि°. 8. A परार्थसमु°. 9. A °क्षयनिवेशि°

95. 1. A om. तत्र जहत्स्वार्थायां. 2. A संयोग. 3. मयान्वयाद्
4. P.° ष्यमनुव°, E[3] °ष्यं नि°. 5. P °मसंसर्गो° 6. P तदप्यंशे°. 7. A °वो वेद्यु°.



पसर्जनार्थस्य । कश्च तस्य प्रतिद्वंद्वी, यः प्रधानभूतः । [8]द्वयोर्हि प्राधान्ये परस्पर-
संबन्धाभावाद् विशिष्टोऽवच्छिन्नः प्रधानार्थो न प्रतीयेतेति स्वप्राधान्यमुपसर्जनस्य
निवर्तते । अत एव स्वविशेषणेन समृद्धादिना न युज्यते । प्रधानोपकाराय तु यद्रूपं
विशेषणतात्मकं तन्नापैत्यविरोधादिति नात्यन्ताय जहातीत्युक्तिः । सर्वथा हि स्वार्थ-
परित्यागे स्वपदार्थेन प्रधानोपकाराभावादुपसर्जनपदं स्वरूपमेव जह्यात् । परोपकार- 5
प्रभावितं ह्युपसर्जनम् । असति च परोपकारे प्रयोगवैयर्थ्यम्, उत्तरपदादेव प्रधानार्थ-
प्रतीतेः, अनर्थकस्य चापरेण संबन्धाभावात् सामर्थ्यनिबन्धना समाससंज्ञा न स्यादिति
न सकलार्थपरित्यागः । [9]तक्षाऽपि [10]हिक्कितहसितादीनि प्राणित्वाव्यभिचारीणि
राजकर्मण्यनुगुणानि न जहाति । स्वप्राधान्यमेव स्वस्य हीयत इति जहत्स्वार्था वृत्तिः ।
अजहत्स्वार्थायां तु वृत्तौ सर्वथैव सन्नुपसर्जनपदार्थः । स्वविशेषणविशिष्टं प्रधानार्थं हि 10
तत्रोपसर्जनपदमभिदधातीति **द्व्यर्थम्** उच्यते । प्रधाने च पांसूदकवदभेदापत्तेर्विवेका-
भावात् स्वविशेषणेन न युज्यते गुणपदार्थः । विषयभेदेन च शब्दानामर्थवैचित्र्याद्
वृत्तौ गुणप्रधानभूतार्थद्वयाभिधानमुपसर्जनपदानां युक्तम् । द्विवचनं तु न भवतीति
पूर्वमेवोक्तम् । केचित्तु जहत्स्वार्थायां वृत्तावुपसर्जनपदस्य सर्वथैवार्थत्यागं प्रधानार्थ-
वृत्तित्वं च मन्यन्ते । वर्णवदनर्थकं ह्युपसर्जनपदं वृत्तिपदस्यावयवभूतम् । पर्यायश्चायं 15
पुरुषशब्दस्य राजपुरुषशब्दः । अत्र पुरुषविशेषप्रतिपत्तिर्न स्यादिति चोद्यम् ॥ ९५ ॥

यदि तर्हि वाक्य इव वृत्तावपि विशिष्टार्थप्रतीतेर्नात्यन्ताय हानं तदा जहत्स्वा-
र्थत्वं वाङ्मात्रेण स्यादित्याशङ्क्याह ।

**उपायमात्रं नानात्वं समूहस्त्वेक एव सः ।**
**विकल्पाभ्युच्चयाभ्यां वा भेदसंसर्गकल्पना ॥ ९६ ॥** 20

वाक्ये विच्छेदोपक्रमार्थाभिधानं, वृत्तौ तु विशिष्टोऽर्थोऽभेदेन प्रतीयत इति
निरंशमेव परमार्थतो वृत्तिपदम् । उपायमात्रं तु [1]वाक्यगतपदार्थभेदेन व्युत्पादनमिति
प्राधान्यस्य त्यागाज्जहत्स्वार्थता[2]भणितिः । अतोऽनन्तरं भाष्ये पठितम्

'[3]अथवा वृत्तौ समर्थाधिकारः क्रियते, सामर्थ्यं नाम भेदः, संसर्गो वा, भेद-
संसर्गौ वा' (M. Bhā. I. p. 364, l. 23-24) 25

इति । तद् व्याचष्टे **विकल्प** इत्यादिना । वाक्यप्रकृतित्वं वृत्तिपदस्य मन्यमाना वाक्य-

8. P अनयोर्हि. 9. P तथापि. 10. A क्षुतहसिता. 11. A °त्यागः.
96. 1. A °र्थभेदेन. 2. E[3]IP °ताफाणितिः । 3. M. Bhā. text is as
follows; अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते । सामर्थ्यं नाम भेदः संसर्गो वा । अपर आह ।
भेदसंसर्गौ वा सामर्थ्यमिति ।

गतभेदसंसर्गकल्पनामत्र कुर्वन्ति । तथाहि—भेदो वाक्यार्थः संसर्गो वेति **विकल्पः** । द्वावपीति **अभ्युच्चयः** । समुच्चयः । तत्र पुरुषशब्दस्य भृत्यवाचित्वे स्वामिनः सामान्येनावगतौ राजशब्दः स्वामिविशेषेभ्यो व्यावृत्तिं प्रतिपादयतीति भेदो वाक्यार्थः । अनुमीयमानश्चात्र संसर्गः । यदा तु जातिवाची पुरुषशब्दस्तदा राजशब्दाद् विशिष्टेनार्थेनैतदर्थस्य समन्वयोऽवगम्यत इति संसर्गो वाक्यार्थः । विशिष्टत्वाच्च संसर्गस्यार्थान्तराद् भेदोऽनुमीयमानः । एवं गुणप्रधानभेदेन विकल्पः । उभयस्य वा शब्दात् प्रतीतेरविशेषेणोभयं सामर्थ्यम् । तदेवं विशिष्टार्थवृत्ति पदमिति न पुरुषमात्रस्यानयनमवयवार्थस्यानर्थक्येऽपि ॥ ९६ ॥

अत एव चोपायत्वाद्विभागस्य मतभेदोऽनवस्थितत्वाद् रुचिवैचित्र्येणोपायानामित्याह ।

**वृत्तिं वर्तयतामेवमबुधप्रतिपत्तये ।**
**भिन्नाः संबोधनोपायाः पुरुषेष्वनवस्थिताः ॥ ९७ ॥**

वृत्तिवाक्ययोरभेददर्शिनां प्रकृतिविकारभावेन व्युत्पादयतां व्युत्पादकानां **पुरुषेषु** प्रतिपत्तृषु **सम्बोधनोपाया** व्युत्पादने हेतवो रुचिवैचित्र्याद् **भिन्नाः** विलक्षणाः । ये हि वृत्तिवाक्ययोः समान[1]मर्थमयध्यस्यन्ति तद्दर्शनेनाजहत्स्वार्थत्वमुच्यते । ये तु स्वाभा[2]विकमर्थभेदमनयोः पश्यन्ति तद्दर्शनेन[3] जहत्स्वार्थत्वमित्यसत्यभूतभेदसंसर्गाश्रयेण व्यवस्था भिद्यते ॥ ९७ ॥

तदेवं परमार्थतोऽत्यन्तभेदो वृत्तिवाक्ययोरिति संख्याविशेषतिरोधानादयो वृत्तौ विशेषाः प्रोक्ताः । तत्र च विभक्त्यभावादेव संख्याविशेषतिरोधानमिति चोदिते
'न शब्दनिमित्तकेन नामार्थेन भवितव्यमर्थनिमित्तकेन नाम शब्देन भवितव्यम् । तदेतदेवं दृश्यतामर्थरूपमेवैतदेवंजातीयकम् ।' (M. Bhā. III. l. 253, l. 13.)
इत्युक्तम् । एतद् व्याचष्टे ।

**वाचिका द्योतिका वापि सङ्ख्यानां या विभक्तयः ।**
**तद्रूपेऽवयवे वृत्तौ सङ्ख्याभेदो निवर्तते ॥ ९८ ॥**

त्रिके प्रातिपदिकार्थे सङ्ख्याया वाचिका विभक्तयः, पञ्चके तु द्योतिकाः । ताश्च राज्ञः पुरुषो, राज्ञोः राज्ञां पुरुष इति वाक्ये दृश्यन्ते स्वार्थप्रयुक्ताः । वृत्तावपि राजपुरुष इत्यत्र वाक्यसदृश एव पूर्वपदविभागः । तथा च तत्रापि सङ्ख्याविशेषप्रयुक्ता विभक्तयः श्रूयेरन् । सति ह्यर्थे तद्वचनः शब्दः प्राप्नोति, न तु शब्दाभावे वाचनिके वृत्तावर्था-

97. 1. E[3] समानार्थत्वमध्य. 2. I तु माविक° 3. A तद्दर्शने न ज°, E[3] तद्दर्शने जह°.



भावाभिधानं युज्यते । सङ्ख्याशब्दाभावाद् वृत्तौ सङ्ख्याविशेषो नास्तीत्यनुमीयते । तथा हि—प्रधानार्थसम्भेदादुपसर्जनार्थस्य भेदाभावान्निवर्तते सङ्ख्याविशेष इति तदभावात् स्वाभाविक्येवानुत्पत्तिर्विभक्तीनां, प्रत्ययलक्षणार्थं लुगन्वाख्यायते । इत्थं सादृश्यमात्र[1]भ्रान्तं वृत्तिवाक्ययोर्न तत्त्वत ऐक्यम्, वाक्ये सङ्ख्याभेदसद्भावाद् वृत्तौ तदभावादित्यत्र तात्पर्यार्थः ॥ ९८ ॥

एवं तावदुपसर्जनार्थो निवृत्तसङ्ख्याभेद इत्येकीयं मतम् । अन्ये तु मन्यन्ते ।

**अभेदैकत्वसंख्या वा तत्रान्यैवोपजायते ।**
**संसर्गरूपं संख्यानामविभक्तं तदुच्यते ॥ ९९ ॥**

वृत्तावुपसर्जनपदार्थानां [1]सत्त्वभूतत्वादावश्यकः सङ्ख्यायोगः । न ह्यव्ययवन्निःसङ्ख्य एवोपसर्जनार्थो युक्तः, सत्त्वमात्रस्य सम्प्रत्ययात् । न च विशेषोऽवधार्यते । अतः सामान्यसंख्यारूपं सर्वसङ्ख्याविशेषाणां[2] संसर्गरूपं क्रोडीकारकं विद्यत इत्यनुमीयते । द्वित्वादिप्रतिपक्षं ह्येकत्वं द्वित्वाद्यपावर्तनान्न समस्तसङ्ख्याभेदस्वीकारसमर्थम् । इदं त्वभेदैकत्वं सर्वानुयायि । अत्र हि [3]सर्वे सङ्ख्याभेदाः संसर्गमविभागमनुप्राप्ता विद्यन्ते । तथा च सति निमित्ते ते तत आविर्भवन्तो दृश्यन्ते [4]प्रसेवकादिव शाणादिविशेषाः । अतश्च शौर्पिकतावकीनमासजातादौ भवति विशेषनिश्चय इति वक्ष्यते । अविभक्तमेकस्वभावत्वात् किञ्चिद् भवति, न तु संसृष्टम् । संसर्गेऽपि च भेदः स्यादित्युभयमुपात्तं **संसर्गरूपमविभक्तं** चेति ॥ ९९ ॥

एतदेव निदर्शनेन व्युत्पादयति ।

**यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।**
**अविभागेन वर्तन्ते तां सङ्ख्यां तादृशीं विदुः ॥ १०० ॥**

**मधुनि** माक्षिके बहुपुष्परसाः [1]प्रत्यर्पितस्वरूपास्तत्कार्यत्वादिति नानाजातीयौषधिरससम्भेदेन मधुरससम्पादने विचित्रास्ते रसा विवेकेन न लक्ष्यन्ते । अथ च कारणभूतौषधिरसानुगुण्येन मधुनो रसवीर्यविपाका[2] अवधार्यमाणा यथास्वं कार्यदर्शनानुमीयमानसामर्थ्याः सन्निहितास्त इत्यवसीयन्ते । तथैव यथानिमित्तं संख्याभेदावसायादुपसर्जनपदार्थे सर्वसङ्ख्याविशेषाणामविभागे[3]नावस्थानादभेदैकत्वसङ्ख्यापि तथाभूतैव बोद्धव्या । सङ्ख्याभेदानां हि ततोऽपोद्धारात् सङ्ख्येति कथ्यते । न तु तया यत्

98. 1. E[3] om. भ्रान्तं.
99. 1. AE[3] सत्यभू°. 2. A °विशेषणं, E[3] °विशेषणाय. 3. AE[3] om. हि सर्वे. 4. A प्रसेकादिव.
100. 1. A प्रसर्पित°. 2. E[3] ° र्यविपक्षा, 3. E[3] °गेन स्यादभेदै°.

किञ्चित् गण्यते द्वित्वादिकयेव । सङ्ख्यासंसर्गस्य च संसृष्टविवेकेन रूपानवधारणात् सङ्ख्याविशेषसामान्यरूपेयम् ॥ १०० ॥

प्रकारान्तरमत्रैवाह ।

**भेदानां वा परित्यागात् सङ्ख्यात्मा स तथाविधः ।**
**व्यापाराज्जातिभागस्य भेदापोहेन वर्तते ॥ १०१ ॥**

परित्यक्तभेदा[1] तान् भेदान् व्यावर्तयन्ती सङ्ख्याव्यपदेशमियमप्यासादयति ।तथा च तथाविधोऽभेदैकत्वस्वभावोऽसौ सङ्ख्यात्मा व्यक्तिभेदतिरोधानेन जातिरूपाश्रयेण वर्तते । [2]भेदापोहलक्षणं हि सर्वसङ्ख्यानां जातिरूपमनुगतम् । पूर्वत्र समस्तभेदसंसर्गमात्रं समस्तभेदात्मकमभेदैकत्वमुक्तम् । इदानीं तु समस्तभेदानुगतरूपमन्यापोहरूपमिति विशेषः । यथा ह्येकत्वं द्वित्वाद्यपावर्तयति द्वित्वं च त्रित्वादि एवमिदमभेदैकत्वं सर्वमेकत्वाद्यपावर्तयतीत्यस्ति सङ्ख्यात्वम् । सति च निबन्धने [3]द्वित्वैकत्वादि प्रतीयत इति सामान्यात्मकताभ्युपगतात्र ॥ १०१ ॥

ननु चाभिन्नप्रत्ययवेद्यं सामान्यं गोत्वादि । अत्र चाभेदैकत्वस्य न किञ्चित् कार्यम् । भेदा एव हि शास्त्रकार्ययोगिन इति किं तत्सद्भावे लिङ्गमित्याशङ्क्याह ।

**अगृहीतविशेषेण यथा रूपेण रूपवान् ।**
**प्रख्यायते न शुक्लादिभेदरूपस्तु गृह्यते ॥ १०२ ॥**
**भेदरूपसमावेशे तथा सत्यविवक्षिते ।**
**भागः प्रकाशितः कश्चिच्छास्त्रेऽङ्गत्वेन गृह्यते ॥ १०३ ॥**

गुणैरविनाभावाद् द्रव्यमप्रतीतनीलादिगुणरूपमपि सामान्येन रूपवदिति प्रतीयते यथा दूरात् तथा सङ्ख्याविशेषसमवाये प्रतिपाद्यत्वेनानिष्टे[1] सङ्ख्यावानित्येतावतावगते सत्त्वभूतत्वादुपसर्जनार्थे योंऽशस्तत्संसृष्टो निमित्तविशेषात् [2]तवकाद्यादेशलक्षणादाविर्भूतः स तावकीनादिशब्दान्वाख्यानाय शास्त्रे निमित्ततयोपादीयते । तथा च सङ्ख्यावत्त्वसम्प्रत्यय एवात्रोपसर्जनार्थस्या[3]भेदैकत्वसङ्ख्याकार्यम् ॥ १०२, १०३ ॥

यदि तर्हि सर्वसङ्ख्यासंसर्गरूपमभेदैकत्वं न तद्व्यतिरिक्तं तदोपसर्जनपदैर्विशेषात्मकमेव कथं न प्रतिपद्यत इत्याह ।

**सङ्ख्यासामान्यरूपेण तदा सोंऽशः प्रतीयते**
**अर्थस्यानेकशक्तित्वे शब्दैर्नियतशक्तिभिः ॥ १०४ ॥**

101. 1. AE[3] दाः तान्. 2. A अभेदापो°. 3. E[3] द्वित्वादि.
102–103. 1. AE[3] °त्वेनान्विष्टे. 2. A तावका°. 3. A °र्थस्य ॥ १०४–१०५ ॥ अभेदैकत्वे सङ्ख्याकार्यम् यदि । तर्हि.



**सोंऽशः** पूर्वपदार्थभाग उपसर्जनार्थः सत्त्वरूपत्वादनेकसंख्यासमाहा[1]रयोग्योऽपि संख्यावानित्येवमभेदेनैवोपसर्जनपदेन प्रतिपाद्यते । न तु विशेषरूपप्रतिपादने तस्य शक्ति रेव वाक्यवद् वृत्तौ । अनेकशक्तिरपि ह्यर्थो न शब्दैः साकल्येन स्पृश्यते, नियतविषयत्वाच्छब्दशक्तीनामित्यर्थः ॥ १०४ ॥

ननु च यद्युपसर्जनार्थे सङ्ख्याया अभेदः कथं भेदानुगमः, अथ भेदः कथमभेदात्मकत्वमित्याशङ्क्याह ।

**अव्ययानां च यो धर्मो यश्च भेदवतां क्रमः ।**
**अभिन्नव्यपदेशार्हमन्तरालं तदेतयोः ॥ १०५ ॥**

अलिङ्गसङ्ख्यमव्ययमित्यसङ्ख्य[1]त्वमव्ययानां स्वभावः । एतादृशी हि शब्दशक्तिर्यदव्यया[2]नि सत्वस्वभावादतिवृत्तमतश्च निःसङ्ख्यमर्थमाहुः । भेदवन्तो विभक्तिविशेषावच्छिन्नाः शब्दाः । तेषामेकत्वादिसङ्ख्याविशेषावच्छिन्नार्थप्रत्यायनं स्वभाव इति तदर्थो विशिष्टसङ्ख्यायुक्तः । तदेतामुभयीमवस्थामतीत्योपसर्जनपदानामर्था वर्तन्ते । तदेवं वृत्तावभेदैकत्वसङ्ख्यावगमो विशेषो वाक्याद[3]त्यत्यन्तभेदः ॥ १०५ ॥

अत्र वार्तिककारीयं संवादकमाह ।

**अलुकश्चैकवद्भावस्तस्मिन् सति न शिष्यते ।**
**स च गोषुचरादीनां धर्मोऽस्ति वचनान्तरे ॥ १०६ ॥**

इह स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इत्यपि वाक्ये स्तोकान्मुक्त इत्येवेष्यते वृत्तिः । तथा च

'एकवद्भावो वक्तव्यः' ( M. Bhā. III, p. 141 l. 13. )

इति चोदिते परिहृतं

'एकवद्वचनमनर्थकम् ।'
( Vā. 2 on P. 6. 3. 1., M. Bhā. III, p. 141, l. 15 )

'द्विबहु[2]ष्वसमासः ।'
( Vā. 3 on P. 6. 3. 1., M. Bhā. III, p. 141, l. 17 )

इति । तदेतत् कथमुपपद्यते यदि वृत्तावभेदैकत्वसंख्याप्रादुर्भावाद् द्वित्वबहुत्वावगत्यभावः । तथा च तस्मिन्नभेदैकत्वे सति द्विवचनबहुवचनयोरभावात् समासाभाव इति

104. 1. °रयोग्यो°.
105. 1. A ङ्ख्यार्थत्वम°, E[3] ङ्ख्यात्वम°. 2. A °व्ययं, E[3] °व्ययात. 3. E I °विगमो P °वगमे.
106. 1. The M. Bhā text is : एकवच्चालुग् भवतीति वक्तव्यम् । 2. A द्विबहुसमा°,

द्विस्वाद्युपक्रमेऽप्येकवचनान्तानामेव[3] समास इति नार्थ एकवद्भावानुशासनेन । एकवचनं तूत्सर्गतः करिष्यते इति भवति अभेदैकत्वेऽपि वा तदविरोधः सामान्येनैकत्वे विधानात्[4] । कथं तर्हि गोषुचरो वर्षासुजोऽप्सुयोनिरिति बहुवचनान्तानां समास इति चेदाह स च इति । सोऽभेदैकत्वाख्यो धर्मो वचनान्तरे एकवचनादन्यस्मिन् बहुवच-
5 नेऽप्यत्रास्ति । अत्र हि नेदं व्यक्तिबहुत्वे बहुवचनम् । अपि तु

'जात्याख्यायामेकस्मिन् बहुवचनम्....' (P. 1. 2. 58.)

इति । तथा चैकस्यामपि यो गवि चरति प्राणी सोऽपि गोषुचर इन्द्रगोपोऽभिधीयते । एकोऽपि चाप्परमाणुरप्शब्देन बहुवचनान्तेनाभिधीयते । वर्षारात्रोऽपि चाभिन्नो वर्षा-शब्देन बहुवचनान्तेन शब्दशक्तिस्वाभाव्यादित्यत्राभेदैकत्वसङ्ख्या वचनभेदप्रतिबन्धं न
10 करोति । तत्राप्यभेदैकत्वस्यैव प्रतीतेरित्यर्थः ॥ १०६ ॥

द्विवचनं तु नान्वाख्यातं जाताविति तत् सर्वथा वृत्तिषु सङ्ख्याभेदतिरोधानान्न भवतीत्याह ।

**जातौ द्विवचनाभावात् तद् वृत्तिषु न विद्यते ।**
**प्रत्याख्याने तु योगस्य द्रव्ये गोषुचरादयः ॥ १०७ ॥**

15 तद् द्विवचनं जातौ अनुपदेशाद् व्यक्तिगतभेदतिरोधानाच्च वृत्तिषु नास्ति । बहुवचनं तु

'जात्याख्यायां........'

इत्युपदेशादस्ति । तथा च वृत्तावेकवचनबहुवचनयो[1]र्भावेऽपि द्विवचनाभावोऽभेदैकत्व-फलमवतिष्ठते । यदा तु जातेराश्रयोपाधिक एव बहुत्वे बहुवचनोपपत्तेः जात्याख्यायाम्
20 इति सूत्रं प्रत्याख्यायते तदा गोषुचर इत्यत्र गोद्रव्यगतभेदाश्रयमेव बहुवचनं वृत्तावपि । अनवयवेन हि [2]व्यक्तीः परामृशति गोषुचरशब्दः । अप्सुयोनिः, वर्षासुज इत्यत्राप्यव-यवप्रचयाद् धर्मबहुत्वाद्वा [3]व्यक्तेरेकत्वेऽपि बहुवचनम् । शब्दशक्तिस्वाभाव्याद्धि किञ्चिद् बहुवचनमवयवबहुत्वमाह किञ्चिद् द्रव्यबहुत्वम् ॥ १०७ ॥

तदेतदनुपपन्नमित्याह ।

25 **आश्रयाद् भेदवत्तायाः सर्वभेदसमन्वयः ।**
**द्रव्याभिधानपक्षोऽपि जात्याख्यायां न विद्यते ॥ १०८ ॥**

---

3. A °वचनानामे°. 4. AE³ °त्वविधा°.

107. 1. E³ °भावोऽपि. 2. AE³ व्यक्ति. 3. I व्यतिरेकत्वे.



**सर्वद्रव्यगतिश्चैवमेकशेषश्च नोच्यते ।**
**प्रत्याख्यातेऽन्यथा सूत्रे भिन्नद्रव्यगतिर्भवेत् ॥ १०९ ॥**

द्रव्यबहुत्वाश्रयेण गोषुचरादौ बहुवचनेऽङ्गीक्रियमाणे वृत्तौ सङ्ख्याविशेषयोगः स्फुटोऽभ्युपगतः स्यात् । तथा च भेदवत्तायाः आश्रयणात् सर्वैरेकत्वद्वित्वबहुत्वैरपि
5 संबन्धः प्राप्त इति कासावभेदैकत्वसंख्या, एकस्यां द्वयोर्वापि चरतश्च भवत्यभिधानं गोषुचर इति । तथा च नेदं व्यक्तिभेदायत्तं बहुवचनम्, अपि तु जात्याख्यायामेवेति तत्र द्रव्याभिधानपक्षस्याभावात् कथं द्रव्यभेदाश्रयमिदं बहुवचनं वर्ण्यते । एवमप्सु-योनिरित्यादावपि वाच्यम् । तस्माज्जात्याख्यायामेवेदं बहुवचनं न्याय्यम् । न च द्रव्य-विवक्षाश्रयेण योगस्य प्रत्याख्यानमुचितम् । एवं ह्येकशेष आरम्भणीयः स्यात्, प्रत्यर्थं
10 शब्दनिवेशान्नैकेनानेकार्थाभिधानमिति कृत्वा । जात्यभिधाने तु तत्रैव बहुवचने सर्व-द्रव्यगतिर्बहुवचनान्तादेकस्मादपि शब्दाद् भवतीति प्रत्याख्यातमेकशेषसूत्रम्

'आकृत्यभिधानादेकं विभक्तौ वाजप्यायनः' (Vā. 35 on P. 1. 2. 64, M. Bhā. I. p. 242, l. 10)

इति । जात्याख्यायामिति सूत्रं समर्थितमेवम्

15 'जात्याख्यायां सामान्याभिधानादैकार्थ्यम् ।' (Vā. 1. on P. 1. 2. 53, M. Bhā. I. p. 229, l. 13.)

इति । ननु च कोऽतिशयो जात्याख्यायामित्यस्य येनैतदारम्भः समर्थ्यते इत्याह **प्रत्याख्यातः** इत्यादि । जात्याख्यायामित्यस्मिन् योगेऽनारभ्यमाणे जातिपरायां चोदनायां बहुवचनाभावाद् गोषुचर इत्यादौ [2]द्रव्यबहुत्वे बहुवचनमिति व्यक्तिबहुत्वप्रतीति-
20 र्भवेत् तत्रैवमिष्यते । एकस्यां गवि द्वयोर्वापि गवो[3]श्चरति गोषुचर इति अभिधानस्य गोष्ठ[4]कुक्कुटाख्ये पक्षिविशेषे रू[5]ढेरित्यर्थः । तस्माज्जात्याख्यायामेवैतदुपपद्यते इति सत्यप्य-भेदैकत्वे तत्रैवेदं वाचनिकं बहुवचनं विज्ञेयम् ॥ १०८, १०९ ॥

इदानीमभेदैकत्वसङ्ख्यायाः सर्वसङ्ख्याविशेषात्मकत्वाद् भेदेन वृत्तौ स्वरूपोपदर्शन-मित्येतदभिधातुं चोद्यपूर्वकमुपक्रमते ।

25 **वृत्तौ यो युक्तवद्भावो वरणादिषु शिष्यते ।**
**अभेदैकत्वसङ्ख्यायां गोदौ यत्र न सिध्यति ॥ ११० ॥**

'लुपि युक्तवद् व्यक्तिवचने' (P. 1. 2. 41.)

इत्यत्र पक्षद्वयं सम्भाव्यते । तथाहि—यदा व्यक्तिवचने लिङ्गसङ्ख्ये कथ्येते तदा लुब-

---

108-109. 1. A यस्यामेकस्यां. 2. AE³ द्रव्यस्य ब°. 3. A गवोश्च गो, E³ द्वयोर्गवोर्वाच°. 4. P. गोपुष्टकुक्कु°. 5. E³ रूढिरि°.

न्तलक्षणायां तद्धितवृत्तौ[1] विभक्तिनिवृत्तावप्यर्थनिवृत्तेरभावाद् वृत्तस्य ये व्यक्तिवचने तयोरतिदेश इत्ययं पक्षः। यदा पुनर्व्यक्तिद्योतनः शब्दो व्यक्तिः [2]वचनमप्येकदेशलोपादेकवचनादि विवक्षितं तदा तस्य वृत्तावदर्शनाद् प्राग् वृत्तेर्व्यपेक्षावस्थायां ये व्यक्तिवचने तयोर्लुवर्थेऽयमतिदेश इत्ययं पक्षः। तत्र पूर्वस्मिन् पक्षे गोदयोरदूरभवो ग्रामो गोदौ ग्राम
5 इति न सिध्यति। यस्माद् वृत्तावुपसर्जन[3]स्याभेदैकत्वसङ्ख्या प्रादुर्भवतीत्युक्तम्। तद्वतस्यैव च सङ्ख्यालक्षणस्यार्थस्यात्रातिदेश इति द्वित्वस्यात्रातिदेशाभावाद् द्विवचनं न स्यात्। बहुवचनं तु पञ्चाला इत्यादौ जात्याश्रयं सिध्यति ॥ ११० ॥

अथ द्वितीयः पक्षः, तत्राप्याह।

**प्राग् वृत्तेर्युक्तवद्भावे षष्ठी भेदाश्रया भवेत्।**
10 **वृत्तौ सङ्ख्याविशेषाणां त्यागाद् भेदो निवर्तते ॥ १११ ॥**

गोदयोरदूरभवो ग्राम इत्यत्र वाक्ये दृष्टा व्यतिरेकनिबन्धना षष्ठीति सा वृत्तावपि स्यात्, अतिदेशात्। भेदस्याभेदैकत्वेऽपि गोदावित्यत्र।

'षष्ठ्यपि हि वचनम्' ( M. Bhā. I. p. 226, l. 24 )

इत्युक्तं भाष्ये। अत्र परिहारः पक्षान्तराश्रयेणोक्तः
15 'वृत्तस्य ये लिङ्गसङ्ख्ये ते अतिदेक्ष्येते' ( M. Bhā. I. p. 227, l. 9 )

इति। तद् व्याचष्टे **वृत्तौ सङ्ख्या** इत्यादिना। युक्तस्य प्रत्ययार्थेन सम्बद्धस्य प्रकृत्यर्थस्योपसर्जनस्य सङ्ख्याभेदानां हानाद् वृत्तावयं विभागो नास्तीत्यभेदैकत्वसङ्ख्यामात्राश्रयं कार्यमतिदिश्यते, न षष्ठी व्यतिरेकनिबन्धनेत्यर्थः। एतदनन्तरं क्वचिद् भाष्यमस्ति

20 '[1]प्रागपि वृत्तेर्ये लिङ्गसङ्ख्ये ते [2]अतिदिश्येते। षष्ठी न भवति. सामान्यातिदेशे विशेषानतिदेशात्।'

इति। इह[3] प्रकृत्यर्थसंबन्धि यदेकवचनत्वादिसामान्यानुगतं वचनं तदतिदिश्यते लुवर्थे[4] सङ्ख्यान्तरयोगिन्यप्राप्तम्। तच्च यद्यपि विशेषद्वारेणैव प्रवर्तते तथाप्यव्यभिचारा[5] एकवचनादयो विशेषा अतिदेशात् प्राप्नुवन्ति, न तु षष्ठी। सा व्यतिरेकनिबन्धनेत्य-
25 सति तस्मिन्न भवन्ती[6] व्यभिचारिणी वचनसामान्यस्य। यथा वसिष्ठादयो ब्राह्मणस्य ॥ १११ ॥

---

**110.** 1. A तद्धितविभक्तौ. 2. AE[3] व्यक्तिवचनमप्येकदेशे लोपा० 3 AE[3] वुपसर्जनायस्था°.

**111.** 1 This is not found in the M. Bhā, 2. E[3] om. ते. 3. A इदं. 4. AE[3] न लुबर्थे. 5. AE[3] °चारात. 6. A न भवतीत्यव्यभि°, E[3] न भवति व्यभि°.



एवं चात्र 'वृत्तस्य ये लिङ्गसङ्ख्ये ते अतिदिश्येते' इत्यस्मिन् पक्षेऽभेदैकत्वसङ्ख्यायां गोदौ न सिध्यतीतीदमेव चोद्यमवतिष्ठते। तद् समाधातुं पूर्वोक्तमेवाभेदैकत्वसङ्ख्यालक्षणं तावदनुवदति।

**विद्यमानासु सङ्ख्यासु केचित् सङ्ख्यान्तरं विदुः।**
5 **अभेदाख्यमुपग्राहि वृत्तौ तच्चोपजायते ॥ ११२ ॥**

**केचित्** इति। ये सर्वसङ्ख्यानां संसर्गरूपमभेदैकत्वं मन्यन्ते। अत्र हि दर्शनेऽभेदैकत्वं सर्वसङ्ख्याभे[1]दान् स्वात्मनि स्वीकरोति। येषां तु 'तद्रूपेऽवयवे सङ्ख्याभेदो वृत्तौ निवर्तते' इति भेदापोहलक्षणमभेदैकत्वं न तन्मते सङ्ख्याभेदस्वीकारो युज्यते इति सूचयति ॥ ११२ ॥

10 यतश्च विद्यमानासु सङ्ख्यास्वभेदैकत्वसङ्ख्या वृत्तौ प्रादुर्भवति तदा गोदाविति सिध्यतीत्याह।

**व्यापारं याति भेदाख्यैस्तत् स्वैरवयवैः क्वचित्।**
**आत्मा भेदानपेक्षोऽस्य क्वचिदेति निमित्तताम् ॥ ११३ ॥**

तदित्यनुगतभेदमभेदैकत्वं क्वचिदन्तर्भूतद्वित्वादिमुखेनोपयुज्यते यत्र भेदानामा-
15 विर्भावहेतुरस्ति। क्वचित्तु व्यपगतभेदमभिन्नेन स्वरूपेणोपयुज्यते यत्र भेदहेतुर्नास्ति ११३

तत्रैवोदाहरणमाह।

**दास्याः पतिरिति व्यक्तो गोदाविति च दृश्यते।**
**व्यापारभेदः संख्यायास्तस्मादेवं व्यवस्थितः ॥ ११४ ॥**

पत्युराक्रोशप्रतिपादनाय दासी संबन्धितयोपात्तेति तावन्मात्रस्य विवक्षितत्वाद्
20 द्वित्वबहुत्वानादर इत्यभेदैकत्वसङ्ख्यायाः स्वरूपेणात्र व्यापारो[1]व्यक्तो निश्चितः। गोदाविति तु गोदद्वयसामीप्यं विवक्षितं ग्रामस्यैकवचनत्वाद् गोदो ग्राम इति न प्रतीयत इत्यन्तर्गतद्वित्वाश्रयेणाभेदैकत्वसङ्ख्याया व्यापारोऽत्र निश्चितः। तथा च वृत्यत्रस्यागतलिङ्गसंख्यातिदेशेऽपि सम्भवन्ती द्वित्वादिका सङ्ख्या लुवर्थे युज्यतेऽतिदेष्टुम्। अन्यत्रापि चायं सङ्ख्याधर्मो दृष्टः। तद्यथा विंशतिसंङ्ख्या दशद्वर्गद्वयाख्यापि न द्वित्वेन
25 सव्यापारा, अपि त्वभेदेनैव स्वधर्मेण विंशतिर्गाव इति। विंशती इति तु विंशतिप्रचये विवक्षिते एकशेषः। द्वौ त्रय इति तु द्व्यादिका सङ्ख्या स्वरूपाभेदेऽपि सङ्ख्येयाश्रयभेदोपादानेन। एवमभेदैकत्वसङ्ख्यायामपि को विरोधो विषयभेदेन[2] भेदाभेदोपादाने। न च सङ्ख्यासु सङ्ख्यान्तराभावादभेदैकत्वसङ्ख्यायां सङ्ख्यान्तरासम्भव इति वाच्यम्।

---

**112.** AE[3] °भेदात्.

**114.** 1. I व्यक्तौ. 2. A °भेदेभेदा°.

असत्यपि सङ्ख्यान्तरयोगे सङ्ख्यानां सङ्ख्यान्तर्भावस्य दर्शनात्। तद् यथा कति भवतः पुत्राः इति । अत्रोत्तरसङ्ख्यायां पूर्वसङ्ख्यानुप्रवेशादेकत्वद्वित्वादावविशेषेण प्रश्नो भवति । तथा च प्रतिवचनं दृश्यते—एको द्वौ बहव इति । एवमभेदैकत्वसङ्ख्यायामपि सङ्ख्यान्तराण्यन्तर्भवन्ति । तथा च निमित्तवशादुद्भवन्ति । अन्यथात्यन्तमसत्त्वे कथमुद्भवः । सा चेयं सर्वसङ्ख्यासामान्यभूता राजपुरुष इत्यादौ उपसर्जनपदोपादानैव[3] समवेतसङ्ख्यासामान्यं हि स्वार्थमुपसर्जनपदान्याहुः, स्वभावात् ।। ११४ ।।

यद्येवं द्विपुत्र इत्यत्र कथं द्वित्वावगम उपसर्जनार्थस्येत्यत आह ।

**द्व्यादीनां च द्विपुत्रादौ वाह्यो भेदो निवर्तते ।**
**विभक्तिवाच्यः स्वार्थत्वान्निमित्तं त्ववतिष्ठते ।। ११५ ।।**

द्वयोः पुत्र इति विभक्तिवाच्यं द्वित्वं पूर्वमन्यदेव प्रातिपदिकार्थाद् समर्थितम् । तदेव च वृत्तावभेदैकत्वप्रादुर्भावान्निवर्तते । प्रातिपादिकार्थभूतं तु [1]नापगच्छति । अन्यथा निरर्थकत्वे प्रयोग एव न स्याद् द्विशब्दस्य। अस्ति च जहत्स्वार्थायामपि वृत्तावुपसर्जनार्थं इत्युक्तम् । एवं त्रिपुत्र इत्यादौ वाच्यम् ।। ११५ ।।

यदि तर्हि स्वार्थो द्वित्वं न निवर्तते तदाभेदैकत्वसङ्ख्यात्र नास्तीत्याशङ्क्याह ।

**द्वित्वोपसर्जने सङ्घे द्विशब्दस्तत्र वर्तते ।**
**सोऽययित्यभिसंबन्धादुभशब्दे न तत्तथा ।। ११६ ।।**

वाक्येऽवयवप्राधान्यादुद्भूतभेदौ द्वावुच्येते । वृत्तौ तु समुदायसमुदायिनोरभेदाध्यारोपाद् द्वित्वगुणावच्छिन्नः समुदाय एक इत्युपसर्जनार्थस्यात्रापि भेदो व्यावर्तते अभेदैकत्वप्रादुर्भावात् । तदेतत् समुदायवृत्तित्वमुभशब्दविषये [1]तेन प्रकारेण द्वित्वोपसर्जनत्वेन न सम्भवतीत्युभपुत्र इति न कदाचिदपि भवति समासः । तथाहि

‘ उभयस्तस्य तुल्यार्थो वृत्तौ नित्यं प्रयुज्यते । ’

इत्यनन्तरमेव वक्ष्यति । उभावाहुरित्यादिस्तु प्रयोगो द्विदज्यादित्वात् साधुः । कथमुभशब्दो द्विपर्यायोऽपि तद्वद् वृत्तौ सङ्घं नाभिधत्त इति चेत् शब्दशक्तिस्वाभाव्यादिति ब्रूमः । तथा च वार्त्तिकम् ।

‘ अन्याभावो द्विवचनटाब्विषयत्वात् । उभयोऽन्यत्र ’

( Vā. 8, 9 on P. 1. 1. 27., M Bhā. I. p. 89, l. 8. 12. )

इति ।। ११६ ।।

3. A °पादानेनैव.
115. 1. AE[3] नावग°.
116. 1 A केन प्रकारेणाद्वि°.



तदेतदाह ।

**उभयस्तस्य तुल्यार्थो वृत्तौ नित्यं प्रयुज्यते ।**
**सूत्रेऽपि नित्यग्रहणं तदर्थमभिधीयते ।। ११७ ।।**

उभयपुत्रः, उभयथा, उभयत इत्यादौ वृत्तिपदे उभशब्दसमानार्थ उभयशब्दः प्रयुज्यते । स हि द्वित्वोपसर्जनं सङ्घमभिधातुं समर्थो नोभशब्दः । तथा च वस्त्वभेदाश्रयेण तुल्यार्थत्वं नाभिधाव्यापाराश्रयेण, उभाविति भेदरूपेण प्रतिपा[1]दनात्, उभय इत्यवयविरूपेण ।

‘ उभादुदात्तो नित्यम् ’ ( P. 5. 2. 44 )

इत्यत्र **सूत्रे नित्यग्रहणमेतदर्थम्** (**तदर्थम् ?**) द्वित्वोपसर्जनसमुदायाभिधानशक्तिविरहमुभशब्दस्य ज्ञापयितुमित्यर्थः । उभशब्दो ह्यसङ्ख्यावाची, प्रत्ययान्तरं चायजित्यत्र पक्षे तयपोऽप्राप्तौ तेन सह विकल्पनिवृत्त्यर्थं नित्यग्रहणं नोपयुज्यते । उभशब्दः सङ्ख्यावाची तयबादेशश्चायज् इत्यत्रापि पक्षेऽस्वरितत्वादेव विकल्पनिवृत्तौ नित्यग्रहणं वृत्तिविषये नित्यमयजेवेत्युक्तप्रयोजनमेव । न चोभ[2]शब्देन द्व्यवयवः सङ्घोऽभिधीयते, [3]येनोभयशब्देनापि तथेति तुल्यार्थतायां विकल्पः स्यादिति नित्यग्रहणम् । शब्दशक्तिस्वाभाव्यात् समुदायस्याभिधानं ह्युभयशब्देनेति न्यायानुवादः सूत्रे नित्यग्रहणम् ।। ११७ ।।

असत्यां (सत्यां?) त्वभिधानशक्तौ द्विवचनटाब्विषये प्रयुज्यत एवोभशब्द इत्याह।

**आपि के चापरार्थत्वान्नाभेद उपजायते ।**
**उभे इति ततः स्वार्थे भेदवृत्तिः प्रयुज्यते ।। ११८ ।।**

स्त्रीवृत्तेः प्रातिपदिकात् स्वार्थे टाप्, एवं कुत्सितादिद्योतने स्वार्थे क इति तत्र प्रत्ययार्थे गुणभावानापत्तेरभेदेऽनुपजाते स्वतन्त्रे स्वार्थे भेदे वर्तमानः प्रयोगार्होऽयमुभशब्दः उभे उभकौ इति । अस्वार्थिके तु प्रत्यये उत्तरपदे च पारार्थ्यात् प्रधानार्थैकार्थीभावाद् उद्भूतभेदता स्वार्थोऽस्य ह्रीयत[1] इति तत्रास्य प्रयोगो (न?) न्याय्यः ।। ११९ ।।

यदा तर्हि स्त्रियामित्यत्र प्रत्ययार्थविशेषणपक्षः तदा तत्र प्रकृत्यर्थव्यतिरिक्तेऽर्थे विशेषणायोपादीयमानो न स्वार्थे प्रयुक्तः स्यादिति कथं तत्रोभशब्दप्रयोग इत्याशङ्क्याह ।

**स्त्रीत्वाभिधानपक्षेऽपि गुणभावविपर्ययः ।**
**स्वभावादपरार्थत्वात् तत्र भेदो न ह्रीयते ।। ११९ ।।**

117. 1. P °दना, उ°. 2. AE[8] °भयश°. 3. AE[3] नोभय°.
118. 1 AE[3] ह्रीयेतेति.

गार्ग्यादौ प्रकृत्यर्थो गुणभूतः प्रत्ययार्थः प्रधानं प्रतीयते । स्त्रीप्रत्ययान्तेषु[1] तु प्रत्ययार्थपक्षेऽपि स्त्रीत्वविशिष्टं द्रव्यमत्राभिधीयते, शब्दशक्तिस्वाभाव्यात् । न हि शब्दानामर्थादेशनं शक्यते कर्तुम् । शास्त्रप्रक्रियाभेदेऽपि लौकिकस्य स्थितलक्षणस्यार्थस्याभेदात् । तस्मादुभे इत्यत्र भेदो न निवर्तते परार्थत्वाभावात् ॥ ११९ ॥

**तस्माद्द्विवचनाट्टापश्चोभयोऽन्यत्र दृश्यते ।**
**प्रत्यये तयपं हित्वा नास्त्युत्तरपदे पुनः ॥ १२० ॥**

द्विवचनटाब्विषय उभशब्द उक्तः । टापि च नान्यत्र द्विवचनात् । अतोऽन्यत्र तु प्रत्यये उत्तरपदे चोभशब्दो नास्ति । अपि तु तत्समानार्थ उभयशब्दः । तथापि प्रकृतित्वेनोभादित्युपादानसामर्थ्यात् तत्रैकार्थीभावविषयत्वेऽप्युभशब्दः प्रयुज्यते । उभाहस्त्यादयस्तु द्विदण्ड्यादयः । तत्र च शब्दशक्तिस्वाभाव्यादेवोभशब्दः समुदायरूपेणार्थमाचष्टे द्विशब्दवत् । तदेवमभेदैकत्वसङ्ख्यायाः प्रसङ्गायातं किञ्चिन्निर्णीतम् ॥ १२० ॥

इदं त्वत्र चोद्यते—

'ईदूदेद् द्विवचनं प्रगृह्यम्' ( P.1 1. 11. )

इत्यत्र वार्तिकेऽभिहितम्

'ईदाद्यन्तं द्विवचानान्तमिति चेल्लुकि प्रतिषेधः'

( Vā. 4. on P. 1. 1. 11., M. Bhā. I. p. 67. l. 14. )

इति । कुमार्योरगारं कुमार्यगारमिति श्रुत्येदाद्यन्तं प्रत्ययलक्षणेन च द्विवचनान्तमिति प्रगृह्यसंज्ञाप्रसङ्गश्चोदितः । स नोपपद्यते, वृत्तावभेदैकत्वसङ्ख्याभ्युपगमे द्विवचनान्तस्य समासाभावादित्याह ।

**प्राप्तिः प्रगृह्यसंज्ञाया न स्यात् प्रत्ययलक्षणात् ।**
**कुमार्यगारे न ह्यस्ति समासो वचनान्तरे ॥ १२१ ॥**

व्याख्यातार्थः श्लोकः ॥ १२१ ॥

अन्यदपि चोदयितुमाह

**एकद्वयोर्यञादीनां विभाषा लुङ् न कल्पते ।**
**यौष्माकस्तावकश्चेति भेदाभावान्न सिध्यति ॥ २१२ ॥**

"यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्' ( Va. l. on P. 2. 4. 64 , M. Bha. l. p. 493. l. 2. )

119. 1, B[3] ते °यान्ते तु.



इति पक्षे लुगुक्तो वाक्यकारेण । गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलमिति वा, गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलमिति वेति प्रयोगसिद्ध्यर्थ[1]म् । स चाभेदैकत्वाभ्युपगमे द्विवचनान्तानां समासाभावादेकवचनस्यापि द्व्यादिप्रतिपक्षस्याभावाद् विरुध्यते । तथा सूत्रका[2]रमतेनाप्यभेदैकत्वं विरुध्यते । तथा हि

'तवकममकावेकवचने' ( P. 4. 3. 3. )

इति युष्माकास्माकबाधकावेकवचने विदधात्यादेशौ । ततश्च यौष्माक इति वृत्तौ द्वित्वादि मन्यते । तावक इत्येकत्वं द्वित्वादिप्रतिपक्षमिति कथमभेदैकत्वं स्यात् ॥ १२२ ॥

किञ्च

**दृष्टो गार्ग्यतरे भेदस्तथा गर्गतरा इति ।**
**युष्मत्पिता त्व[1]त्पितेति तथादेशौ व्यवस्थितौ ॥ १२३ ॥**

बहुषु

'यञञोश्च' ( P. 2. 4. 64. )

इति लुग्विधानात् गार्ग्यतर इति प्रत्यय[2]श्रुतौ नियतं द्वित्वैकत्वे प्रतीयेते, गर्गतरा इति च बहुत्वमिति कथं वृत्तावभेदैकत्वप्रादुर्भावः । तथा प्रत्ययोत्तरपदयोः

'त्वमावेकवचने' ( P. 7. 2. 97. )

इति वचनाद् त्वत्पिता मत्पितेत्येकत्वं प्रतीयते । युष्मत्पिता अस्मत्पिता इति तु द्वित्वबहुत्वावगतिरिति । सर्वमेतत् वृत्तावभेदैकत्वाभ्युपगमे विरुध्यते ॥ १२३ ॥

अत्र प्रतिविधीयते ।

**उपाविभूता या सङ्ख्या प्रकृतौ समवस्थिता ।**
**आदेशैः संज्ञया वापि विभक्त्या व्यज्यते विना ॥ १२४ ॥**

विद्यमानासु सङ्ख्यासु तत्संसर्गभव्यमभेदैकत्वसङ्ख्या प्रादुर्भवतीत्युक्तम् । तथा च यत्र सङ्ख्याविशेषनिबन्धनमस्ति तत्रासौ प्रतीयत एवेत्युपसर्जनप[1]दविषये या प्रकृतिः प्रातिपदिकं तद्विषये तदर्थस्यावच्छेदकत्वेन या भेदसङ्ख्या समवेता सा[2] प्रगृह्यसंज्ञाप्रवृत्त्या कुमार्यगारमित्यत्र प्रतीयत [3]एव । यदि ह्यत्र प्रगृह्यसंज्ञा स्यात् तदा प्रकृतिभावे सति द्वित्वमुपसर्जनार्थस्यावग[4]म्येत, द्विवचनान्तस्य प्रगृह्यसंज्ञाविधानात् । एवं तावकस्त्वत्पितेत्यादावप्यादेशादेकवचने विहिताद्[5] विशेषाद् विशेषावगतिः । उपसर्जनस्य हि प्रातिपदिकस्यापि चैकत्वसंख्यास्वीकारसामर्थ्येऽपि विशेषाभिव्यक्तौ नास्ति सामर्थ्यमिति

122. 1. A °द्ध्यर्थं. 2. A सूत्रस्वाररयेनाप्यभेदकत्वं.
123. 1. AE[3] °ताऽस्मत्पिते° 2. A °श्रुते, E[3] श्रुतं.
124. 1. AE[3] °पदेविषये°. 2. A om. सा. 3. AE[3] एवं. 4. A °गम्यते. 5. EA[3] °ताद्विशेषावगति.

तत्र विभक्तिं सहायमपेक्षते। एवमादेशाद्यपीति। अत एव केचित् प्रकृतिरिव प्रकृतिविशेषसङ्ख्यायाः अभेदैकत्वसङ्ख्या ततोऽस्या उद्भवादिति तत्रैकात्म्येनावस्थिता सोपसर्जनपदेन शक्तिप्रतिघातादप्रकाशिता विभक्त्येवादेशैः[6] प्रकाश्यत इति व्याचक्षते। गर्गकुलादौ चैकद्वयोरपि लु[7]गादेशे प्रकरणाद् विशेषावसायो भविष्यति। अनारम्भे तु लुको बहुष्वेव लुग्विधानाद् गर्गकुलमित्येकत्वद्वित्वप्रतीतिर्नैव स्यात्। बहुषु तु लुगपत्ये नियमार्थमवश्यारम्भणीयः। एवं युष्मत्पितेत्यादौ प्रकरणाद् द्वित्वबहुत्वनियमावधारणं गार्ग्यकुलमित्यादौ च। इत्थं च कृत्वा, द्विवचनबहुवचनान्तानामसमास इति नेदं वचनं सम्भवति विशेषावगमे समासप्रवृत्तेः। राजपुरुषादौ तु विशेषावगमनिबन्धनाभावाद् वृ[8]त्तिपदमन्वाख्यातुं प्रक्रियायां सदृशस्य[9] वाक्यस्य कल्पनादेकवचनान्तानामेव तद्युक्तमिति न्यायसिद्धार्थानुवादोऽयमत्र। यत्र तु द्वित्वाद्यभिव्यक्तिसम्भवः तत्र समासप्रकृतौ प्रक्रियावाक्ये कुमार्योरगारमित्यादावुपादीयत एव द्विवचनादीति न कश्चिद्विरोधः ॥ १२४ ॥

अनेनैव च न्यायेनेदमपि सिद्धमित्याह।

**शौर्पिके मासजाते च परिमाणं स्वभावतः**
**उपाधिभूतामाश्रित्य सङ्ख्यां भेदेन वर्तते ॥ १२५ ॥**

शूर्पेण क्रीतो, मासो जातस्य, शौर्पिको मासजात, इत्यत्र यद्यभेदैकत्वसङ्ख्या स्वात्मान्तर्गतसङ्ख्याविशेषानुपादानेन वर्ते[1]त तदा अनियतसङ्ख्यत्वे विशेषणस्य क्रीतजातयोर्नियतमूल्यावगमो वयोविशेषावगतिश्च न स्यात्। परिच्छेदार्थं च शौर्पिकादयः शब्दाः प्रयुज्यन्ते। तत्र च मूलबाधाया अन्याय्यत्वात् प्रयोगस्वभावादर्थानामात्मभूतं प्राथ[3]मकल्पिकं चैकत्वं संङ्ख्याभेदं प्रातिपदिकार्थावच्छेदकमुपादाय **परिमाणं** वृत्तिमनुभवति ॥ १२५ ॥

एतदेवाह।

**वयस्विनि परिच्छेदः क्रीते चापि न गम्यते।**
**इष्टो भेदादृते तत्र परिमाणमनर्थकम् ॥ १२६ ॥**

**इष्टो**ऽभिमतः **परिच्छेदो** भेदमेकत्वसङ्ख्यालक्षणमन्तरेण क्रीतजातयोर्न गम्यत इति तत्रैकत्वानुपादाने शूर्पमासयोः प्रयोगो निष्फलः स्यात्। ननु चात्रा[2]शूर्पव्यावृत्तये

6. P °देशः. 7. A तुको. 8. AE[3] वृत्तिमत्पद°. 9. A सदृशस्यवा°

125. 1. AE[3] वर्तते. 2. A नियतसं°. 3. E[3] प्राथनकल्पितं, I प्रथमकल्पितं.

126. 1. AE[3] पयस्विनि. 2. A I चात्र शूर्पव्या°, E[3] ननु च अशू°.



सप्तरात्रादिव्यवच्छेदाय च प्रयोगस्य साफल्यं स्यात्। नैतदस्ति। अनियतसङ्ख्यत्वे परिमाणस्य परिमेयविशेषो नावधार्यते। तद्विशेषावधारणायैव च प्रयोगः परिमाणशब्दानाम्। ते च स्वभावादेव परिच्छिन्नरूपार्थाभिधायिनः। ततश्च प्रयोगप्रामाण्यादुपसर्जनार्थस्यैकत्वविशिष्टस्यावगतिः परिमाणशब्दैरु(रे?)क्तपरिमाणस्या[3]र्थस्याभिधानात् १२६

अत एव—

**भिन्नस्यामेदवचनात् प्रस्थादिभ्यः शसो विधिः।**
**तद्धर्मत्वादभेदात्तु घटादिभ्यो न दृश्यते ॥ १२७ ॥**

सङ्ख्यैकवचनाद् वीप्सायां शसो विधानेऽन्वर्थत्वादेकवचनशब्दस्य प्रातिपदिकादेकत्वसङ्ख्यावच्छिन्नार्थाभिधायिनः शस् न त्वेकवचनान्तात्। एवञ्च वृत्तौ **भिन्नस्य** द्रव्यस्य, न तु जातेः अभेदो यदेकत्वं तस्याभिधानात् परिमाणशब्देभ्यः **प्रस्थादिभ्यः** शस्प्रत्ययो भवति। ते हि शब्दशक्तिस्वाभाव्यादेकत्वसङ्ख्यापरिच्छिन्नं स्वार्थमाचक्षत इति **तद्धर्मत्वात्**(अ)उक्तपरिमाणार्थाभिधायित्वाद् वृत्तावभे[2]दैकत्वप्रादुर्भावेऽप्येकत्वावगमाच्छसुत्पत्तिः, प्रस्थशो ददाति, खारीशो ददातीति। घटादिशब्देभ्यस्तु **न** भवति शस्। ते हि जातिशब्दाः। तथा च जात्यभेदादभेदैकत्वसङ्ख्यायोग इति न ते भिन्नस्य द्रव्यस्याभेदमभिदधति, अपि तु जातेः। सा च व्यक्तिभेदेऽपि स्थितेत्यनियतसङ्ख्याश्रयजातिवाचित्वे घटादिशब्दानां वृत्तौ नियमेन व्यक्त्येकत्वान्तर्भावनाशक्तत्वान्नैकार्थाभिधाननिमित्तः प्रत्ययः। दृशिग्रहणं चात्र प्रयोगानुसरणार्थम्। घटशो ददाति इति प्रयोगो न दृश्यते। यत्र तु जातिशब्दानामपि व्यक्तिविशेषप्रत्यायनपरतया प्रयोगस्तत्रैकत्वाद्यवगमदर्शनाद् भवत्येव शस्। तद् यथा—

"यो[3] वा इमां वाचं वर्णशः पदश अक्षरशो वा वि[4] दधाति स आर्त्विजीनो भवति" (M. Bhā. I. p. 3. l. 12.)

इति। अत्र हि वर्णसमुदायरूपत्वात् पदस्य वर्णेभ्यो भेदेन निर्देशसामर्थ्यादेकव्यक्तिविवक्षा निश्चीयते। तदेवमभेदैकत्वसङ्ख्याभ्युपगमे यो विरोध उद्भावितः स निवारितः। सर्वसङ्ख्याभेदसंसर्गस्वभावायां तस्यां यथानिबन्धनं विशेषाविर्भावनस्योपपत्तेरिति युक्तिसिद्धत्वादेतदनुसारेण सूत्रवार्त्तिकवचनानि गमयितव्यानि ॥ १२७ ॥

3. IP°स्यायाभि°.

127. 1 See P. 5. 4. 43. 2. A वभेदकत्व°. 3. The M. Bhā. reading is; यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनः। 4. I P वापि दधाति.

इदानीं

"[1]तद्रूपेऽवय[2]वे वृत्तौ सङ्ख्याभेदो निवर्तते।"

इति ये भेदापोहलक्षणामभेदैकत्वसंख्यां मन्यन्ते तन्मतेऽपि विरोधपरिहारायोपक्रमते।

**श्रूयते वचनं यत्र भावस्तत्र विशिष्यते।**
**निवर्तते यद् वचनं तस्य भावो न विद्यते॥ १२८॥**

**यत्र** वाक्ये एकवचनादि **श्रूयते तत्र भावः** संख्यालक्षणो धर्मो **विशिष्यते** अन्यस्माद् व्यावृत्तो विशिष्टोऽवसीयते। **यत्** तु वृत्तावेकवचनादि **निवर्तते** अपैति **तस्य भावः** स एव संख्यालक्षणो धर्मः प्रत्याय्यो **न विद्यते** नास्ति। [3]तदभावादेव हि तत्र तद्वचनस्य निवृत्तिः॥ १२८॥

सैव तु स्वाभाविकी लुकान्वाख्यायते प्रत्ययलक्षणसिद्धय इत्याह।

**कार्यं सत्ताश्रयं शास्त्रादप्रवृत्तिरदर्शनम्।**
**वाक्ये दृष्टं यदत्यन्तमभावस्तस्य वृत्तिषु॥ १२९॥**

इह वृत्तौ विभक्तीनामर्थाभावादे[1]व **अप्रवृत्तिः** अनुत्पत्तिः प्रागभाव एव **अदर्शनम्** तदाश्रित्य प्रत्ययसत्ताश्रयं **कार्यं शास्त्रात्**

'प्रत्ययलोपे प्रत्ययलक्षणम्' (P. 1. 1. 62.)

इत्यस्मात् [2]प्रवर्तयितुं लुक्छास्त्रमारभ्यते। तवकादिरादेशः प्रगृह्यसंज्ञा च सति प्रत्ययेऽनुशिष्टेर्वृत्तौ संख्याविशेषाभावाद् असति प्रत्यये न स्यादिति प्रक्रियायां प्रत्यय उ[3]त्पाद्यते। तस्य प्रसक्तस्य **अदर्शनम्** लुगिति प्रत्ययलक्षणेन तत्सिद्धिः। कथमप्रवृत्तिः प्रागभावोऽदर्शनमिति चेद् **वाक्ये** दृष्टस्य वृत्तावदर्शनाद्वचनस्य। वृत्तिवाक्ययोर्हि शब्दान्तरत्वेनात्यन्तं भेदादर्थाभावादेवाप्रवर्तनं वृत्तौ वचनस्य, न तु प्रध्वंसाभाव इत्यर्थः॥ १२९॥

यद्येवं सुपामनुत्पादनाद्वचनविशेषाश्रया विधयः प्रत्ययलक्षणेनापि कथं लभ्यन्ते इत्यत आह

**संज्ञाविषयभेदार्थं प्रसक्तादर्शनं स्मृतम्।**
**श्रूयमाणं तु वचनं विशिष्टमुपलभ्यते॥ १३०॥**

सर्वस्य प्रत्ययस्य स्वविषयादन्यत्रात्यन्तादर्शनमिति प्रसङ्गनिवारणाय लोपसंज्ञायां विषयनियमार्थं

'सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात्' (Vā.4.M.Bhā.I.p. 158, l. 21.)

---

128. 1. Verse 98. 2. A तभ्द्रतेऽवयवे. 3. A तदाभावादेव.
129. 1. E[3] om. एव. 2. E[3] प्रत्यावर्तयितुम्. 3. AE[3] उत्पद्यते.



इत्युक्तम्। यद्यपि चात्रार्थाभावाच्छास्त्रीयापि नास्ति प्राप्तिः तथापि स्वाभाविक एवाप्रयोगो लुका ज्ञाप्यते। न हि संभवदर्थः शब्दः शक्यते वचनेन निवर्तयितुम्। अप्राप्त्यनुमानमेव हि बाधा। एवं च लुक्छास्त्रेणैवात्र प्रसक्तेराख्यानात् प्रक्रियायां सुप उत्पन्ना निवर्त्यन्ते, प्रयोगसमवायिनि हि वाक्ये श्रूयन्ते नियताः सुपः, तच्चान्यदेव वृत्तेः। तत्सदृशं तु प्रक्रियावाक्यं वृत्तिप्रकृतिभूतं कल्प्यते। तत्र च सुपः प्रयोगसमवायिवाक्यानुसारेणैव कल्प्यन्ते। तथा च तत्र, प्रक्रियावाक्ये **विशिष्टमेव वचनं** श्रूयते। तत्र हि [1]यदुपलभ्यते **वचनं** तच्छ्रुतत्वादेव **विशिष्टं** विज्ञायते। ततश्च कारणानुरूपत्वात् कार्यस्य वृत्तावपि लुका ज्ञाप्यमानं विशिष्टमेव वचनं प्रत्ययलक्षणेन [2]स्वकार्यं प्रयुङ्क्ते इति राजपुरुषादौ वचनविशेषकार्यस्याभावाद् वचनमात्राश्रयं न लोपादिकार्यं प्रवर्तते। तथा च तत्र भूतपूर्वो वचनभेदो नावगम्यत इति संख्याविशेषावगमाभावः। तवकादयस्त्वादेशाः प्रगृह्यसंज्ञा च प्रत्ययलक्षणकार्यं वचनविशेषप्रतिबद्धमिति तत्र वचनभेदस्य भूतपूर्वस्यावगमाद् भवति तन्निबन्धनः संख्याविशेषावसायः।

'श्रूयते[3] वचनं यत्र भावस्तत्र विशिष्यते'

इति वचनभेदनिबन्धनो हि संख्याभेदावगमः। स चात्रादेशादिनानुमितसन्निधान इति कथं स्ववाच्यं न प्रत्याययेदित्यर्थः। तदेवं पूर्वमादेशादेरेवाभेदैकत्वसंख्यान्तर्भूतस्य संख्याविशेषस्यावगम इति समर्थितम्। इह त्वसत्यपि संख्याविशेषान्तर्भावेऽभेदैकत्वसंख्यायामादेशादिना विशिष्टप्रकृत्यनुमाने स्ववाचकद्वारेणैव संख्याभेदप्रतिपत्तिरिति भेदः॥ १३०॥

अत्र तु दर्शने दोषमाह

**अभावो[1] वा लुको यत्र रूपवान् वा विधीयते।**
**व्यभिचारान्निमित्तस्य तत्रासाधुः प्रसज्यते॥ १३१॥**

प्रक्रियावाक्ये यादृशं विशिष्टं वचनं तादृश एव प्रसक्तस्य वृत्तौ लुगित्युच्यते। तथा च **यत्र लुकोऽभावः**

पञ्चम्याः स्तोकादिभ्यः (P. 6. 3. 2.)

इत्यादौ तत्र द्वित्वबहुत्वयोः स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः इति प्राप्नोति। इष्यते च स्तोकान्मुक्त इत्येवेत्यलुक एकवद्भावो वक्तव्य एव स्यात्। स चाशिष्य इत्युक्त इति विरोधः। एकत्वं हि वृत्तौ प्रतीयते। स्तोकाभ्यां मुक्त इत्यादौ चैकत्वाख्यस्य वृत्तिनिमित्तस्य वचनान्तरश्रुतौ परित्यागाद् द्वित्वादावपशब्दोऽयं स्तोकान्मुक्त इति प्राप्नोति।

---

130. 1. A तदुप°. 2. A स्वीकार्य. 3. E[3] श्रूयते। वचनं°.
131. 1. E[3] अभावे.

तथा **रूपवान्** भावात्मकस्तवकाद्यादेशोऽप्येकार्थत्वे **विधीयते**। अन्वर्थो हि तत्रैक-
वचनशब्दः। तत्र यदि वृत्तौ भेदापोहलक्षणाभेदैकत्वसंख्याभ्युपगम्यते ततो[2] द्वयादि-
प्रतिपक्षभूतस्यैकत्वलक्षणस्यादेशनिबन्धनस्य वृत्तौ परित्यागात् तवकादिस्तत्रासाधुर-
प्रयोगार्ह[3] एव स्यात् ॥ १३१ ॥

तस्मादयमत्र मतद्वयेऽपि परमार्थरूपः सिद्धान्त इत्याह।

**भेदः संख्याविशेषो वा व्याख्यातो वृत्तिवाक्ययोः।**
**सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेत् ॥ १३२ ॥**

किमनेन दुःसमर्थेनाभेदैकत्वेनाभ्युपगतेन। शब्दानामभिधानशक्तयो हि
विचित्राः। ता विशेषेणानुसर्तुमशक्याः किञ्चित् सामान्यमाश्रित्य ज्ञाप्यन्ते। तथा च
वृत्तावेकार्थीभावकृतं वाक्याद् विशेषं दर्शयता भाष्यकारेण यः संख्याभेदावगमलक्षणो
**विशेषो** वृत्तौ व्याख्यातो वाक्ये च **भेदः संख्याविशेष** इति सोऽभेदेन वृत्तिपदानि
प्रातिस्विकभेदानाश्रयेणोपादाय बोद्धव्यः। तथा हि **न सर्वत्र** वृत्तिपदे संख्याविशेषा-
प्रतीतिः, शौर्पिकमासजाततावकीनादौ विशेषप्रतीतेः। अस्ति तु राजपुरुषादावविशेष
इत्येतावता वाक्याद् भिन्ना वृत्तिर्लक्षिता भवत्येव। तद्यथा क्रियावद् गुणवत् समवायि-
कारणं द्रव्यमित्युक्ते गगनादीनां क्रियावत्त्वाभावेऽपि गुणादिभ्यो द्रव्यस्य भेदः सिध्य[1]त्येव।
तेषां कदाचिदपि क्रियावत्त्वाभावात्। द्रव्यस्य तु कस्यचित् कदाचित् तथाभूतत्वात्। एवं
वाक्ये सर्वत्रैव संख्याभेदप्रतीतेः क्वचित् तद्रूपा पि वृत्तिस्ततोऽन्या भवत्येव ज्ञापिता। सर्वं
हि लक्षणं सामान्येनैव प्रवर्तते, प्रतिव्यक्त्यशक्यत्वात् त[2]त्प्रणयनस्य। देशकालस्वभावभेदेन
विचित्रत्वान्मात्राणां विशेषतः शब्दानामभिधानशक्तिनियमस्यायोगादिति सति निबन्धने
तावकीनादौ संख्याविशेषप्रतिपत्तिर्भवन्ती लक्षणव्यभिचाराय न प्रभवति, सामान्ये
लक्षणस्य प्रवृत्तेः। सकृत्प्रवृत्तावपि चरितार्थत्वादित्यर्थः। यथा च वृत्तौ संख्याविशेषः
कचिन्न प्रतीयते तथा लिङ्गविशेषोऽपि। तथा च कुक्कुट्यादीनामण्डादिषु पुंवद्भावो

"न वा अस्त्रीपूर्वपदस्य विवक्षितत्वात्" ( M. Bhā. III, p. 157, l. 18 )

इति प्रत्याख्यातः ॥ १३२ ॥

तद् व्याचष्टे।

**जातेश्च भेदहेतुत्वान्न लिङ्गेन विशेष्यते।**
**प्रधानं 'मृगदुग्धादौ गार्गीपुत्रे न स क्रमः ॥ १३३ ॥**

2. AE[3] तदा. 3 A प्रयोगानर्ह.
132. 1. E[3] सिध्यत्वेन. 2. I °त्वात् प्रण°.
133. 1. AE[3] प्रधानन्मृग.



मृगदुग्धं कुक्कुटाण्डं छागमांसमित्यादौ दुग्धादेरुत्तरपदार्थस्य प्रधानस्यावच्छेदाय
मृगादिपूर्वपदार्थो विशेषणमुपादीयत इति जातिपरायां चोदनायां लिङ्गविशेषस्याविवक्षेति
मृगस्य दुग्धमित्यादिरेव विग्रहः। जात्यन्तरनिवृत्तिपरायां चोदनायां मृगादयः शब्दा[2]
नियतजातिवाचका निरस्तलिङ्गभेदा एव प्रभवन्ति विवक्षितेनार्थेन प्रधानमवच्छेत्तुम्।
तदेतदुच्यते

[न वा] 'अस्त्रीपूर्वपदस्य विवक्षितत्वात्' ( M. Bhā. III, p. 157, l. 18. )

इति। अ[3]स्त्र्यर्थत्वे हि पूर्वपदस्य किमन्यज्जातिविवक्षायाः स्यात्। तत्राण्डादीनां स्त्री-
पुंससाधारण्यात् कुक्कुटस्याण्डं छागस्य मांसमिति कुक्कुटादि[4]ना विशेषणमनर्थकमव्यभि-
चारात्। यदा त्वन्यजातिनिवृत्तिरेव विशेषणादवगम्यते। यदा तु मांसादेर्लघुतरत्वेनोप-
योगविशेषार्थं स्त्रीलिङ्गेन पूर्वपदेन विशेषणमभिसंहितं तदा वाक्यमेव भवति न समासः।
ततो विशेषस्यानिश्चयात्। निवृत्ते हि स्त्रीप्रत्यये स्त्रीत्वस्यानभिव्यक्तेः सैव सामान्यविवक्षा
पुंवद्वचनेन सूच्यते। क्वचित्तु सर्वथैव लिङ्गविशेषयोगो भवत्युपसर्जनार्थस्य। तद् यथा
गार्गीपुत्रछागलीमूत्रमहिषीमूत्रादिषु। पुत्रस्य हि निन्दाप्रशंसापरतया मूत्रविशेषस्य चार्थ-
क्रियाभेदकारित्वात् स्त्रियैव विशेषणं युज्यते। तथा चैवमादौ न सानुपूर्वी या कुक्कुट्या-
दिषु। तत्र हि लिङ्गसामान्ययुक्तः पूर्वपदार्थः। अत एवादिशब्देनैवंभूता जातिपरा
एव कुक्कुटीप्रकारा अभिमताः। न तु यत्र व्यक्तिविवक्षा प्रयोजनवती गार्गीपुत्रादौ
तेऽपि गार्गीप्रभृतयोऽत्र गृह्यन्त इति प्रत्युदाहरणमत्रैते भवन्ति। इत्थं च कृत्वा
संख्याया इव लिङ्गस्यापि विषयनियमेन विवक्षाविवक्षे विज्ञेये ॥ १३३ ॥

यतश्च जातिपरत्वे लिङ्गसंख्याभेदस्तिरोधीयते अत एव —

**अभेदे लिङ्गसंख्याभ्यां योगाच्छुक्लं[1] पटा इति।**
**प्रसक्ते शास्त्रमारब्धं सिद्धये लिङ्गसंख्ययोः ॥ १३४ ॥**

इह पदावधिकेऽन्वाख्याने पदान्तरानपेक्षया पदे संस्क्रियमाणे नियतवाक्यगत-
विशेषानवधारणात् सामान्ये[2] स्वार्थमात्रे[3] लिङ्गसर्वनामनपुंसकयोगात् संख्यासर्वनामाभेदै-
कत्वयोगाच्च शुक्लमिति पदे स्थिते पटा इति पदान्तरसमन्वयोपजनेऽप्यभिनि[4]र्वृत्तस्या-
न्तरङ्गस्य संस्कारस्यानिवृत्तेः पटा इत्यसमन्वितार्थत्वादसामानाधिकरण्येऽपि प्रयोगे प्राप्ते

'विशेषणानां चाजातेः' ( P. 1. 2. 52. )

इति विशिष्टलिङ्गसंख्यासिद्ध्यर्थमारभ्यते शास्त्रम्। लुबन्तविशेषणानां हि लुबर्थसमाना-
धिकरणत्वात्

लुपि युक्तवद् .... ( P. 1. 2. 51 )

2. I °ब्दादिनि° 3. AE[3] अस्त्यर्थं. 4. E[3] कुक्कुरादी नामविशे°.
134. 1. E[3] °क्लपटा. 2. A °न्येस्वार्थ°. 3. AE[3] स्वलिङ्ग° 4 AE[4] °भिन्नवृत्तस्य.

इत्यनेनैव लुबर्थगतलिङ्गसंख्ययोः सिद्धत्वाद् गुणवचनानामाश्रयतो लिङ्गवचनानीत्यस्मिन्नर्थे सूत्रमवस्थापितं भाष्ये। विशेषणानां तैर्युक्तस्ये[5]व व्यक्तिवचने भवत इति सूत्रार्थः॥१३४॥

तत्र विशेषणशब्देन सामान्यवाचिना गुण एव रूपमभिधीयत इत्याह।

**परार्थे शेषभावं यो वृत्तिषु प्रतिपद्यते।**
5 **गुणो विशेषणत्वेन स सूत्रे व्यपदिश्यते॥ १३५॥**

भेदकं विशेषणमिति यद्यपि प्रतीतं तथापीह परतन्त्रमात्रं विवक्षितम्। तथाहि तद्धितग्रहणसं[1]बद्धस्य युक्तवदित्यस्यानुवृत्तेस्तद्धितार्थयोग एकार्थीभावे तद्धितवृत्तिषु योऽङ्गभावः[2] श्रूयतेऽन्यं तद्धितार्थमात्मोपधानेनोपकुर्वन् स गुणोऽत्र विशेषणमित्युक्तः। स हि म[3]तुब्लोपान्मत्वर्थीयाकारान्ततया वा द्रव्यसामान्ये
10 प्रक्रान्तस्तदाश्रितत्वेनात्य[4]न्तपारतन्त्र्याद् विशेषणम्। यस्तु व्यधिकरणः पटस्य शुक्ल इति स गुणमात्रप्रतिष्ठो द्रव्येण विशेष्यमाणत्वाद् विशेषणमेव न भवति। पुंल्लिङ्गे च गुणेऽत्र तस्य प्रथमत एव प्राप्तसंस्कारत्वान्न लिङ्गसंख्याभेदाकाङ्क्षा। द्रव्यसमानाधिकरणस्य तु द्रव्यसामान्ये नपुंसकैकत्वयोगिनि स्थितस्य द्रव्यविशेषलक्षणाश्रयधर्माकाङ्क्षिणो युक्त-विशिष्टद्रव्यलिङ्गवचनप्रतिपत्तिः। तस्माद् गुणवान् गुणवचनः शुक्लादिरत्र सूत्रे विशे-
15 षणमुच्यते। यद्यपि चास्य लुप्तप्रत्ययस्य विशेष्यवचनता तथापि विशेष्यसामान्यवाचि-त्वाद् [5]विशेषाकाङ्क्षित्वात् तं प्रति विशेषणत्वं भवत्येव॥ १३५॥

वाक्यावधिके तर्ह्यन्वाख्याने पदान्तरापेक्षया शुक्लो गुणोऽस्य पटस्यास्तीत्युपक्रम एव विशिष्टलिङ्गसंख्यासिद्धौ किमर्थं सूत्रमित्याशङ्क्याह।

**शब्दान्तरत्वाद् वाक्येषु विशेषा यद्यपि श्रुताः।**
20 **वृत्तेरभिन्नरूपत्वात् तेषु वृत्तिर्न विद्यते॥ १३६॥**

शुक्लो गुणोऽस्य पटस्यास्तीति यदिदं विशेषवाक्यं तन्मतुब्लोपान्मत्वर्थीयाकारान्ततया वा या वृत्तिस्तस्या भिन्नरूपमेवेति प्रागेव प्रतिपादितम्। ततश्च वाक्यगता विशेषा वृत्तौ नान्तर्भवन्ति। अभिन्नरूपा हि वृत्तिः पटादिविशेषेष्विति तस्य नियत-वाक्यगतविशेषाभिव्यक्तिर्नास्तीति सर्वथा सामान्यापेक्षमेव वृत्तिपदानुशासनमिति विशेष-
25 लिङ्गसंख्यासिद्ध्यर्थमिदमारम्भणीयमेव सूत्रम्॥ १३६॥

---

5. AE[3] °युक्तस्यैव.

**135.** 1. AE[3] I °संबन्धस्य. 2. E[3] भ°वं, I योगभावः, P योभावः 3. A मतुपान्. 4. E[3] °त्वेनात्रापार°, I °त्वेनात्राभ्यन्तरपार° 5. AE[3] तद्विशेषा°.



नन्वेवमपि नियतविशेषनिष्ठस्यैव सामान्यस्य प्रतिपाद्यत्वादनिर्धारितोऽपि विशेषो भविष्यत्यन्वाख्याननिमित्तं समन्वयान्यथानुपपत्त्या वा बहिरङ्गमप्याश्रयलिङ्गसंख्यं प्रतीक्षिष्यते। कथमन्यथा सत्यपि वचने तत् सिध्येदित्याशङ्क्याह।

**रूपाच्च शब्दसंस्कारः सामान्यविषयो यतः।**
5 **तस्मात्तदाश्रयं लिङ्गं वचनं च प्रसज्यते॥ १३७॥**
**सलिङ्गं च ससंख्यं च ततो द्रव्याभिधायिना।**
**सम्बध्यते पदं तत्र तयोर्भिन्ना श्रुतिर्भवेत्॥ १३८॥**

इह योऽर्थः शब्दात् प्रतीयते स एव संस्कारनिमित्तम्। अस्माच्च वृत्तिपदाद-भिन्नरूपात्सर्वविशेषसाधारणाच्छ्रुतिसामान्य[1]स्वभावादर्थसामान्यं प्रतीयते, न तु विशेषः।
10 तथा च विवक्षितस्यापि विशेषस्याप्रतीतस्यासत्समत्वात् सामान्यनिबन्धनमेवान्वाख्यानं युक्तमिति सामान्याश्रययोर्लिङ्गसंख्ययोः प्राप्तिः॥ १२७, १३८॥

तयोश्चान्तरङ्गयोः कृतयोर्विशेषसन्निधानेऽपि त्यागाभावाद् व्यधिकरणत्वाद-संबन्धे वचनानुसारिणं प्रति प्राप्ते

**भाविनो बहिरङ्गस्य वचनादाश्रयस्य ये।**
15 **लिङ्गसंख्ये गुणानां ते सूत्रेण प्रतिपादिते॥ १३९॥**

वाक्ये पदानां प्रयोगयौगपद्याभावाद् भाविग्रहणमसमानकालताप्रतिपादनपरम्, पूर्वप्रतिपादनेऽपि आश्रयस्य पदान्तरसंस्कारेऽनपेक्षणात्। अत एव बहिरङ्गत्व-मनपेक्षणादाश्रयस्याश्रितसंस्कारे। एवमपि वचनसामर्थ्याद् बहिरङ्गोऽप्यर्थोऽपेक्ष्यत इति विशिष्टलिङ्गवचनसिद्धिः
20 'विशेषणानां ...' (P. 1. 2. 52.)
इति सूत्रारम्भात्॥ १३९॥

यदा तर्हि प्रथमत एव तद्धितवाच्यत्वं विशेषस्याभिधित्सितं तदा किं वचने-नेत्यत आह।

**[1]विशेषवृत्तेरपि च रूपाभेदादलक्षितः।**
25 **यस्माद्विशेषस्तेनात्र भेदकार्यं न कल्पते॥ १४०॥**

विवक्षितेऽपि विशेषे वृत्तिपदस्य साधारण्याद्[2] यदनवधारणं तस्य तत इत्य-शब्दार्थोऽन्वाख्याननिमित्तं न भवति विशेष इत्युक्तमेवैतत्॥ १४०॥

---

**138.** 1. E[3] मान्यस्व स्व°.

**140.** 1. E[3] शेषवृ°. 2. AE[3] °ण्यानवधा°, I °ण्यामनवधा°.

ननु च सामान्यस्य विशेषेषु प्रतिष्ठानात् तन्निवन्धनं कार्यं सामान्योपक्रमेऽप्यभिधानेऽनिवार्यं निर्विशेषस्य सामान्यस्याभावादित्याशङ्क्याह ।

**विशेष एव सामान्यं विशेषाद्धियते यतः ।**
**अभेदो हि विशेषाणामाश्रितो विनिवर्तकः ॥ १४१ ॥**

इह व्यावृत्तिर्विशेषलक्षणम् । परस्परं व्यावर्तमाना हि विशेषाः कथ्यन्ते । तथा च सामान्यमप्यभेदेनाश्रितं विशेषाणां निवर्तकत्वाद् **विशेषो** भवति । सामान्यविवक्षायां हि नियता विशेषा व्यावर्तिता[1] भवन्ति । तत्र यथा नियतो विशेषः समाश्रितो विशेषान्तरं निवर्तयति तथा सामान्यमपि विशेषानिति सोऽपि विशेषः । तदुक्तं

'सामान्यमपि यथा विशेषस्तद्वत्' ( M. Bhā, I. p. 422, l. 5. )

इति । एवञ्च पदान्तरानपेक्षेऽनुशासने[2]ऽभेदः सामान्यमाश्रितं[3] भेदानां निवर्तकमिति कथं विशेषगतलिङ्गसंख्यालाभः ॥ १४१ ॥

ननु चाभेदस्य भेदनिवारणे तैरसावुत्तरकालं न[1] संवध्येत । स्वानुरूपप्रत्ययजननं च तेष्वतो न स्यादित्याशङ्क्याह ।

**यद् यदाश्रीयते तत्तदन्यस्य विनिवर्तकम् ।**
**भेदाभेदविभागस्तु सामान्ये[2] न निरूप्यते ॥ १४२ ॥**

अन्यव्यवच्छेदफलत्वाच्छब्दप्रयोगस्य विशेषवत् सामान्यमपि नियतविशेषव्यवच्छेदमाश्रितं सत् करोत्येवेति वीप्सया व्यवच्छेदकत्वं विशेषलक्षणं सामान्यस्यापि योजितम् । एवमपि च सामान्यं भेद इति नोच्यते, सामान्यान्तराणामपाकरणेन स्वाश्रयेष्वनुवृत्तेः । नाप्यभेद इति शक्यते निरूपयितुम्, नियतविशेषाणां सामान्यान्तराणां च व्यावर्तकत्वात् । इत्थं च यथा गौरिति मुख्येऽर्थे[3]ऽन्वाख्यातं सामानाधिकरण्यान्यथानुपपत्त्या वाहीकं गोत्व[4]समारोपेणाभिधत्ते तथा शुक्लादिशब्दाः सामान्ये मुख्येऽर्थे संस्कृता विशेषैः पदान्तरोपादानैः संयुज्येरन्निति तयोर्भिन्ना श्रुतिर्भवेदिति बहिरङ्गाश्रयगतलिङ्गसंख्यासिद्ध्यर्थं सूत्रमित्ये[5]व स्थितम् ॥ १४२ ॥

ननु च पदवाच्यानामर्थानां वस्तूनामिव न किंचिदन्वयि रूपं दृश्यते । तत् किमेषां सामान्यमित्याशङ्क्याह ।

**अपोद्धारश्च सामान्यमिति तस्योपकारिणः ।**
**निमित्तावस्थमेवातस्तत् स्वधर्मेण गृह्यते । १४३ ॥**

---

141. 1. A व्यावर्तिनो. 2. AE³ °ने मेदः. 3. AE³ °श्रितः.
142. 1P. संपद्येत. 2. AE³ सामान्येन. 3. A om. अर्थे 4. AE³ I गोत्वे स°. 5. AE³ °स्त्ववस्थितम.



यद्यपि स्थितलक्षणार्थविशेषविषयं वाक्यमेव वाचकं[1] तथापि तस्मात् संसर्गरूपात् पदानाम[2]पोद्ध्रियमाणानां किंचिदर्थलेशलक्षणं सामान्यमप्यपोद्धारानुगुणं वाक्यार्थानुगुण्येनापोद्धारात् तदुपकारि व्यवतिष्ठते । अपोद्ध्रियते संसर्गात् पृथक् क्रियते इति **अपोद्धारः सामान्यम्** इति । एवमपोद्ध्रियमाणत्वेन तस्य सामान्यस्य **उपकारिणो** वाक्यार्थभू[3]तविशेषावगमोपायभूतस्येत्यर्थः । केवलाद्धयपोद्धृतात् पदादर्थसामान्यविषया प्रतिभा जायत इति तद्विषयः सामान्यं न विशेषः । तथा हि निमित्ते साकाङ्क्षरूपे[4]ऽवस्थितिर्यस्य, न विशेषात्मनि, तत् स्वेनात्मीयेन स्वभावेन निश्चीयते न भेदरूपेण, तस्यानियतस्योपप्लवात् । अतश्च [5]न विशेषलिङ्गसंख्याभ्यां संवध्यते पदार्थः ॥ १४३ ॥

ननु च नियतवाक्यगतत्वात् पदानामपोद्धारेऽपि पदाभिधेया विशेषा एवेति किमन्यत् सामान्यं स्या!दित्याशङ्क्याह ।

**अनिर्वारिधर्मत्वाद् भेदा एव विकल्पिताः ।**
**निमित्तैर्व्यपदिश्यन्ते सामान्याख्याविशेषिताः ॥ १४४ ॥**

पदानां विशेषाभिधानासामर्थ्याद् अनवगतनियतविशेषरूपा **भेदा एव** तेभ्यः प्रतीयमानाः सामान्यमित्यनया संज्ञया कल्पनया व्यवस्थापिताः, न विशेषसमाख्यया[1] । यतश्चा जातिगुणक्रियालक्षणै**र्निमि**त्तैरुपाधिभिरवच्छिन्ना गौः शुक्लो गच्छतीत्यादिरूपेण ते **व्यपदिश्यन्ते** ततो भेदा एवैवंरूपा इति निश्चीयन्ते[2] । यद्यपि हि [3]पदैर्व्यावृत्तरूपोऽर्थो नाभिधीयते तथाप्युपाधिरूपोपधानेनार्थाभिधानाद् भेदा एवाभिहिताः, निरुपाधेः सर्वतो व्यावृत्तस्याव्यवहार्यत्वात् । दूरादपि ह्या[4]रूपमात्रेण व्यक्तौ नै[5]वावसीयते । तस्मात् सर्वस्या वृत्तेः प्रतीतेर्भेदनिष्ठत्वात् पदार्थानां विशेषस्य पदान्तरगम्यस्यानासादनमात्रात् प्रतीतिः सामान्यस्येति व्यवस्थाप्यते । तत्त्वदृष्ट्या तु तद्वाक्योपादानस्य विशेषस्यानासादनादाकाङ्क्षणाच्च विप्लुतरूपत्वादसत्यै[6]व पदार्थानां प्रतीतिः । उपायमात्रं तु स वाक्यार्थप्रतीताविति निर्णीतचरमेतत् ॥ १४४ ॥

तदेवं

'विशेषणानाम्....' ( P. 1. 2. 52. )

इत्यारम्भः समर्थितः ।

---

143. 1 AE° तथाच. 2. A पदानामेवापो°. 3. A भूतस्येत्यर्थः । 4. E³साकांक्षे रूपे 5. E³ om. न.

144. 1, E³ °मारव्या. 2. A निश्चीयते. 3. AE³ I om. हि. 4. AE³ ह्यारोपमा P°पि रूपमा. 5. A सैवाव°. 6. AE³ °सत्येव.

' स्वाभाविकमेत् '

इत्येवं तस्य भाष्ये प्रत्याख्यानमुक्तम् । तदुपपादयितुमाह ।

**यदा तु व्यपदिश्येते लिङ्गसंख्ये स्वभावतः ।**
**प्रयोगेष्वेव साधुत्वं वाक्ये प्रक्रम्यते तदा ॥ १४५ ॥**

**प्रयोगेष्वेव** प्रयुज्यमानेष्वेव पदान्तरेषु वाक्यस्थानां वाक्यावधिकमन्वाख्यानं यदा प्रस्तूयते तदोपक्रम एवाश्रयविशेषसामानाधिकरण्यान्यथानुपपत्त्या सोऽयमित्यभिसंबन्धाच्छुक्लादीनां विशेषलिङ्गसंख्यायोग इति स्वाभाविकमेतदित्युच्यते । अत्र हि दर्शने नास्त्येतद्रूपाभेदादलक्षितो विशेषः । न चाप्यन्तरङ्गबहिरङ्गभावः कश्चित् उपक्रम एवाश्रयविशेषस्यापेक्षितत्वात् । तथा चान्तरङ्गेऽर्थसामान्ये संस्कारो न पर्यवस्यति । तदेवं पूर्वं विच्छेदोपक्रमेऽन्वाख्याने गुणगुणिनोर्भेदमाश्रित्य तद्धितप्रयोगे सत्याश्रयसामान्ये वृत्तेरन्तरङ्गो लिङ्गसंख्यासर्वनामयोग उक्तः । इदानीं तु सोऽयमिति संबन्धाश्रयेणाभेदमाश्रित्य प्रथमत एव [2]नियतवाक्योपात्तविशेषवृत्तिता कथिता । तथा चात्र भेदसंबन्धाभावान्मतुपो लुगकारो वा न विधीयत इति नास्त्यभिन्नरूपत्वं वृत्तेः, भेदसंबन्धविवक्षायामेव तद्विधानात् ॥ १४५ ॥

नन्वेवमभेदविवक्षैव न्याय्या । अन्यथा यथा भेदसंबन्धे गुणवचनेभ्यो मतुपो लुग् विधीयते तथा जात्यापि योगे विवक्षिते जातिशब्देभ्योऽपि कस्मात् स न विधीयत इत्याशङ्क्य जातिगुणयोर्द्रव्यसमवेतत्वाविशेषेऽप्यवान्तरविशेषप्रतिपादनायाह ।

**तत्र प्रयोगो[1]ऽनियतो गुणानामाश्रयैः सह ।**
**सामान्यं यत् तदत्यन्तं तत्रैव समवस्थितम् ॥ १४६ ॥**

शुक्लादयो गुणाः समुपजाते द्रव्ये निमित्तवशादनियमेन समवयन्ति, यावदाश्रयं च नावतिष्ठन्ते इति **अनियतः प्रयोगो** भेदेनाभेदेन च पटस्य शुक्लः शुक्लः पट इति । जातिस्तूत्पत्तिप्रभृत्या विनाशादव्यभिचरितसंबन्धा [2]द्रव्येणेति तदभेदेन सोऽयमिति संबन्धाद् व्यवह्रियते सदैव, न तु कदाचिदपि भेदेन पटस्य शुक्ल इत्यादिवदिति गुणशब्दा एव मतुब्लोपं भेदसंबन्धविवक्षायां प्रयोजयन्तीत्यर्थः । तथा च विच्छेदोपक्रमे सूत्रारम्भः समर्थितः ॥ १४६ ॥

एतदेव प्रकटयति ।

**न गोत्वं शावलेयस्य गौरिति व्यपदिश्यते ।**
**शुक्लत्वं बाहुलेयस्य शुक्ल इत्यपदिश्यते ॥ १४७ ॥**

145 1. AE[3] °यस्य सामान्ये. 2. AE[3] वृत्तिनिपत°.
146. 1. AE[3] गो नि°. 2. E[3] °न्याद् द्रैव्ये°.



भावप्रत्ययमन्तरेण व्यक्तेर्निष्कृष्टं सामान्यं नाभिधीयते जातावपि पदार्थे इति सर्वथा व्यक्तिरूपतां प्राप्तमभेदेन तदभिधीयते। सोऽयमिति संबन्धाद्धि व्यक्तिरूपतां प्राप्तं सामान्यं तथैव निर्देशार्हम् । यदा तु व्यक्तेर्निष्कृष्टरूपं विवक्षितं तदा भावप्रत्ययान्तवाच्यं **शावलेयस्य गोत्वम्** इति । जातावपि हि पदार्थे द्रव्याभेदं[1]गताया जातेरभिधानाद् गोर्गोत्वमिति प्रतीतिर्भिन्ना । गुणास्तु भेदेनापि कथ्यन्त इत्युक्तमेव । ततश्च तेभ्यो मतुपो लुगुच्यते ॥ १४७ ॥

अथवा

**व्यतिरेके च सत्येवं मतुपः श्रवणं भवेत् ।**
**लुगन्वाख्यायते तस्माद् रसादिभ्यश्च नास्ति सः ॥ १४८ ॥**

पटस्य शुक्ल इति भेदे सति संबन्धिवृत्तौ '[1]मत्वर्थीयप्रत्ययेनासावुच्यते इति तत्रापि शुक्ल इत्येव यथा स्यादिति मतुपो लुगुच्यते ।

' अव्यतिरेकात् सिद्धमिति चेद् दृष्टो व्यतिरेकः' ( Vā 4, M. Bhā. II, p. 1. 394, 10. )

इति [2]हि भेद संबन्ध एव लुक् समर्थितः जातेस्तु नास्ति भेदसंबन्ध इति तद्वचनाद् मतुब् नोत्पद्यते । अयमेव च विषयविभागो लुग्द्वारेणाख्यायते अभिधानशक्तिनियमनिमित्ततः । ततश्च यथा श्रूयमाणे प्र[3]त्यये प्रकृत्यर्थावच्छिन्नः प्रत्ययार्थोऽभिधीयते, तथा लुप्तेऽपि शुक्लादावित्युक्तं भवति । **रसादिभ्यश्च स लुङ् नास्ति** ॥ १४८ ॥

न हि ते मत्वर्थीयरहिताः स्वाश्रयमभिधातुं शक्नुवन्तीत्याह ।

**यत्सोऽयमिति संबन्धाद्रूपाभेदे[1]न वर्तते ।**
**शुक्लादिवत् ततो लोपस्तद्रसादौ न विद्यते ॥ १४९ ॥**

वचनग्रहणसामर्थ्याद् ये गुणमुक्त्वा तद्वति द्रव्ये सोऽयमिति संबन्धेन यादृशा एव गुणमात्रे वृत्तास्तादृशा एव वर्तन्ते, तेभ्यो मतुपो लुग् विधीयते गुणमात्रवृत्तित्वस्य दर्शनाद् गुणिनि वृत्तिमाख्यातुम् । तत्र निमित्तरूपारोपेणाभेदविवक्षायां शुक्लादीनां द्रव्याभिधानपक्षे भेदनिमित्तस्य मत्वर्थीयस्याप्राप्तौ किं लुका । [2]न च शुक्लः पटो विद्यते यस्येत्यत्र बाह्ये व्यतिरेके विवक्षिते मतुपो लुगिष्यत इति श्रौतस्यार्थस्यायोगाल्लाक्षणिकोऽर्थोऽत्राश्रीयते । ये सोऽयमिति संबन्धेन गुणनिमित्तद्रव्यवचना[3] अविशिष्टरूपा दृष्टाः तेभ्यः संप्रति गुणमात्रवृत्तिभ्यो भेदसंबन्धविवक्षायां मतुपः श्रवणं मा भूदिति लुगन्वाख्यायते । एवञ्च रसादयो व्यावर्तिता भवन्ति । यतस्तद्रूपाभेदेन रसादिशब्दानां

147. 1. A °भेदेऽङ्गतया, या °भेदे गता°
148. 1. E[3] मत्वर्थप्र° 2. AE[3] तर्हि. 3. A om. प्रत्यये.
149. 1. E[3] °भदे प्रवर्तते. 2. AE[3] ननु च. 3. A °चना अपि विशि°.

तद्वति वर्तनं नास्ति। सदैव हि ते मत्वर्थीयान्ता एव स्वाश्रयमाचक्षते रसवान् गन्धवानिति। तथा च

‘[4]रसादिभ्यश्च’ (P. 5. 2. 95.)

इति प्रतिपदमारभ्यते मत्वर्थीयः। इनिठनावेभ्यो न [5]दृश्येते इति पुनर्मतुबेव विधीयते। तथा च वार्त्तिकम् —

‘रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्’। (M. Bhā. II, p. 394, l. 18.)

इति। अन्यस्य प्रकृतस्य प्रत्ययस्य निवृत्त्यर्थमित्य[6]र्थः। रूपिण्यप्सरा इति तु शोभासंबन्धो गम्यते, न चक्षुर्ग्राह्यरूपगुणसमवायः। रसिको राजेत्यादौ तु शृङ्गारादिरससंबन्धो न रसनेन्द्रियग्राह्यगुणयोगो विवक्षित इति गुणादिति गुणे विशेषणात् गुणशब्देभ्य एव रसादिभ्य [7]इनिठनोर्निवर्तनादन्यतस्तौ भवत एव। उक्तेन न्यायेन तु लुगप्रसङ्गादन्यशब्देन वार्त्तिके लुगुच्यते इत्यपव्याख्यानम् ॥ १४९ ॥

तदेवमुपक्रम एव विशिष्टद्रव्यविवक्षायां स्वाभाविकमेतदिति गुणानामाश्रयेण सह सोऽयमित्यभेदसंबन्धे सिद्धे लिङ्गसंख्ये इति प्रतिपादितम्। अत्रापि च पक्षे सूत्रस्योपयोगं प्रतिपादयितुमुपक्रमते।

**आवेशो लिङ्गसंख्याभ्यां कचिन्मञ्चादिवत् स्थितः।**
**सोऽयमित्यभिसंबन्धे स प्रष्ठादौ न विद्यते ॥ १५० ॥**

इह सोऽयमित्यभेदसंबन्धविषये समारोप्यस्यार्थान्तरे द्वैतं दृश्यते, आविष्टलिङ्गसंख्यता तदभावश्च। तत्र मञ्चान् युवतीः पश्य वासांसि वेत्यत्र मञ्चशब्दः तात्स्थ्यात् समारोप्यमाणोऽजहत्स्वलिङ्गसंख्य एव [1]वर्तते स्वाधेये। तथा गिरिप्रभ[2]वासु नदीषु सामीप्याद् गिरिरूपसमावेशेन गिरिशब्दोऽजहत्स्वलिङ्गसंख्य एव प्रवर्तमानो दृष्टः, गिरीन् सरितः स्यन्दमानाः पश्येति। प्रष्ठप्रचरादिशब्दा[3]स्तु [4]स्वभार्यायां प्रस्थानादिक्रियासङ्गात् प्रवर्तमानाः परित्यक्तस्वलिङ्गसंख्या एव समावेशविषयलिङ्गसंख्योपादायिनो दृश्यन्ते। तथा च प्रष्ठी प्रचरीति स्त्रीलिङ्गेनैव समाख्यायते स्त्री। तदत्र द्वे अपि लिङ्गसंख्ये परित्यक्ते निमित्तिनि प्रवर्तमानेन प्रष्ठादिश[5]ब्देन। [6]मञ्चादिशब्दस्तु कश्चित् स्वगतं लिङ्गमेवोपादायोपचरितनिमित्ते निमित्तिनि प्रवर्तते, मञ्चान् योषितो, हरीतक्यः

4. A. om रसादिभ्यः—विधीयते. 5. E³ दृश्यते. 6. A om. इत्यर्थः 7. E³ ठनोनिवर्त°.
**150.** 1. A प्रवर्तते. 2. E³ °रिप्रवरासु. 3. A °रादिशब्देन. E³ om. प्रष्ठ.
4. A inserts मञ्चादिशब्दास्तु before स्वभा°. 5. A °दिशब्दस्तु. 6. A om. मञ्चादिशब्दस्तु.



फलानीति। कश्चित्तु वचनमेवानुवर्तते स्वगतं खलितकं वनानीति। कश्चित् पुनर्द्वे अपि लिङ्गसंख्ये स्वगते समाश्रित्य तद्वति निमित्तिनि वर्तते शब्दः। तद् यथा विंशतिर्ब्राह्मणा इत्यादि। एष च शब्दशक्तिस्वाभाव्यान्नियमो विषयविभागेन सिद्धः ॥ १५० ॥

शास्त्रेऽप्यस्यैवार्थस्यास्ति ज्ञापकमित्याह।

**लिङ्गं लिङ्गपरित्यागे सूत्रं प्रत्ययशासनम्।**
**सोऽयमित्यभिसंबन्धात् पुंशब्दे स्त्र्यभिधायिनि ॥ १५१ ॥**

‘पुंयोगादाख्यायाम्’ (P. 4. 1. 48.)

इति प्रष्ठादिभ्यः स्त्रीप्रत्ययानुशासनं सोऽयमित्यभिसंबन्धेन स्त्रियां तेषां परित्यक्तस्वलिङ्गसंख्यानां प्रवृत्तिरित्यस्यार्थस्य ज्ञापकम्। तथा हि — आख्याग्रहणादभेदसंबन्धा[1]त् पुंशब्दाः स्त्रियां ये वर्तन्ते ते गृह्यन्ते न तु भेदसंबन्धेन प्रष्ठस्येयमिति तद्धितान्ताः। तथा च भाष्यम्

‘न हि तद्धितान्तमाख्या भवति’ (M. Bhā. II. p. 218, l. 10.)

इति। सति तद्धिते पुमाख्यानामभिन्नरूपाणामेव नास्ति स्त्रियां वृत्तिरित्यर्थः ॥ १५१ ॥

तदेवं प्रष्ठादीनामेव शब्दशक्तिस्वाभाव्याल्लिङ्गाच्च स्वलिङ्गसंख्यापरित्यागेनार्थान्तरे वृत्तिः, नान्येषामिति मञ्चादिशब्दवच्छुक्लादिशब्दानामपि सोऽयमित्यभिसंबन्धेन द्रव्ये स्वलिङ्गसंख्यानामेव प्रवृत्तिप्रसङ्गे

‘विशेषणानां ...’ (P. 1. 2. 52.)

इति सूत्रमाश्रयविशेषगतलिङ्गसंख्यासिद्ध्यर्थमारभ्यत इत्याह।

**आश्रये लिङ्गसंख्याभ्यामाश्रितं व्यपदिश्यते।**
**विशेषणानां चाजातेरिति शास्त्रव्यवस्थया ॥ १५२ ॥**

शब्दशक्तिस्वाभाव्यात् प्रष्ठादिवदाश्रयलिङ्गसंख्योपादाने सिद्धे

‘पुंयोगादाख्यायाम्’ (P. 4. 1. 48.)

इतिवद्

‘विशेषणानां ....’ (P. 1. 2. 52.)

इत्यपि शास्त्रमनुवादकम्। ततश्च[1]आश्रयविषयाभ्यां लिङ्गसंख्याभ्यामाश्रितं शुक्लादिगुणरूपमभिधीयते सामानाधिकरण्या[2]न्यथानुपपत्त्येति स्थितम् ॥ १५२ ॥

7. E³ तथा विं°.
**151.** 1. I °न्धाः पुं°.
**152.** 1. A आश्रयगतविशेषाभ्यां, E³ आश्रयविशेषाभ्यां. 2. E³ °व्यस्य चानुप°.

तथा हि

**निमित्तानुविधायित्वाद् ये धर्मा भेदहेतुषु ।**
**त आश्रयेऽपि विद्यन्त इति बुद्धिर्निवर्त्यते ॥ १५३ ॥**

'निमित्तान्निमित्तवत्यर्थे निमित्तसरूपः प्रत्ययो जायत इति निमित्तेन शुक्लादिना गुणेन निमित्ती द्रव्यविशेषस्तिरोहितरूपोऽभिधीयत इति तेषु भेदहेतुषु निमित्तेषु ये धर्मास्ते तत्राश्रये निमित्तिनि सर्वे प्राप्ता इति यथा शुक्लादिशब्दस्तत्र व²र्तते तथा तद्गत-लिङ्गसंख्याप्राप्तावपि सूत्रारम्भ इत्यर्थः । तथा च शुक्लादिगुणगतलिङ्गवचनप्रतिपत्तिः शास्त्रेण निवार्यते द्रव्यस्य गुणशब्देनाख्या³ख्यायमानस्य स्वलिङ्गसंख्याभ्यामेव व्यपदेश इति । दृष्टो हि निमित्तगतलिङ्गसंख्यायोगो निमित्तिनि । तद्यथा पञ्चाला इति क्षत्रिया-वच्छेदेन निवासस्याभिधीयमानस्य बहुत्वम् । गोदौ ग्राम इति गोदसामीप्येनाभिधीय-मानस्य ग्रामस्य द्वित्वम् ॥ १५३ ॥

ननु च पञ्चाला इत्यादौ

'लुपि युक्तवद् व्यक्तिवचने' (P. 1. 2. 51.)

इति शास्त्रान्निमित्तगतलिङ्गसंख्यायोग इत्याशङ्क्याह ।

**आख्यायते च शास्त्रेण लोकरूढा स्वभावतः ।**
**निमित्ततुल्या गोदादौ प्रवृत्तिर्लिङ्गसंख्ययोः ॥ १५४ ॥**

गोदौ ग्रामः, पञ्चाला जनपदः इत्यादौ शब्दशक्तिस्वाभाव्यान्निमित्तानुविधानेन निमित्तिनि शब्दप्रवृत्तिर्लोके सिद्धा वचनेन प्रकाश्यते, न तु वचनमेव शब्दशक्त्या-नक्षाधमम् । तथा च

'तदशिष्यं संज्ञाप्रमाणत्वात्' (P. 1. 2. 53.)

इति प्रत्याख्यातमेतत् । संज्ञा हि संज्ञानं लौकिको हि ¹संप्रत्ययो रूढः । कश्चित् किल शब्दो निमित्तधर्मेण तद्वन्तमाचष्टे, यथा मञ्चादिरिति । शुक्लादावप्येवं सन्देहे प्राप्तादिवन्निमित्तिधर्मेणार्थाभिधानं

'विशेषणानाम्' (P. 1. 2. 52.)

इति वचनेन प्रकाश्यते ॥ १५४ ॥

यतश्च शब्दशक्तिरेव वचनेनानुगम्यते ततो विषयविभागोऽत्र सिद्ध इत्याह ।

153. 1. A om. निमित्ताद—जायत इति. 2. P प्रवर्तते. 3. AE³ °ब्देनान्वाख्याय°, I °ब्देनाख्या°.

154. 1. AE³ संज्ञिनां. 2. AE³ om. हि.



**हरीतक्यादिषु व्यक्तिः संख्या खलतिकादिषु ।**
**मनुष्यलुब्विशेषाणामभिधेयाश्रयं द्वयम् ॥ १५५ ॥**

उक्तमिदं वार्त्तिके

"हरीतक्यादिषु व्यक्तिः । खलतिकादिषु वचनम् ।
मनुष्यलुपि प्रतिषेधः ।" (Vā, 3, 4, 5 on P. 1. 2. 52.)

इति । तत्र वाचनिकत्वे लिङ्गसंख्ययोर्निर्निबन्धनोऽयं विषयविभागः । अनेन हि वचनेन स्वभावसिद्ध एवाख्यायतेऽर्थः, वचनस्यार्थप्रभावेन शक्यभावादिति हरीतक्यः फलानि, नखरजन्यः काशाः द्राक्षा इत्यादिषु लिङ्गमेव निमित्ततुल्यं संख्या त्वभिधेय-निमित्तगतैवेति फलानां बहुत्वाद् बहुवचनमेव भवति । न हि पररूपसमारोपे तद्विषयस्य सर्वथैव स्वरूपं तिरोधीयत इति फलस्वरूपस्यातिरस्कारात् तदाश्रयं बहुत्वम् । निमित्त-संख्योपादाने तु नास्त्यस्य शक्तिः । तथा खलतिकस्य पर्वतस्यादूरभवानि विन्ध्यस्यादूर-भवानीत्यादौ निमित्तगतसंख्योपादाने शब्दस्य शक्तिः । लिङ्गं तु निमित्तिगतमेव भवतीति वनस्य नपुंसकत्वान्नपुंसकं खलतिकं वनानीत्यादि । तथा चञ्चेव मनुष्यश्चञ्चा मनुष्य इत्यत्र

'लुम्मनुष्ये' (P. 5. 3. 98.)

इति

'इवे प्रतिकृतौ' (P. 5. 3. 96.)

इति विहितस्य कनो लुपि यानि विशेषणान्युपादीयन्ते अभिरूपः स्वाकृतिर्दर्शनीय इत्यादीनि, तेषां विशेषणानामि¹ति पञ्चाला बह्वन्ना इत्यादिवन्निमित्तगतलिङ्गसंख्यानुविधाने नास्ति शक्तिरित्यभिधेयो निमित्ती मनुष्यस्तदाश्रयं द्वयमपि लिङ्गसंख्यारूपं भवति । एवञ्च न्यायसिद्धेऽस्मिन् प्रकरणेऽजातेरित्येतदपि प्रत्याख्यातम् । आविष्टलिङ्गत्वाज्जातेः पञ्चाला जनपद इति जनपदस्य निमित्तलिङ्गसंख्यानुविधानं न भविष्यति ॥ १५५ ॥

यदपि व्याख्यातमजातेरिति जातिप्रयोगं¹ यावद्विशेषणानि लुबन्तगतलिङ्ग-संख्यानुविधायीनि जातिविशेषणानि तु न तथेति तद् व्याचष्टे ।

**जातिप्रयोगे जात्या चेत् संबन्धमुपगच्छति ।**
**विशेषणं ततो धर्माञ्जातेस्तत् प्रतिपद्यते ॥ १५६ ॥**

कामचाराद्विशेषणेनावच्छेदस्य यदा जातिमभिसंधाय विशेषणं प्रयुज्यते तदा तद्गतलिङ्गसंख्यासिद्धिस्तद्यथा वरणा नगरं रम्योपवनं स्वच्छोदकं सुगन्धिकुसु-ममिति ॥ १५६ ॥

155. 1. A om. इति.

156. 1. A °गं विना याव°.

यदा तु लुबन्तानुसंधानेन विशेषणप्रयोगः तदा

**लुबन्ते सन्निपतितं[1] जातेरन्यद् विशेषणम्।**
**लुबन्तस्य प्रधानत्वात् तद्धर्मैर्व्यपदिश्यते ॥ १५७ ॥**

जातिराविष्टलिङ्गसंख्येति ततोऽन्यद् विशेषणं लुबन्तसमानाधिकरणं तल्लिङ्गसंख्यमेव सिद्धम् । पञ्चालाः प्रियातिथयः स्पष्टाभिधाना[2] विनीतवेषा बह्वन्ना जनपदः, गोदौ सूक्ष्मकण्टकौ वृक्ष[3] इति । एवञ्च कृत्वा नार्थ एतदर्थेन सूत्रेणेति गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्यत्रार्थे सूत्रं व्यापारितम् । अत्रापि यदाश्रितरूपमाश्रये [4]प्रत्यस्यते तदाश्रितरूपस्योद्भूतत्वात् तच्छब्दमिवाश्रयस्तल्लिङ्गवचनमपि प्रतिपद्यतेति सूत्रारम्भः । यदा त्वाश्रयरूपस्याश्रिते प्रत्यासः तदाश्रयस्य स्वधर्मप्रतिपत्तिरेव युक्तेति स्वाभाविकमेतदिति प्रत्याख्यातं सूत्रम् । आश्रयधर्मरूपस्याश्रितेऽध्यासे हि पटशब्देन शुक्लगुणोऽभिधीयत इति तद्गत एव लिङ्गसंख्यायोगो मुख्यः । न चैवं स्वशब्देन गुणस्याभिधानं निवर्तत इति शुक्ल[5]शब्देन समानाधिकरणेन तुल्यलिङ्गसंख्येनैव भवितव्यम् । अपरः कल्पो वात्रारम्भप्रत्याख्यानयोर्विद्वद्भिरुक्तः । तथा हि — निराश्रयस्य गुणस्याभावाद् यदाश्रयमात्रे तस्य निवेशस्तदा द्रव्यसामान्यगतलिङ्गवचनसर्वनामप्राप्तौ सूत्रारम्भः । यदा तु द्रव्यविशेषविवक्षा पूर्वमेवेति नियते द्रव्ये गुणस्य निवेशस्तदा स्वाभाविकमेतदिति प्रत्याख्यानम् । उपक्रम एव हि प्रयोगेष्वेव वाक्ये साधुत्वं प्रक्रम्यत इत्यस्ति विशेषप्रत्यायने शब्दस्य सामर्थ्यम् । तृतीयोऽप्यत्र दर्शनभेदः कामचाराद् विशेषणविशेष्यभावस्य । यदा गुणो विशेष्यते तदा स्वगतलिङ्गसंख्याभ्यामेव प्राधान्यायोगे प्राप्ते गुणिगतलिङ्गसिद्धये सूत्रारम्भः । यद्यपि च सूत्रे विशेषणानामित्युक्तं तथाप्यत्र गुणो विशेष्योऽपि प्राधान्येनाश्रयणात् स्वाधारं प्रत्याश्रितत्वाद्विशेषणं भवत्येवेति कथ्यते अस्यामपि प्रधानदशायां विशेषणशब्देन । आश्रितमात्रं ह्यत्र विशेषणमभिप्रेतम्, न भेदकमेव । अस्ति च विशेष्यतया प्राधान्येऽपि गुणस्याश्रितत्वमिति न कश्चिद्[6] दोषः । यदा तु गुणो विशेषणं तदा तस्य प्रधानानुरोधित्वादाश्रयधर्म[7]प्रतिपत्तिर्न्यायसिद्धेति स्वाभाविकमेतदिति प्रत्याख्यानशब्दः । ततश्च न्यायसिद्धार्थप्रदर्शनार्थमिदं सूत्रं सकलशास्त्रव्यापकमिति ॥ १५७ ॥

येषु भाष्यवार्तिकप्र[1]देशेष्वस्योपयोगः तानुद्दिश्य क्रमेण विचारयति ।

**नञ्समासबहुव्रीहिद्वन्द्वस्त्र्यतिशयेषु ये ।**
**भेदा भाष्यानुसारेण वाच्यास्ते लिङ्गसंख्ययोः ॥ १५८ ॥**

157. 1. A° तिवे. 2. AE[3] °धायिनो. 3. A ग्राम. 4. A प्रत्याप्यते. 5. AE[3] °क्लादिश°. 6. E[3] °श्चिद् विशेषः. 7. E[3] °र्मप्रतीतिर्न्या°.

158. 1. IP °कप्रयोगेष्व°.



एतेषु भाष्यप्रदेशेष्वाश्रयतो लिङ्गवचनान्युक्तानि विचार्यन्ते[2] । भेदाः इति । निमित्तानुविधानेन प्राप्तानपोद्याश्रयतो लिङ्गसंख्याविशेषा भाष्ये प्रतिपादिता इहानुगम्यन्ते ॥ १५८ ॥

तत्र प्रातिलोम्यक्रमेण लघुवक्तव्यत्वादतिशायनसूत्रवार्तिकभाष्यं तावद् व्याचष्टे ।

**यदि षष्ठीद्वितीयान्तान्निष्कृष्टात् तमबादयः ।**
**न्यक्कारिणि स्युरुत्कृष्टे प्रकृतेः स्याद् विलिङ्गता ॥ १५९ ॥**

'अतिशायने तमबिष्ठनौ' (P. 5.3.55.)

इत्यत्र बहवः पक्षाः, अतिशायनशब्दः कर्तृसाधनः, करणसाधनो भावसाधनो वेति । अतिशेते इत्यतिशायनः । बहुलवचनात् कर्तरि ल्युट् । निपातनाद् दीर्घः । अतिशेते वानेनेत्यतिशायनः गुणक्रियालक्षणो द्रव्याश्रयो धर्मः । द्रव्यस्य हि स्वतः प्रकर्षाभावादाश्रितधर्मद्वारकः सोऽवस्थापितः । तत्र च धर्माश्रयो धर्मी यदाभिभावकत्वेन विवक्ष्यते तदासावतिशेते इति कर्ता प्रत्ययार्थः । यदा तु धर्ममात्रस्यात्र व्यापारः तदा करणं धर्ममात्रं प्रत्ययार्थः । शुक्लेन हि गुणेन पटोऽन्यानतिशेत इति स एवातिशायनो मुख्यो गुणः । अत एव तस्य प्रयोजकत्वादतिशाययतीति ण्यर्थोपपत्तौ निर्देशो न्याय्यः । भावसाधनेऽप्यतिशायनमतिशयः प्रकर्षः, स चाश्रितगुणनिमित्तः इति स एव गुणस्तमबादिप्रत्ययार्थोऽवतिष्ठते, क्रियालक्षणो वा धर्मः । एतेषु चार्थेषु प्रत्यये विधीयमाने सामर्थ्यात् प्रतियोगिनो नि[1]ष्कृष्टादसौ भवति । तत्र च विशिष्टा प्रकृतिर्नोपात्तेति ङ्याप्प्रातिपदिकसामान्यं[2] निष्कृष्टवाचि प्रकृतित्वेनावतिष्ठते । समर्थविभक्तिश्च सूत्रे नोपात्तेत्युक्तम्

'किमन्तात्पुनरुत्पत्त्या भवितव्यम्' (M. Bhā II, p. 414. l. 15.)

इति । तत्र

'द्वितीयान्तादतिशय्यमानात्' (M. Bhā. II. p. 414. l. 15.)

इत्युक्तम् । शेतिरकर्मकोऽपि उपसर्गवशात् सकर्मकेऽभिभवे वर्तत इत्यभिभविता प्रत्ययार्थः । तस्य न्यूनेनाभिभाव्येन प्रकृत्यर्थेन योग इत्यपकृष्टवाचिनः प्रत्ययाः । सूत्रेषु च येन केनचिच्छब्देनार्थनिर्देश[3] इति यदा तिङन्तेन वाक्यं तदा कर्मणि न्यूने द्वितीया

2. A °र्यन्ते भेदा इति ॥ १६० ॥

159. 1. निकृष्टाद् would be a better reading but no ms. or previous edition has it. The same can be said of other occurrences of the word निष्कृष्ट. 2. A °मान्यलिङ्ग°. 3 A °र्थनिर्देशः.

न्याय्येति द्वितीयान्तादित्याह। यदा कृदन्तेनैव वाक्यं तदा कृत्प्रयोगे कर्मणि षष्ठीति षष्ठ्यन्तादपि सम्भवोऽत्र व्याख्यातः।

'षष्ठ्या रूप्य च' (P. 5. 3. 54.)

इत्यत्र च षष्ठी समर्थविभक्तिरनुवर्तत एव। अयमिदश्चात्रोभयत्रापि समर्थविभक्ताविव्येवंपरमेतत्। भाष्ये तु कृद्योगषष्ठ्याः कर्तर्यपि भावादसन्देहेन कर्म द्वितीयया एवावगम्यत इति द्वितीयान्तादित्युक्तम्। एवमत्र प्रत्ययार्थविशेषणपक्षे प्रकृतिप्रत्ययार्थयोर्भेदात् प्रकृतेर्यल्लिङ्गं तद्विपरीतं प्रत्ययार्थस्य प्रसज्येत ॥ १५९ ॥

तामेव भिन्नलिङ्गतामुदाहरणेनाभिव्यनक्ति।

**काल्यां कालाद् द्वितीयान्तात् काले काल्यास्तरब् भवेत्।**
**न्यक्कर्तरि तथा गार्ग्ये गर्गेभ्यः प्रत्ययो भवेत् ॥ १६० ॥**

कालमतिशेते, तस्य वातिशायिनी कालीति द्वितीयान्तात् षष्ठ्यन्ताद्वातिशय्यमानादतिशयितरि प्रत्यये कालतरा कालीति प्राप्नोति। कालितरेति चेष्यते। तथा कालीमतिशेते, तस्या वातिशायनः काल इत्यत्र कालितर इति प्राप्नोति। कालतर इति चेष्यते। विलिङ्गतेति चात्रोपलक्षणम्। विभिन्नसंख्यता च प्रसज्यते। तथा हि गर्गानतिशेते गार्ग्य इति। तत्र न्यक्कर्तरि गर्गतर इति प्राप्नोति। गार्ग्यतर इति साधुरिष्यते। गार्ग्यमतिशेरते गर्गा इति। तेष्वतिशायकेषु गार्ग्याद् विधौ गार्ग्यतरा इति प्राप्नोति। गर्गतरा इति चेष्यते। अत्र च वृत्तौ संख्याविशेषप्रतीतिर्लुग्लुग्भ्यामेव प्रतीयत इति भवत्येकवचनद्विवचनान्तात् तरबिति पूर्वमेव निर्णीतम्। एवं प्रत्ययार्थविशेषणपक्षो दुष्टोऽभिहितो भाष्ये। तदनन्तरमेव

'तर्हि प्रथमान्तात् स्वार्थिको भविष्यति' (M. Bha. II, p. 414, l. 20.)

इति प्रकृत्यर्थविशेषणपक्षोऽभ्युपगतः। तथा ह्यतिशेतेऽतिशायन इति

'कृत्यल्युटो बहुलम्' (P. 3. 3. 114.)

इति कर्तर्यतिशायनशब्दः। तत्र प्रत्ययवाच्यस्य व्यतिरेकहेतोरभावादन्तरङ्गा प्रातिपदिकार्थमात्रापेक्षा प्रथमा। तदन्ताद्विधिः। अर्थान्तरानिर्देशाच्च स्वार्थिकास्तरबादयः। अतिशायने यद् वर्तते तस्मात् प्रत्ययः स्वार्थे। काली अतिशेते कालितरा। कालोऽतिशेते कालतर इति। विलिङ्गता च न भवति। तथा गार्ग्योऽतिशेते गार्ग्यतर इति। गर्गा अतिशेरते गर्गतरा इति विसंख्यतापि न भवति ॥ १६० ॥

4. A °त्र्येवावग°.

160–161. 1. E³ °संख्याता.



किन्त्विदमत्रानिष्टमुक्तम्—

"यदि प्रथमान्तात् स्वार्थिकः कुमारितरा। अव्यतिरिक्तं वय इति कृत्वा, 'वयसि प्रथमे' (P. 4. 1 20.) इति ङीप् प्राप्नोति।"

तदेतद् व्याचष्टे।

**न्यक्कर्तृषु च गर्गेषु गार्ग्यात् स्यात् तच्च नेष्यते।**
**कुमार्याः स्वार्थिके ङीष् स्यात् प्रकृत्यर्थो हि नाधिकः ॥१६१॥**

कुमारी अतिशेते, किशोरी अतिशेत इति कुमारितरा किशोरितरा इति

'वयसि प्रथमे' (P. 4. 1. 20.)

इति ङीप् स्यात्। स्वार्थिकत्वे तरपः प्रकृत्यर्थस्य प्रथमवयोऽवच्छिन्नस्त्रीलक्षणस्यानतिरेकात्। न हि प्रथमेन ङीपाभिव्यक्तातिशायनस्य स्त्रीत्वं द्योतितम्। ननु च तरपा कुमार्यर्थस्यैव प्रकर्षप्रकाशनात् प्रकृष्टस्यार्थस्य स्त्रीत्वमवगतमेव। तथा च भाष्यम्

'तरपोक्तत्वात्तस्यार्थस्य न भविष्यति' (M. Bhā. II. p. 414, l. 23.)

इति। स्त्रीत्ववत एव प्रकृष्यमाणत्वात् तरबन्तेनैव द्योतितमेव स्त्रीत्वमिति ङीब् न भविष्यतीत्यर्थः। अत्र चोदितम्

'टावपि तर्हि न प्राप्नोति' (M. Bhā. II. p. 414, l. 24.)

इति। अभिहितार्थत्वं सर्वस्त्रीप्रत्ययानुत्पत्तिनिमित्तं समानमित्यर्थः। अत्र परिहारोऽप्यभिहितः

'उक्तेऽपि हि भवन्त्येते स्वार्थिकाष्टाबादयः' (Ibid.)

इति। अयमर्थः। स्त्रियां यद्वर्तते प्रातिपदिकं तस्मात् स्वार्थे टाबादयो विहिताः। एवञ्च यथा प्रातिपदिकार्थस्य सर्वलिङ्गसाधारण्यादुपात्तमपि प्रातिपदिकेन स्त्रीत्वं नियमेन न प्रतीयेतेति प्रथमेन स्त्रीप्रत्ययेन तद् द्योत्यते यथा 'कुमारितरा' इति। असति टापि विपरीतार्थावगमप्रसङ्ग इति भवत्यसौ, न तु सर्वथैवोक्तेऽनवस्थाप्रसङ्गात् स्वार्थिकेनापि भवितव्यम्। यद्येवं टावपवादो ङीबपि प्राप्नोतीत्युक्तं भाष्ये इति चोद्यमेव। ननु च प्रथमेनैव ङीपा प्रथमवयोऽवच्छेदस्योक्तत्वात् स्त्रीत्वमात्राभिव्यक्तयेऽयं टावेव न्याय्यः। नैतदस्ति, अर्थानुगुण्याद् ङीप एव न्याय्यत्वम्। तद्यथा—एको द्वौ बहव इत्यत्रोक्तार्थापि प्रथमा समयाद् भविष्यतीत्युक्ते चोदितं

'यदि सामयिकी न नियोगतोऽन्या अपि कस्मान्न भवति'

इति। तत्र परिहारोऽभिहितः

2. M. Bhā. reads as follows तरपोक्तत्वात् स्त्रीप्रत्ययो न भविष्यति. 3. M. Bhā. has no स्वार्थिकाः. 4. A °वच्छवद. 5. A यद्येवं E³ यद्यप्येवं. 6. A अन्यथा क°.

'अर्थतो व्यवस्था'

इति । न केवला प्रकृतिः प्रयोक्तव्येति प्रयोगनियमानुपालनायां विभक्तौ यद्यपि न कश्चिदर्थानुरोधस्तथाप्यनुगतार्थत्वात् प्रथमैव न्याय्येत्यर्थः । अत्र[7] दर्शने तत्र यत्रेत्यादावपि सप्तम्येव न्याय्या । एवमिहापि प्रकर्षाभेदार्थं ङीबेव न्याय्य इति युक्तमुक्तं

5 'ङीबपि तर्हि प्राप्नोति' ( M. Bhā. II. p. 414, l. 25. )

इति । अन्तरेणापि च तरबादीन् प्रकरणादिवशात् केवलापि प्रकृतिरतिशयमुपगमयतीति प्रकरणाद्यभावेऽतिशयं द्योतयन्तो भवन्त्येव स्वार्थिकास्तरबादयो न वाचकाः । तथा हि— स्वतन्त्रमर्थमन्या[8]नपेक्षं गमयन्तो वाचकाः कथ्यन्ते शब्दाः । तदपेक्षास्तु तद्गतमर्थं द्योतयन्तः स्वार्थिकाः । तत्रैव च द्योतनेऽत्रान्वयव्यतिरेकौ सव्यापारौ । पटुतरो देव-

10 दत्तः, पटुकल्पः पटुरूप इति सामानाधिकरण्यात् प्रकृतिप्रत्ययार्थयोः प्रकृत्यर्थानुवादित्वेन स्वार्थिकत्वमेषां तरबादीनां निश्चीयते । वाचकेषु तु यञादिषु गर्गस्यापत्यं गार्ग्य इति व्यधिकरणत्वम् ।

न [9]यावत् काली तावत् कालितरा इत्यस्माद्भाष्यान्न वाचकत्वावसायः । अभिव्यक्त-प्रकर्षा हि काली । सैव प्रकृष्यमाणा कालितरेति प्रकर्षोपादानानुपादानलक्षणभेदाश्रयेण

15 भाष्यप्रवृत्तेः । तस्माल्लौकिक एवार्थो नियतोऽ[10]वस्थितः शास्त्रे वाचकद्योतकप्रविभागेना-नुविधीयते । न तु प्रक्रियागता एवामी विकल्पा निरस्तार्थप्रविभागाः ॥ १६१ ॥

एवं स्वार्थिकत्वेऽपि दोषमुद्भाव्यानन्तरमभिहितम् —

'एवं तर्हि गुणोऽभिधीयते, अथवा क्रियाभिधीयते ।'

( M. Bhā. II. p. 414, l. 25 and p. 415, l. 2. )

20 इति । तदेतद् भाष्यं व्याख्यातुमाह ।

**षष्ठ्यन्तादधिके तस्माद् गुणे स्वाश्रयवर्तिनि ।**
**उत्कृष्टसमवेतायां क्रियायां वा विधीयते ॥ १६२ ॥**

करणसाधनेनातिशायनशब्देन गुण उच्यतेऽभिभावकः । अतिशयानमभिभवन्तं स्वाश्रयं प्रयोजयत्यतिशाययतीत्यतिशायन इति वा ण्यन्तात् कर्तरि ल्युटि गुणोऽभिधी-

25 यते । प्रकृष्यमाणेन हि गुणेन द्रव्यस्य समानगुणात् प्रकर्षो भवति, स्वतः प्रकर्षा-भावात् । तेन च गुणेन स्वाश्रयसमवायिना स्वाश्रयव्यतिरेकोपजननात् प्रकृतिर्गुणाश्रय-वाचिनी षष्ठ्यन्ता भवति गुणः प्रत्ययार्थः । शुक्लस्यातिशायनो गुणः शुक्लतरः । **स्वाश्रयवर्तिनि** इति च वदन्नाश्रयान्तरवर्तिनि न भवति प्रत्यय इति विलिङ्गतादि-पूर्वोक्तदोषो नावतरतीत्याह । यदा तु भावसाधनो ल्युट् अतिशयोऽतिशायनमिति तदा

7. A अप्रदर्शने, E[3] तत्र दर्शने. 8. I °मन्यापेक्षं. 9. P °णत्वं न । यावत् काली तावत्°.
10. AE[2] नियतो परिस्थितिकः.



क्रिया प्रकर्षाख्योच्यते इत्येतस्यां वाच्यायां प्रत्ययः । क्रियोपजनिते च व्यतिरेके प्रकृतेः षष्ठी शुक्लस्यातिशायनं शुक्लतर इति । व्यतिरिक्तश्चात्र गुणक्रियालक्षणः प्रत्ययार्थ इति त्रयस्त्रिन्याः कुमार्याः विशेषणत्वेनाप्राधान्यान्न भवति तदन्ताद् ङीप्प्रत्ययः ॥ १६२ ॥

अत्र पक्षे गुणक्रियालक्षणोऽर्थः प्रत्ययवाच्यः प्रधानमिति द्रव्याभिधायिभिः

5 पटादिभिः सामानाधिकरण्याभावो भाष्ये कथं न चोदित इत्याह ।

**उपात्तं च प्रकृत्यर्थो द्रव्यमेवाश्रयस्तयोः ।**
**सोऽयमित्यभिसंबन्धादभेदेन प्रतीयते ॥ १६३ ॥**

यदेव प्रकृतेः प्रातिपदिकस्य वाच्यं द्रव्यमत्र सन्निहितं तदेवानयोर्गुणक्रिययोः प्रत्ययवाच्ययोः सोऽयमित्यभेदसंबन्धेनाश्रयः प्रतीयते इति भवति सामानाधिकरण्यम् ।

10 प्रकर्षप्रत्ययान्तस्य गुणक्रियामात्रे कदाचिदपि वृत्त्यदर्शनात् केवलं ङीप्प्रतिसमाधानाय प्रक्रियायां व्यतिरेकार्थत्वं तरबादेरुपेयते । स्वार्थिका एव त्विमेऽतिशयद्योतनात् । अत एवातिशयविशिष्टस्य द्रव्यस्यातिशयप्रत्ययान्तेनोपादानादाश्रयतो[1] लिङ्गवचनानि भवन्ति ॥ १६३ ॥

ननु च शुक्लशब्देनात्र गुणोपसर्जनं द्रव्यमुच्यते । तरबन्तेनाप्यतिशयविशिष्टं

15 तदेव । तथा चाश्रितमात्रस्य केनचिदनभिधानात् कस्याश्रितस्याश्रयलिङ्गवचने स्यातामित्याशङ्क्याह ।

**रूपाभेदाच्च[1] तद् द्रव्यमाकाङ्क्षावत् प्रतीयते ।**
**विशेषैर्भिन्नरूपैस्तदाश्रयैरिव युज्यते ॥ १६४ ॥**

इह शुक्लशब्देन गुणोपसर्जनं द्रव्यमात्रमुच्यते । तदेवातिशयविशिष्टं तरबन्तेनेति

20 विशेषेषु तस्मात् पटादिषु न प्रति[2]पत्तिः, साधारण्यात् सर्वविशेषेषु द्रव्यमात्रस्य । तथा च तत् पटादीन् विशेषान्[3]पेक्षमाणं प्रतीयत इति ते तस्यापेक्ष्यमाणा[4] विशेषा विलक्षणा बहिरङ्गा पश्चात् संबध्यमानत्वादाश्रयत्वेन व्यवह्रियन्ते । तच्च तदाश्रितत्वेन ॥ १६४ ॥

ततश्च ।

**भिन्नरूपेषु यल्लिङ्गं विशेषेषु व्यवस्थितम् ।**
**संख्या च ताभ्यां [1]द्रव्यात्मा सोऽभिन्नो व्यपदिश्यते ॥ १६५ ॥** 25

163. 1. E[3] यगतलिङ्ग
164. 1. E[3] रूपाभावाच्च. 2. E[3] प्रतीति. 3. P °षानुपेक्षमाणं. 4 E[3] °माण-विशेषणा, A om. विशेष.
165. 1. I भिन्नात्मा.

स निर्विशेषोऽर्थात्मा गुणवचनशब्देनोच्यत इति तस्य संबध्यमानविशेषगतलिङ्ग-संख्या[2]तिदेशः सूत्रेण प्रतिपाद्यत[3] इति ताभ्यामाश्रयलिङ्गसंख्याभ्यामुपलक्षितः[4] प्रतिपाद्यते। एवं गुणपक्षे तस्य स्वाश्रयवृत्तित्वात् तद्गतमेव वचनमुपपद्यते। क्रियापक्षे तु तस्या यश्चैवातिशेते यश्चातिशय्यते उभौ तावाश्रयौ भवत इत्येवमपि द्विवचनं भवतीति चोदितं भाष्ये। अत्रोत्तरमभिहितम्

'शेतिरकर्मकः' ( M. Bhā. II, p 415, 1. 4 )

इति अत्र पर्यनुयोगः।

'अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति।'

( M. Bhā. II. p. 415. 1. 4-5. )

इति। सिद्धान्तवादिना तु येनाभिप्रायेणाकर्मक इत्युक्तं तमाविष्करोति

'कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति, कर्तृस्थभावकः शेतिः' ( Ibid. 1. 5–6. )

इति किल समवायिकारणमस्य कर्म नास्तीत्येवमकर्मकोऽभिहितः ॥ १६५ ॥

तदेतद् व्याचष्टे

**आश्रयः समवायी च निमित्तं लिङ्गसंख्ययोः।**
**कर्तृस्थभावकः शेति[1]रतो भाष्य उदाहृतः ॥ १६६ ॥**

क्रिया यत्र समवैति स तस्या आश्रयः स चैक एवेत्येकवचनं भवति अभिभवनं ह्यत्र शेत्यर्थः कर्तरि समवैति, न कर्मण्यभिभाव्ये। यत् किञ्चित् कर्म-निमित्ततयाभिहितं तत् कर्मण्यपदिष्टमिति द्विवचनमपि कर्मापदिष्टो विधि[2]र्भाष्ये उक्तः ॥ १६६ ॥

कर्मैकत्वापेक्षणे हि कर्तुरेकत्वेन द्वित्वस्यात्र जननं स्यात्। यदि कर्माप्यसमवायि गृह्येतेत्याह।

**निमित्तमाश्रयत्वेन गृह्यते यदि साधनम्।**
**कर्मापदिष्टयोः प्राप्तिस्तत्र स्याल्लिङ्गसंख्ययोः ॥ १६७ ॥**

"गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति"

( M. Bha. II. p. 200, l. 2. )

2. A संख्ये सू°. 3. A प्रतिपाद्येते. 4. I °लक्षितं.

166. 1. E[3] °तिरेको. 2. P om. विधिः.



इत्याश्रयशब्देन यदि निमित्तमात्रमु[1]च्यते तदा क्रियाया आत्मलाभे द्वयमपेक्ष्यते कर्तृकर्मरूपमत्र साधनमिति स्यात् कर्मापेक्षयापि तद्गतं लिङ्गम्। तदपेक्ष्य[2] द्वित्वोपजननाच्च द्विवचनम्। अभिभवो ह्यभिभाव्यमपेक्षते। तत्र[3] क[4]र्तृकर्मस्थत्वेन च क्रियायाः प्रसिद्धत्वान्न करणाद्यपेक्षया बहुवचनप्रसङ्गश्चोदितः। तदेवमतिशायनभाष्यं लिङ्गवचनातिदेशविचारप्रसङ्गेन व्याख्यातम् ॥ १६७ ॥

इदानीं तेनैव प्रातिलोम्यक्रमेण स्त्रीसूत्रवार्तिकभाष्यं लिङ्गवचनातिदेशविचार-प्रसङ्गेन व्याख्यातुमाह।

**शास्त्रे निमित्तभावेन समुदायादपोद्धृतः।**
**स्त्र्यर्थस्तस्येच्छया योगः प्रकृत्या प्रत्ययेन वा ॥ १६८ ॥**

स्थितलक्षणो लौकिकोऽर्थः स्त्रीत्वविशिष्टद्रव्यस्वभावो निरंशात् पदात् प्रतीयते। तस्य तु पदस्य प्रकृतिप्रत्ययपरिकल्पनयान्वाख्याने तयोः प्रकृतिप्रत्यययोरवयवयोरनुशासनाङ्गत्वेन प्रकृत्य[1]र्थप्रत्ययार्थतया निरंशोऽप्यसावर्थो विभज्यते। तत्र समित्, दृषदित्यादौ प्रातिपदिकमात्रेणापि स्त्रीत्वप्रतिपादनं दृष्टम्, गौरी किशोरीत्यादौ प्रत्ययसहितेन, इत्यन्वयव्यतिरेकयोर्नियमाभावादन्वाख्यातुरिच्छया प्रयोगानुरोधिन्या प्रकृतिप्रत्ययार्थतया तद्विमर्शः ॥ १६८ ॥

तथा हि।

**स्त्रीशब्दो गुणशब्दत्वात् तुल्यधर्मा सितादिभिः।**
**गुणमात्रे प्रयुज्येत संस्त्यानवति वाश्रये ॥ १६९ ॥**

संस्त्यानं रू[1]पादीनां संहननं गुणः तत्र वा स्त्रीशब्दो वर्तते तद्वति वा गुणिनि इति शुक्लादिशब्दैस्तुल्यः। तेऽपि[2] हि पटस्य शुक्लः शुक्लः पट इत्यादौ गुणमात्रे गुणिनि च दृष्टप्रयोगाः[3]। एवञ्च स्त्रियामिति निर्देशे यदा गुणमात्रवृत्तिः स्त्रीशब्दस्तदा प्रातिपदिकात् स्त्रीत्वे गुणे वर्तमानात् प्रत्यय इति प्रकृत्यर्थविशेषणपक्षो भवति। अभिधेये स्त्रीत्वे टाबादय इति तु प्रत्ययार्थपक्षो जायते। यदा तु तद्वति वृत्तिः तदा संस्त्यानवति द्रव्ये वर्तमानात् प्राति[4]पदिकात् स्वार्थे टाबादय इति प्रकृत्यर्थपक्षो भवति। अत्र तु पक्षे यथा शुक्लादयो गुणं निमित्तीकृत्य तद्वति वर्तन्ते नैवं किञ्चित् प्रातिपदिकमस्ति यस्य

167. 1. E[3]P °मुच्येत. 2. AE[3] तदपेक्षद्वि°. 3. E[3] om. तत्र. 4. A कर्मस्थत्वेन. E[3] कर्तृकर्मत्वेन.

168. 1. AE[3] °त्यर्थः प्रत्य°.

169. 1. A रूप्यादीनां. 2. AE[3] तुल्यत्वेऽपि हि। 3. A °योगा. 4. E[3] om. प्रतिपदिकात.

द्रव्ये वृत्तौ स्त्रीत्वं निमित्तम् । स्त्रीशब्द एव हि तथा । तत एव तु विधौ सर्वप्रकृति साधारण्येन स्त्रियामित्यपार्थको निर्देशः स्यात् । अतः[5] स्त्रियां स्त्रीशब्दप्रत्यायितेऽर्थे यत् प्रातिपदिकं वर्तते इति स्त्रीशब्देन प्रातिपदिकार्थ उप[6]लक्ष्येत ॥ १६९ ॥

ततश्च कुमारः[1] स्त्रीति स्त्रीशब्दसमानाधिकरणेऽर्थे वर्तमानात् प्रातिपदिकादित्ययं
5 पक्षो जायते । स चानिष्ट इत्युक्तं—

"स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः", "षट्संज्ञकेभ्यश्च प्रतिषेधः ।" ( Vā. 3, 4; M. Bhā. II. p. 199, l. 7, 13. )

इति । तदेतद् व्याचष्टे ।

**स्त्र्यर्थः संस्त्यानवद् द्रव्यं प्रकृत्यर्थश्च यद्यसौ ।**
10 **द्रव्योपलक्षणार्थत्वं संस्त्यानस्य तथा सति ॥ १७० ॥**

संस्त्यानेन निमित्तभूतेनावच्छिन्नं संस्त्यानवत् । तथा सति[2] इति संस्त्याननिमित्तस्यार्थस्य स्त्रीशब्देन निर्देशे सति । द्रव्यस्य शब्दान्तरोपादनस्य संस्त्यानमुपलक्षणं भवेत् । तन्निमित्तेऽर्थे कस्यचिदप्यवृत्तेरित्यभिप्रायः ॥ १७० ॥

एवं सति को दोष इत्याह ।

15 **संस्त्यानेन क्वचिद् द्रव्यं दृष्टं यदुपलक्षि[1]तम् ।**
**अनङ्गीकृतसंस्त्यानात् तद्वृत्तेः प्रत्ययो भवेत् ॥ १७१ ॥**

अनङ्गीकृतमनुपात्तं वाच्यत्वेन संस्त्यानं स्त्रीत्वं येन तद्वृत्तेः स्त्रीशब्दसन्निधापितेऽर्थे वर्तमानात् प्रातिपदिकात् प्रत्ययः प्रसज्येत । बहिरङ्गस्यैव पदान्तरोपलक्षितार्थस्यान्वाख्याने निमित्तत्वेनोपलक्षणात् ॥ १७१ ॥

20 अत्रोदाहरणमाह ।

**भूतादयः षडाख्याश्च संस्त्यानेनोपलक्षिते ।**
**ब्राह्मण्यादौ यदा वृत्तास्तेभ्यः स्युः प्रत्ययास्तदा ॥ १७२ ॥**

यदा कुमारः[1] स्त्रीति स्त्रीशब्दप्रत्यायितेऽर्थे कुमारशब्दो वृत्तः स्त्रीप्रत्ययमस्मिन् पक्षे प्रतिपद्यते । तथा भूतमियं कारणमियमापन्नमियं ब्राह्मणीत्यत्र भूतादिशब्देभ्यो
25 ब्राह्मणीशब्दोपलक्षितस्त्रीत्वेऽर्थे वर्तमानेभ्यष्टाप् स्यात् । तथा पञ्च षट् सप्त नव दश ब्राह्मण्य इति पञ्चादिभ्यः स्त्रीप्रत्ययप्रसङ्गे

'न षट्स्वस्रादिभ्यः' ( P. 4. 1. 10 )

5. AE[3] अत एव हि स्त्रियां. 6. AE[3] उपलक्ष्यते

170. 1. AE[3] कुमार स्त्री. 2. A om. इति—°न्तरोपादनस्य.

171. P उपलक्षिते.

172. 1. AE[3] कुमारस्त्रीति.



इति प्रतिषेधो वक्तव्यः स्यात् । प्रकृत्यर्थविशेषणपक्षे स्त्रीत्ववचनाट्टाबादिरित्यनङ्गीकृतसंस्त्यानान्न भवतीति स्त्रीसमानाधिकरणपक्ष एवायं दोषः ॥ १७२ ॥

तथा हि

**तद्वन्तो हि प्रधानत्वात् प्रत्ययानां प्रयोजकाः ।**
**सामानाधिकरण्येऽपि तस्माट्टाबादिसंभवः ॥ १७३ ॥** 5

अत्र पक्षे संस्त्यानाभिधानं प्रातिपदिकेन नाश्रीयते प्रत्ययोत्पत्तौ । अपि तु संस्त्यानवन्तः स्त्रीशब्दोपलक्षिता अर्थाः प्रधानानि प्रत्ययानां प्रवर्तका इत्युपसर्जनत्वात् संस्त्यानस्यान्यस्य पदान्तरेण बाह्येन समानाधिकरणत्वेऽपि तथाभूतस्य संस्त्यानस्य प्रतीतेष्टाबादयो भवेयुरेव । न ह्येतदत्र शक्यते वक्तुम्- कथं पदान्तरगम्योऽर्थः शब्दसंस्कारे निमित्तमिति । तथाभूतस्यैव वचनेनाश्रयणात् । एवं हि स्त्रीसमानाधिकरणपक्षं दूषयित्वा 10

"सिद्धं तु [1]स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः"

(Vā 5; M. Bhā. II, p. 199, l. 18.)

इति प्रकृत्यर्थविशेषणपक्षोऽभिहितः ॥ १७३ ॥

एतदुत्थानबीजमाह

**गुणमात्राभिधायित्वं स्त्रीशब्दे वर्ण्यते यदा ।** 15
**प्रकृत्यर्थश्च संस्त्यानं स्वार्थिकाः प्रत्ययास्तदा ॥ १७४ ॥**

संस्त्यानमात्रं यदा स्त्रीशब्दवाच्यं तच्च प्रातिपदिकविशेषणमिति तदा स्त्रीत्वे वर्तमानात् प्रातिपदिकाट्टाबादय इत्यर्थ[1]स्य तेषामन्यस्यानिर्देशात् स्वार्थिकत्वं भवति । यदा तु स्त्रीत्वेऽभिधेये इत्यर्थस्तदा प्रत्ययार्थविशेषणपक्षो जायते ॥ १७४ ॥

ननु च स्त्रीत्वमात्रे कस्यचित् प्रातिपदिकस्य वृत्त्यसम्भवात् कथं प्रकृत्यर्थविशेषणपक्षो भवतीत्याह । 20

**संस्त्याने केवले वृत्तिः प्रकृतीनां न विद्यते ।**
**[1]तदाविष्टे ततो द्रव्ये गृह्यन्ते समवस्थिताः ॥ १७५ ॥**

लौकिकोऽर्थः स्थितलक्षणोऽन्वाख्यानाङ्गमुपादीयमानो यथासम्भवमसौ गृह्यत इति स्त्रियामित्युक्तेऽपि स्त्रीत्वमात्रे प्रातिपदिकस्य वृत्त्यदर्शनात् सामर्थ्यात् तद्विशिष्टार्थाभिधायिनः प्रातिपदिकाद् विधिर्विज्ञायते । तथा च तेन स्त्रीत्वेनाविष्टे सम्भिन्ने द्रव्ये वर्तमानाः प्रत्ययमुत्पादयन्ति[2] ॥ १७५ ॥ 25

173. 1. AE[3] स्त्रियां.

174. 1. A अर्थ; स्यात्.

175. 1. I यदावि°. 2. AE[2] °यन्तीति पूर्वदोषा°.

इति पूर्वदोषानवतार इत्याह ।

**उपकारि च संस्त्यानं येषु शब्देष्वपेक्षितम् ।**
**तेभ्यष्टावादयस्तच्च भूतादिष्वविवक्षितम्' ॥ १७६ ॥**

वाच्यत्वेनोपयोगि **येषु शब्देषु तेभ्यष्टावादयः** इत्युपलक्षणभूतं येषु संस्त्यानं
5 तेभ्यो भूतादिभ्यः प्रत्ययाभाव इत्यर्थः । तदुक्तं भाष्ये–

" भूतमियं ब्राह्मणी " ( M. Bhā. II. p. 199, l. 8. )

इति ।

" नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि पौतन्यम्' । " ( Ibid. l. 10. )

इति । स्त्रीत्वे वाच्ये विवक्षिते भवत्येव प्रत्ययः भूता ब्राह्मणीति । सत्यवादिनी अतीता
10 वेत्यर्थो न पौतन्यम् । तथा

" कारणमियं ब्राह्मणी " ( Ibid, l. 10-11. )

इति प्राधान्यं विवक्षितम् ।

" आवपनमियमुष्ट्रिका " ( Ibid l. 11-12. )

इति सम्भवनम् । आधेयप्रमाणत्वादाधारस्य प्रमाणानतिरेको विवक्षितः । पञ्चादीनामपि
15 भेदगणनात्मिका संख्या वाच्या न स्त्रीत्वमिति तेभ्यः स्त्रीप्रत्ययाप्रसङ्गात् ततः प्रतिषेधः
प्रत्याख्यातः । एवं निर्दोषः प्रकृत्यर्थविशेषणपक्षोऽवस्थापितः ॥ १७६ ॥

तृतीयोऽपि पक्षोऽभिहितः

" अथवा पुनरस्तु स्त्रियामभिधेयायाम् " ( Ibid l. 22 )

इति । प्रत्ययार्थत्वं स्त्रीत्वस्यात्र पक्षे संभावनाबीजमुपन्यस्य दोषमभिहितं व्याचष्टे ।

20 **संस्त्यानं प्रत्ययस्यार्थः शुद्धमाश्रीयते यदा ।**
**तदा द्विवचनानेकप्रत्ययत्वं न सिद्ध्यति ॥ १७७ ॥**

**शुद्धं** केवलं द्रव्यविशेषणभावमनापन्नं **यदा संस्त्यानं** स्त्रियामिति निर्दिष्टं
प्रत्ययार्थत्वेनाश्रीयते तदा तस्यैकत्वात् कुमार्यौ कुमार्य इति द्विवचनबहुवचने न
स्याताम् । एकस्य च संस्त्यानस्य प्रत्यायने स्त्रीप्रत्ययो भवन्नेक एव स्यादिति गार्ग्यायणी
25 कारीषगन्ध्या काण्ठितरेत्यादावनेकः स्त्रीप्रत्ययो न स्यात् । तदुक्तं वार्त्तिके–

' स्त्रियामिति स्त्र्यर्थाभिधान इति चेद् द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः । '

( Vā. 1. M. Bhā. II p. 198, l. 22. )

इति ॥ १७७ ॥

---

176. 1. I 'क्षितः E[3] पौन्यमिति.



अत्र

' तिस्रो जातय एवैताः सर्वत्र समवस्थिताः । ' ( Linga 4 )

इति दर्शने स्त्रीत्वजातिरत्र निर्दिष्टा प्रत्ययार्थत्वेन । तस्याश्च व्यक्तिभेदेन गावौ गाव
इत्यादिवत् वचनभेदो योक्ष्यत इत्याशङ्क्याह ।

5 **जातिश्चेत् स्त्रीत्वमेवासौ भेदोऽन्यत्राविवक्षितः ।**
**तस्माद्भिन्नैरपि द्रव्यैस्तदेकं सद् विशिष्यते ॥ १७८ ॥**

स्त्रियामिति प्रत्ययार्थत्वेन जातिनिर्देशे ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इति
तस्या एव प्राधान्येन विवक्षितत्वादन्यत्र व्यक्तौ यो द्वित्वबहुत्वाख्यो भेदो विशेषः स
नात्र प्रतिपाद्यत्वेन विवक्षितः । [1]अतस्तत् स्त्रीत्वमेकं सद् भिन्नैर्बहुभिः प्रकृतिवाच्यैरा-
10 श्रयभूतैर्द्रव्यैः संख्याभेदवद्भिरवच्छिद्यत इति प्रधानभूतप्रत्ययवाच्यस्त्रीत्वै[2]कत्वाश्रयमेक-
वचनमेव न्याय्यम् । गावौ गाव इत्यादौ तु जात्यावेशेन व्यक्तीनामभिधानाद् युक्तो
वचनभेदः ॥ १७८ ॥

अथ गुणावस्था लिङ्गमित्यस्मिन् दर्शने अवस्थानां भेदाद् वचनभेदो भविष्यती-
त्यत आह ।

15 **मात्राणां हि तिरोभावे परिमाणं न विद्यते ।**
**कुमार्य इति तेन स्यात् कुमार्यो भेदसम्भवात् ॥ १७९ ॥**

**मात्राणां** सत्त्वादिगुणमयानां रूपरसादीनां **तिरोभावे** प्रतिलयेऽपचयेऽत्र
संस्त्यानलक्षणे स्त्रीत्वे विवक्षितेऽवस्थाभेदाश्रयेण वचनभेदे कथ्यमानेऽवस्थाभेदानामेक-
त्वापीयस्त्वानवधारणात् सदैव **कुमार्य** इति बहुवचनान्त एव प्रयोगः स्यात् । तदर्थस्य
20 संस्त्यानस्य बहुत्वसम्भवात् । [1]'चलं हि गुणवृत्तमिति परिणामस्य क्षणिकत्वादवस्थाभेदः
सदातनः । अवस्थाभेदानादरेण प्रत्ययानुवृत्तिकार्यमेकं चेत् स्त्रीत्वं तदा जातिपक्षादस्या[2]-
भेद इति नियोगत एकवचनं स्यात् । अत एव चात्रापि जातेरेषणीयत्वात् फलत
एकपक्षीभावं मन्यमानः पूर्वोक्तार्थोपपादनहेतुद्योतनं[3] हि-शब्दं पठति, न समुच्चयार्थं
चकारम् । यथा चात्र पक्षे द्विवचनबहुवचनानेकप्रत्ययानुत्पत्तिदोषः तथा द्रव्येण
25 सामानाधिकरण्याभावोऽपि । तथा चास्याः कुमारीति स्यात् । संस्त्यानस्य च धर्म-
मात्रत्वात् क्रियायोगो न कल्पते, अलङ्क्रियतां कुमारीति ॥ १७९ ॥

तदत्र प्रतिसमाधानमुक्तं वार्तिककृता—

" गु[1]णस्य चाश्रयतो लिङ्गवचनभावात् "

( Vā. 6. M. Bhā. II. p. 200, l. 1. )

---

178. 1. AE[3] यतः 2. A °स्त्रीत्व एकत्वा°.
179. 1. A एवं हि गु°. 2. A °स्या भेद. 3. °द्योतकं.
180. 1. M. Bhā. has गुणवचनस्य.

इति । तदेतद् व्याख्यातुमुपक्रमते ।

जातिसंख्यासमाहारैर्यथैव सहचारिणि ।
द्रव्ये क्रियाः प्रवर्तन्त एकात्मत्वेऽप्यपेक्षिते ॥ १८० ॥
मूर्तिभ्यो मूर्तिधर्माणां तथा भेदस्य दर्शनात् ।
5 सामानाधिकरण्यं च क्रियायोगश्च कल्पते ॥ १८१ ॥

गौर्दुह्यताम्, ब्राह्मणशतं भोज्यताम्, पञ्चपूली समानीयतामित्यादौ जातिसंख्यासमाहारैः शब्दोपादानात् करणभूतैः स्वात्मन्यसंभवादविनाभाविनि द्रव्ये क्रियाः क्रियन्ते, जातितद्वतोः समवायाद् भेदस्य प्रच्छादनेऽभेदे निरूपिते धर्मधर्मिणोरपि तथैव विवेकानवसायात् तत्त्वतो भेदेऽपि एकात्मत्वे बुद्ध्या निरूपिते सत्येव[4] मूर्तिभ्यो
10 वस्तुभ्यः तद्धर्माणां संस्त्यानादीनामभेदस्य द्रव्यादव्यतिरेकस्य प्रतिभासनात् सामानाधिकरण्यं द्रव्येण क्रियायोगश्च कल्पते । स्वभावाद्धि प्रत्ययेन द्रव्याद् व्यतिरेकेण स्त्रीत्वं न प्रत्याय्यते । प्रक्रियायां [5]तु प्रत्ययार्थपक्षापोद्धारः ।

"सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः"

(M. Bhā. II. p. 198. l. 5.)

15 इति भाष्ये मूर्तिशब्देन वस्तुमात्रस्याभिधानादिहापि मूर्तिशब्देन वस्तुमात्रं लक्ष्यते । दिगादीनाममूर्तानामपि स्त्रीत्वाख्यस्य धर्मस्य सम्भवात् ॥ १८०–१८१ ॥

केचिदाहुः—'लुप्तमत्वर्थीयाः कुमार्यादयो द्रव्यवचनैः समानाधिकरणा भवन्ति' इति । तन्मतमपाकरोति ।

सामानाधिकरण्ये तु मतुब्लोपादपेक्षिते ।
20 लुक् तद्धितलुकीति स्याल्लुक् तत्राप्युपलक्षणम् ॥ १८२ ॥

संस्त्यानलक्षणधर्ममात्रवचनः स्त्रीप्रत्ययान्त इति गुणवचनत्वान्मतुपो लुका[1] शुक्लादिवद्द्रव्यसामानाधिकरण्येऽङ्गीक्रियमाणे

'लुक् तद्धितलुकि' (P. 1. 2. 49.)

इति स्त्रीप्रत्ययस्य लुक्प्रसङ्गः । अथ सर्वदा द्रव्यस्यैव स्त्रीप्रत्ययान्तैः प्रत्यायनात् स्त्री-
25 प्रत्ययस्य विधानसामर्थ्यात् लुक् प्रतिविधीयते । एवमपि कुत एतत् स्त्रीप्रत्ययस्यालुग् भविष्यति, न तु मतुप एव । एवं हि स्त्रीप्रत्ययस्य लुग् नैव प्राप्नोति । तस्माद्

2. AE[8] व्यपेक्षते. 3. A तथाऽभेदस्य. 4. IP. इति एवं. 5. E[3] प्रक्रियायास्तु.
182. 1. E[3] लोपे.



विनापि मतुपं स्वभावादेव द्रव्यस्य स्त्रीत्वाभेदेन प्रत्यायनम् । तथा च यत्रापि मतुपो लुगारब्धः शुक्लादौ तत्रापि स्वार्थविच्छिन्नप्रत्ययार्थप्रत्यायनशक्तिं प्रकृतेरेव ज्ञापयितुमित्युपलक्षणं तत्र लुक् । असति तु तथार्याभिधाने लुकापि किं कृत्यम् । एवं प्रत्ययार्थपक्षे गुणवचनत्वादभेदोपचारादाश्रयेण सह तत्सामानाधिकरण्यं वचनभेदश्चोपपादितः ।
5 अनेकश्च प्रत्ययो भवति स्वभावाद् द्रव्योपसर्जनस्य स्त्रीत्वस्य कचिदनेकप्रत्ययेन प्रतिपादनात् ॥ १८२ ॥

प्रत्ययार्थपक्ष एव सामानाधिकरण्यमपरेण प्रकारेण समर्थयितुमाह ।

केषांचित्त्यक्तभेदेषु द्रव्येष्वेव विधीयते ।
संस्त्यानवस्तु टाबादिरभेदेन समन्वयात् ॥ १८३ ॥

10 संस्त्यानवत्सु द्रव्येषु

'स्त्रियाम्' (P. 4. 1. 3.)

इति स्त्रीशब्दस्य तद्वति वृत्तिमाश्रित्य प्रत्ययार्थपक्षेऽपि टाबादिविधीयते । स्त्रीप्रत्ययान्ताद्धि नियोगतो द्रव्यं प्रतीयत इति तदेव प्रत्ययवाच्यं न्याय्यं कल्पयितुम् ।
15 यद्येवमेकं प्रकृत्यर्थभूतं द्रव्यमपरं प्रत्ययार्थभूतमिति द्रव्यद्वयप्रतीतिप्रसङ्गः । न च भेदेन द्रव्यद्वयं प्रतीयते, प्रकृतिप्रत्ययार्थयोश्च द्वयोः परस्परमनभिसंबन्धप्रसङ्ग इत्याशंक्योक्तं त्यक्तभेदेषु इति । यस्माद्[1]विद्यमानविशेषेणार्थेन विरोधाद् भवति प्रकृतिवाच्यस्य विशेषस्याभिसंबन्धोऽभेदेन, सर्वत्र स्त्रीत्येवमाकारसंवित्निबन्धनेन सामान्येनावगमात् । तस्मात् प्रकृतिप्रत्ययवाच्यतया सामान्यविशेषकल्पनया द्रव्यभेद[2]: । प्रकृतिवाच्यं हि
20 विशिष्टद्रव्यं प्रत्ययवाच्यं तु द्रव्यसामान्यम् । तदेव च प्रकृत्यर्थावच्छिन्नं विशेषमासादयति । तथाहि प्रकृतिवाच्यानां द्रव्यविशेषाणां स्त्रीत्येवमभेदोऽनुगतः प्रतीयत इति प्रातीतिकोऽयं भेदः प्रकृतिप्रत्ययार्थयोः, न तु परस्परासंबद्धौ द्वौ द्रव्यात्मानौ ॥१८३ ॥

तथा हि

25 सामान्यभूतो द्रव्यात्मा परिच्छिन्नपरिग्रहः ।
क्रियाभिर्युज्यते भेदैर्भागशश्चावतिष्ठते ॥ १८४ ॥

प्रकृतिवाच्येन द्रव्यविशेषेणावच्छेदाद् बुद्ध्या परिकल्पितः प्रत्ययवाच्यो द्रव्यात्मा सामान्यमिव, न तु सामान्यमेव । एकपदनिबन्धनेन हि विशेषेणोपरागात् सामान्यात्मनि

183. 1. A यस्य वि°. 2. A द्रव्यभेदे प्र°.

द्रव्यम[1]त्रावतिष्ठते। अपि तु परिच्छिन्नः परिमितरूपः परिगृह्यमाण आलम्बनीयोऽस्येति **परिच्छिन्नपरिग्रहः**। एवं च कृत्वा क्रियायोगोऽस्य न विरुद्धः। तैश्च प्रकृतिवाच्यैर्भेदैर्विशेषैस्तस्य समूहरूपस्य सर्वत्रानुगतत्वात् सामान्यस्य भागैरिवावयवैरिवावच्छेदात् तद्रूपतयावस्थानमिति सामानधिकरण्यमपि युज्यते। अयमत्राशयः। प्रकृतिप्रत्ययसमुदायाद् विशिष्टं द्रव्यं प्रतीयत इति तत्रापोद्धारे प्रक्रियायां कल्पनया सामान्यविशेषभावेन भेदमाश्रित्य प्रकृत्यर्थप्रत्ययार्थत्वमवस्थाप्यते। तदेव द्रव्यं प्रकृतेरन्यस्माद् भेदेनावधार्यमाणं विशेषष्टाबादेः स्त्रीत्वनुयायिना स्वभावेनानुगम्यमानं सामान्यमिति। लौकिके तु प्रयोगे विशेषपर्यवसानैव प्रतिपत्तिरिति सर्वमुपपद्यते॥ १८४॥

तदेवं प्रत्ययार्थपक्षे प्रकारद्वयेन स्वाश्रयतो वचनमुपपादितम्। एतदाक्षिपति।

**शुक्लादिष्वाश्रयद्रव्यं प्राधान्येनाभिधीयते।**
**स्त्रीत्वं तु प्रत्ययार्थत्वादभिधाविषयो यतः॥ १८५॥**

गुणोपसर्जनद्रव्यवचनाः शुक्लादयो युक्तं यदाश्रयगतलिङ्गसंख्यानुवर्तिनः, प्राधान्यादाश्रयस्य। **स्त्रीत्वं तु** प्रत्ययस्य टाबादेर्वाच्यं प्राधान्येन। प्रकृत्यर्थस्तु द्रव्यमत्र[1] गुणभूतमिति कथमत्र गुणध[2]र्मान् प्रधानं प्रतिपद्येत।

'विशेषणानां...' (P. I. 2. 52.)

इत्यपि सूत्रेण विशेष्यवद् विशेषणानां व्यक्तिवचने अतिदिश्येते न तु विशेषणवद् विशेष्याणाम्। **अभिधाविषय** इति सत्यपि वास्तवे द्रव्यस्य प्राधान्ये न शब्दास्तदनुरुध्यन्ते, अपि तु स्वसामर्थ्यानुरूपमेषामभिधानमित्यर्थः॥ १८५॥

एतत् परिहरति।

**सोऽयमित्यभिसंबन्धादाश्रयं प्रतिपद्यते।**
**स्त्रीत्वं स्वभावसिद्धो वा गुणभावविपर्ययः॥ १८६॥**

यद्यपि प्रक्रियायां स्त्रीत्वं प्रत्ययार्थ इति व्यवस्थाप्यते तथापि शब्दशक्तिस्वाभाव्याद् गुणभावस्येह विपर्ययो वैपरीत्यं [1]दृश्यते, स्त्रीत्वस्याप्राधान्यं द्रव्यस्य तु प्राधान्यमिति। न हि सर्वत्र प्रत्ययार्थः प्रधानम्। तद्यथा—साधने विधीयमानास्तिङो नाख्याते साधनं प्राधान्येनाचक्षते, अपि तु क्रियोपसर्जनम्। संख्यायां विधीयमानाश्च विभक्तयः संख्येयोपसर्जनं तामाचक्षते। दीव्यत्यादिषु च विधीयमानाष्ठगादयः क्रियावन्तमभिदधति प्राधान्येनेति सर्वत्र शब्दशक्तिरेवानुसरणीया। एवञ्चाश्रयस्यैव प्राधान्यात् तत्संख्यात्रोपपद्यते। यद्वा यद्यपि संस्त्यानमात्रमभिधेयं प्रत्ययस्य तथापि तेनोपचरिता[2]भेदाः प्रकृत्यर्थव्यक्तीः प्रत्ययान्तोऽभिधत्ते इति सिद्धं वचनम्। तदेवं सामानाधिकरण्ये त्रयः प्रकाराः। द्रव्यादनतिरिक्तस्य स्त्रीत्वस्य प्रत्यायनं तद्यथा

मूर्तिभ्यो मूर्तिधर्माणाम्....( Stanza 181. )

इत्युक्तम्। अभेदोपचारो द्रव्यस्य प्राधान्यमितीहोक्तम्॥ १८६॥

इदानीं संस्त्यानवद्द्रव्यसामान्याभिधानपक्षेऽप्यत्र प्रत्ययार्थभूतस्यापि सामान्यस्य वास्तव[1]गुणत्वसम्भवाद् गुणवचनादाश्रयतो लिङ्गवचनातिदेशं योजयितुमाह।

**साकाङ्क्षत्वाद् गुणत्वेन सामान्यं वोपदिश्यते।**
**व्यक्तीनामात्मधर्मोऽसावेकप्रख्यानिबन्धनः॥ १८७॥**

यदभेदेन संस्त्यानवद् द्रव्यं प्रत्ययवाच्यं सामान्यभूतमुक्तं तद् सूत्रे विशेषणशब्देन गुणपर्यायेणोक्तम्। यस्मात् प्रत्ययार्थत्वेन प्राधानमपि द्रव्यसामान्यं प्रकृत्यर्थगतद्रव्यविशेषापेक्षत्वात् गुणशब्देनार्हत्यभिधानं द्रव्याकांक्षस्यार्थस्य गुणत्वेन प्रसिद्धेः। न च विशेषेभ्यो विलक्षणं तत्, यस्माद् व्यक्तीनां द्रव्यविशेषाणामसौ गुणस्वभावतां प्राप्तः। **एकप्रख्यानिबन्धनो** हि व्यक्तीनां स्वभावः सामान्यं कथ्यते। व्यतिरेकदर्शनेऽपि समवायात् स्वरूपतिरोधानात् स्वभावताप्राप्तिरेव॥ १८७॥

ननु साकांक्षत्वाद् भवतु गुणत्वं द्रव्यसामान्यस्य बुद्ध्या परिकल्पितस्य, तत्त्वतस्तु संस्त्यानविशिष्टस्य द्रव्यस्यैकत्वादाश्रयाश्रयिभावः कथमित्याह।

**एवंभूता च सावस्था भागभेदपरिग्रहे।**
**कृते बुद्ध्यैव भेदानामाश्रयत्वेऽवकल्पिते॥ १८८॥**
**निष्कृष्टेष्वपि भेदेषु व्यक्तिरूपाश्रये ततः।**
**लिङ्गप्रत्यवमर्शेन लिङ्गसंख्ये प्रपद्यते॥ १८९॥**

**सा** सामान्यविशेषरूपाभ्यां शवलावस्था[1] **लिङ्गसंख्ये व्यक्तिरूपाश्रये** विशिष्टद्रव्याश्रये प्रतिपद्यत इति समन्वयः। अपोद्धारबुद्ध्या प्रकृतिप्रत्ययभागपरिकल्पने **कृते** तथैव समुदायवाच्यमर्थं प्रकृतिप्रत्यययोर्विभज्य। तथाहि—किञ्चिदस्य भेदरूपं प्रातिपदिकोपादानमपरं प्रत्ययवाच्यं संस्त्यानानुविद्धमंशप्रख्यं प्रकल्पितम्। भेदे च परिकल्पिते प्रकृतिवाच्यानां विशेषा[2]णामाश्रयत्वे समारोपिते तेषु पृथक्कृतेष्वपि स्वतन्त्रेष्वपि[3]

184. 1. AE$^{3}$ द्रव्यमात्रमव°.
185. 1. A द्रव्यमात्रगु°. 2. AE$^{3}$ गुणधर्मान्.
186. 1. E$^{3}$ om दृश्यते। स्त्रीत्वस्याप्राधान्यं. 2. AE$^{3}$ °तभेदाः
187. 1. IP वास्तव गुणत्व°.
188, 189. 1. E$^{3}$ °वस्थालिङ्ग° 2. P विशेषणाना°. 3. A सर्वतन्त्रेष्वपि, E$^{3}$ om, स्वतन्त्रेष्वपि.

निरूप्यमाणेषु विशेषेषु लिङ्गप्रत्यवमर्शेन स्त्रीत्येवं निरूपणेन स्त्रीत्ववद् आश्रितत्वादाश्रयगतलिङ्गसंख्याप्रतिलंभः । अन्यत्र लिङ्गसंख्ययोः साहचर्येण दृष्टत्वादिह लिङ्गग्रहणं, न त्वत्र स्त्रीत्ववतो लिङ्गान्तरस्य विरोधिनोऽतिदेशः संभवति । तदेवं द्विवचनानुपपत्तिः प्रतिविहिता । अनेकप्रत्ययानुपपत्तिस्त्वत्र न प्रतिविहिता । लिङ्गवचनविचारप्रस्तावेन हीदमिह कथ्यते इत्यत्राप्रस्तुतानेकप्रत्ययानुपपत्तिः । सुप्रतिविधाना चेयम्, क्वचित् किल स्वभावाद् द्रव्योपसर्जनस्य स्त्रीत्वस्यानेकेन प्रत्ययेनाभिव्यङ्ग्यत्वात् । न हि व्यंजकानां नियमः । एतामेव च शब्दशक्तिमनुसर्तुं ष्फस्य षित्त्वं ङीपर्थं कृतम् । ष्यङश्च ङित्करणं

यङश्चाप् ( P. 4. 1. 74. )

इत्यत्र सामान्यग्रहणार्थम् । भाष्ये त्वन्यथा परिहारोऽभिहितः ।

"भावस्य च भावयुक्तत्वात्" ( Vā. 8, M. Bhā. II. p. 208, l. 7. )

इति हि वार्त्तिकम् । गुणपरिणामरूपत्वात् स्त्रीत्व[4]स्यापि स्त्रीत्वेन योग उपपन्न इत्यर्थः । विस्तरव्याख्यात्र वार्त्तिकोन्मेषे । एतच्च शब्दशक्तिमनुसृत्य प्रत्ययार्थपक्षे संस्त्यानस्य प्राधान्यं प्रक्रियागतमाश्रित्योक्तम् । यथा तु शब्दशक्त्यनुसारेणेह द्रव्यप्राधान्यं विवक्षितं तथा अनेकेनापि व्यंजकेन व्यङ्ग्यप्रतीतिर्दृष्टेति यथासमर्थितमेव न्यायः । तथा ह्यभिधानभेदात् स्त्रीत्वस्य स्त्रीत्वयोग उच्यते । प्रातिपदिकेन द्रव्यरूपस्याभिधानात् प्रत्ययेन धर्मरूपस्येति प्रत्ययद्वयोपपत्तिः । यथा तदेव कर्मादि विभक्तिभिः शक्तिरूपं प्रत्याय्यते । प्रातिपदिकेन तु वस्तुभूतम् । अयं ह्येकस्या[5]र्थस्य शब्दभेदात् प्रतीतिभेद उपपन्नः ॥ १८८, १८९ ॥

[1]क्रमप्राप्त्या द्वन्द्वे लिङ्गवचनातिदेशस्योपयोगो विचार्यते । तत्र चार्थे द्वन्द्वविधानादलिङ्गसंख्यत्वे चोदिते

'स्वाभाविकत्वात्' ( cf. M. Bhā. I. p. 430, l. 11, 15. )

इति परिहारोऽभिहितः । स कथमुपपद्यते । यतश्चार्थस्य द्वन्द्वेनोपग्रहात् मा भूच्चस्य तत्र प्रयोगः । चशब्दवत्तु द्वन्द्वस्याप्यर्थोऽभिहित इति अलिङ्गसंख्यत्वं केन न स्यादित्याशङ्क्य क्रमेणैतदुपपादयितुमाह ।

**अन्तरेण चशब्दस्य प्रयोगं द्वन्द्वभाविनाम् ।**
**अविशिष्टार्थवृत्तित्वं रूपाभेदात् प्रतीयते ॥ १९० ॥**

4. A स्त्रीस्यत्रापि. 5. E³ P एकत्वादर्थ.

190. 1. AE³ प्रक्रमप्रा°.



धवखदिरादिशब्दा[2]द्वन्द्वं भावयन्ते प्राप्नुवन्ति द्वन्द्वो वा भावी येषां तेषां चशब्दयोगं विना अविशिष्टार्थवृत्तित्वमवगम्यते । समुच्चयाख्यविशेषा[3]नपेक्ष्य धवादिजातीयस्यार्थस्य चशब्देनाविशेषितरूपा अविशिष्टरूपा धवादयः शब्दा वाचका इति समुच्चयद्योतनाय वाक्ये चशब्दमपेक्षन्ते ॥ १९० ॥

यतः

**विकल्पवति वा वृत्तिर्निवर्त्ये च[1] समुच्चिते ।**
**तेषामज्ञातशक्तीनां द्योतकेन नियम्यते ॥ १९१ ॥**

असति चादिपदप्रयोगे समुच्चयादिविशिष्टेऽर्थे द्वन्द्वभाविनां पदानां वाक्यावस्थानां वाचकशक्तिर्नावधार्यते । सन्देहो हि स्याद् विकल्पादौ । ततश्च यथा विकल्प्यमानेऽर्थे[2] वाशब्देन पदानां वाचकशक्तिर्ज्ञाप्यते नञा च निवर्त्ये प्रतिषिध्यमाने तथा चशब्देन समुच्चीयमाने[3] । द्योतकेन इति च 'वदन् परपदनिष्ठस्य शब्दस्य वाचकत्वा[4]भावात् द्योतकलक्षणं ज्ञापयति । अकेवलपदप्रयोगो द्योतक इति निर्णीतं वाक्यकाण्डे ॥ १९१ ॥

एवं वाक्ये चशब्दप्रयोगः समर्थितः; समासे तु द्वन्द्वे नास्ति तस्य प्रयोग इत्याह ।

**वृत्तौ विशिष्टरूपत्वाच्चशब्दो विनिवर्तते ।**
**अर्थे भेदेऽपि सारूप्यात् तच्चार्थेनापदिश्यते ॥ १९२ ॥**

एकार्थीभावकृताद् वृत्तिवाक्ययोर्विशेषाद् वाक्यगतधर्मवैलक्षण्येन वृत्तिपदानाम[1]र्थाभिधानाद् अन्तरेणापि चशब्दं समुच्चयोपाधिकं विशिष्टार्थाभिधानं द्वन्द्वे स्वाभाविकं, न तु चार्थे द्वन्द्वव[2]चनात् । न ह्यर्था आदिश्यन्ते । सहविवक्षायां हि वृत्तावनुद्भूतभेदः प्रत्येकं पदैरन्योन्यापेक्षैः[3] समुदायोऽभिधीयत इति तत्र भेदस्य वि[4]गलनात् तदधिष्ठानः समुच्चयो न द्योत्यः । वाक्ये तु भेदप्राधान्याच्चशब्देन भेदाधिष्ठानः[5] समुच्चयो द्योत्यते । तदेवमत्यन्तार्थभेदेऽपि चार्थेन द्वन्द्वार्थो निर्दिश्यते क्रियायामितरेतरापेक्षासाम्यमात्रात् । अन्वाख्यानाय ह्यर्थो लोकसिद्ध एव सर्वतो व्यावृत्तस्वभावः कथंचित् सादृश्यलेशानुगमनेन शब्देषु निर्दिश्यते । सर्वतो व्यावृत्तस्य प्रतिशब्दमर्थस्यानन्त्यान्निर्देष्टुमशक्यत्वात् प्रक्रिया[6]गौरवप्रसङ्गाच्चेति—लाघवेनार्थनिर्देशो न्याय्यः ॥ १९२ ॥

2. AE³ शब्दात. 3. A °विशेषणानपे° E³ °विशेषापे°.

191. 1. P अथ समु°. 2 A °मानोऽर्थो 3. A °च्चीयमानयो° 4. A चपदं.

192. 1. A °पदाभिधाना°. 2. AE³ द्वन्द्वविधानात. 3. A °न्योन्यापेक्षः. 4 A निमज्जनात. 5. A °ष्ठानसमु°. 6. AE³ प्रक्रियायां गौ°.

तत्र च तद्धितार्थनिर्देशवन्निर्देशिकस्यार्थस्याप्राधान्यात् स्वभावसिद्ध एवार्थविशेषोऽनुगम्यते। यदि तु यथानिदर्शमर्थाः स्युस्तदा—

**चस्य चासत्त्वभूतोऽर्थः स एवाश्रीयते यदि ।**
**तद्धर्मत्वं ततो द्वन्द्वे चादिष्वर्थकृतं हि तत् ॥ १९३ ॥**

अलिङ्गमसंख्यमव्ययमर्थनिव[1]द्धाव्ययसंज्ञेति चार्थे द्वन्द्वविधानात् तस्य चार्थस्यैव धर्मो लिङ्गसंख्यारहितत्वं द्वन्द्वेऽप्यनुषज्येत। द्वन्द्वस्य चादिष्वपाठादव्ययसंज्ञा न प्राप्नोतीत्याशङ्कयोक्तं '**चादिष्वर्थकृतं हि तत्**' इति। अलिङ्गसंख्यत्वे चादीनामव्ययत्वं स्वभावसिद्धं पाठेनानूद्यते, न तु पाठ एव विधायकः उदाहरणार्थत्वाच्चस्येति चसमानार्थत्वे द्वन्द्वेऽप्यव्ययत्वं स्यादेव मा भूद् वाव्ययसंज्ञा पाठनिबन्ध[2]ना। अलिङ्गासंख्यत्वं त्वर्थाश्रयं केन निवार्येतेत्यर्थः[3]। अन्वर्थत्वाद् वाव्ययसंज्ञायाः सापि[4] भवेत् ॥ १९३ ॥

तस्मान्न वचनानुरोधी स्वार्थः शब्दानामित्यभिधानवैचित्र्यादर्थवैचित्र्यमुदाहरति।

**चार्थः शब्दे क्वचिद् भेदात् कथञ्चित् समवस्थितः ।**
**द्योतकाश्चादयस्तस्य वक्ता द्वन्द्वस्तु तद्वताम् ॥ १९४ ॥**

शब्दशक्तिभेदाद्यथा समुच्चयशब्दोऽयं लिङ्गसंख्यायुक्तं चार्थमाह तथा द्वन्द्व इति समुच्चयोपाधिकार्थान्तराभिधायकोऽसौ, पदान्तरोपादानादर्थनिष्ठास्तु द्योतकाश्चादय इति वाचकत्वद्योतकत्वकृत एवायं विशेषो व्यक्तिवचनाभ्यामयोगो योगश्च ॥ १९४ ॥

तथा हि।

**विकल्पाद्यभिधेयस्य चार्थस्यान्यपदार्थता ।**
**द्योतकत्वान्न कल्पेत तस्मात् सदुपलक्ष्यते ॥ १९५ ॥**

विकल्पः समुच्चयः प्रतिषेध इत्येवमादिभिः शब्दैरभिधीयमानस्यार्थस्यान्येन रूपेण लिंगसंख्यायोगिना पदप्रत्याय्यता वाप्रभृतिभिर्विकल्पादिशब्दानामर्थाभेदे वाशब्दादिव[1]द्योतकत्वान्न घटेत। अस्ति तु लिङ्गसंख्यायोगिनोऽर्थस्य विकल्पादिशब्दैरभिधानात् सा[2]अन्यपदार्थता इत्येकस्यैव वस्तुनः शब्दशक्तिभेदान्नानाकारस्य प्रकाशनमिति

193. 1. A °र्थनिबन्धनाव्य°. 2. P पाठनिबद्धा. 3. A °दयर्थमत्वं. 4. AE[3] सा हि भवेत्.

195. 1. P °ब्दादिद्योत°, 2. A सामान्यपदा°.



शब्दार्थोऽर्थ इति नये स्वाभाविक एवायमर्थभेद इति सन् तराभूतं वस्तु द्वन्द्वविषयत्वेन चशब्देन उपलक्ष्यते कुतश्चित् सामान्यात्। न त्वसौ तत्त्वतश्चशब्देनेव द्वन्द्वेन प्रत्याय्य इत्यर्थः। तदेतदुक्तं भाष्ये

'नेदं वाचनिकमलिङ्गताऽसंख्यता वा, किं तर्हि स्वाभाविकमेतत्।'
(M. Bhā. I. p. 430, l, 11.)

इति ॥ १९५ ॥

एतदेवाह।

**तत्र स्वाभाविकं लिङ्गं शब्दधर्मे[1]ऽव्यपेक्षिते ।**
**शब्दः कश्चित्तमेवार्थं कथञ्चित् प्रतिपद्यते ॥ १९६ ॥**

शब्दधर्मे शब्दस्वभावेऽभिसंहिते भाष्य एतदुक्तमित्यर्थः। तथाहि—वस्तुन ऐक्येऽपि शब्दभेदादर्थवैचित्र्यम्। तद्यथा कार्श्यं कृशिमा कृशतेति प्रकृतिप्रत्ययार्थयोः प्रकृतिरूपस्याभेदेऽपि प्रत्ययश्रुतिभेदनिबन्धनः स्थितिप्रसवसंस्त्यानभेदः। जलं आपो दारा भार्येति च शब्द[2]शक्तिभेदाल्लिङ्गवचनभेदः। तथा द्वै[3]धमित्यलिङ्गो[4]ऽसंख्यः स एव मतिद्वैधानीति[5] सलिङ्गसंख्योऽर्थः प्रतिपाद्यते। अत्र हि

'धमुञन्तात् स्वार्थे डदर्शनम्' (Vā. I on P. 5. 3. 45.)

इति प्रत्ययान्तरत्वे शब्दान्तरत्वम्। एवं द्वन्द्वोऽपि सलिङ्गसंख्यार्थाभिधायी ॥ १९६ ॥

स्यादेतत् – वक्तुरभिप्रायादर्थानां व्यवस्था, न शब्दधर्मत इत्याशङ्क्याह —

**शब्दादर्थाः प्रता[1]यन्ते स भेदानां विधायकः ।**
**अनुमानं विवक्षायाः शब्दादन्यन्न विद्यते ॥ १९७ ॥**

जातावेकवचनं शब्दात् इति। यथाभिप्रेतमर्थं प्रतिपादयितुं वक्ता योग्यान् शब्दानुदाहरतीति तेभ्यः शब्देभ्यो वक्तृविवक्षानुमानाद् व्यवहारे शब्दा एवार्थव्यवस्थापने प्रभवः। अक्षिनिकोचादीनामपि शब्देनैवानुमापकत्वं सङ्केतितत्वात्। तथाहि—शब्देभ्यो वस्त्वर्था एकस्वभावा अपि विस्तारं भजन्ते, तेभ्यो नानारूपाणां प्रकाशनात्। तथा च दारशब्दः स्त्रियं पुंस्त्वविशेषणामाचष्टे। भार्याशब्दः स्त्रीत्वविशिष्टाम्, अप्शब्दोऽवयवात्मकं तमेवार्थं बहुत्वावच्छिन्नमाह। उदकशब्दस्तु समूहरूपमेकमित्यादिशब्दधर्मोऽनुगन्तव्यः। अतश्च स शब्दः स्वशक्तिवशाद् भेदानां वाच्यविशेषाणां विधायको

196. 1. AE[3] °र्मेऽप्यपे°. 2 A शब्दभेदाल्लिङ्ग. E[3] शक्तिभेदा°. 3. E[3] तथाऽद्वैत° 4. A लिङ्गसंख्यः, E[3] I °लिङ्गसंख्यं. 5. AE[3] एवमितिति द्वेधा°.

197. 1. AE[3] प्रतीयन्ते.

निर्मीता भागभेदस्य वस्तुनि समारोपणमिवार्थस्य स्वभावात् तत्कृतं नानात्वमित्यर्थः ॥ १९७ ॥

तदेवं स्वाभाविको लिङ्गसंख्यायोगो द्वन्द्वे समर्थितः ।

'अथवाश्रयतो लिङ्गवचनानि भविष्यन्ति' ( M. Bha I, p. 430, l. 15.

5 इति पक्षान्तरं वाचनिकं भाष्य उक्तं विचारयितुमाह ।

**समुच्चितः स्याद् द्वन्द्वार्थो गुणभूतसमुच्चयः ।**
**समुच्चयो वापि भवेद् गुणभूतसमुच्चितः ॥ १९८ ॥**

समुच्चयोपाधिकाः समुच्चिताः वा अर्था द्वन्द्वेनोच्येरन्, समुच्चितोपसर्जनो वा समुच्चय इति द्वैतम् ॥ १९८ ॥

10 तत्र

**समुच्चितस्य प्राधान्ये लिङ्गसंख्ये स्वभावतः ।**
**समुच्चयस्य प्राधान्ये शास्त्रं स्यात् प्रतिपादकम् ॥ १९९ ॥**

समुच्चयोपसर्जनस्य सत्त्वभूतस्यार्थस्य द्वन्द्ववाच्यत्वे स्वाभाविके लिङ्गसंख्ये इत्युक्तम्। यदा तु वचनेनार्थनिर्देशे समुच्चयः प्राधान्येन द्रव्यवाच्यः तदा वचनेनैव

15 'विशेषणानाम्....' ( P. 1. 2, 52. )

इत्याश्रयतो लिङ्गवचने विधीयेते। धर्मरूपत्वात्समुच्चयस्याप्राप्तयोरिष्टयोर्लिङ्गसंख्ययोः शास्त्रं विधायकम्। तत्र समुच्चयस्य प्राधान्येऽप्याश्रितमात्रस्य विशेषणशब्देनाभिधानाद् युज्यतेऽतिदेशः ॥ १९९ ॥

समुच्चितप्राधान्येऽपि शास्त्रस्य प्राधान्यमेकीयमतेनाह ।

20 **समुच्चयवतोऽर्थस्य प्राधान्येऽप्यपरे विदुः ।**
**निमित्तानुविधायित्वादसिद्धिं लिङ्गसंख्ययोः ॥ २०० ॥**

निमित्तरूपेण निमित्तिनोऽवधार्यमाणस्य तदावेशाद्रूपतिरोधानमितीहापि समुच्चयाख्यनिमित्ताच्छादितस्य समुच्चितस्य स्वधर्मप्रतिपत्त्ययोग्यत्वात् तदीययोर्लिङ्गसंख्ययोरप्राप्तावतिदेश इति पक्षद्वयेऽपि शास्त्रमुपयोगि ॥ २०० ॥

25 एतदयुक्तमित्याह ।

**समुच्चयो निमित्तं चेत् स्यान्निमित्तानुवर्तनम् ।**
**अन्वयव्यतिरेकाभ्यां चार्थो द्वन्द्वनिबन्धनः २०१ ॥**

समुच्चयोपाधिरर्थो न द्वन्द्ववाच्यो येन निमित्तानुविधानं स्यात्। अपि तु योऽर्थ अन्वयव्यतिरेकाभ्याम् द्वन्द्वस्य वाच्य इत्यवधारितः स चार्थ इत्येवं द्वन्द्वस्याऩ्वाख्यानायानुभाष्यते। स च क्रियायां समकक्ष्याणामर्थानां समूह उद्भूतकारकशक्तिः। तस्य[1] च कथञ्चित् समुच्चितशब्देनाभिधानदर्शनाद् भ्रान्त्या समुच्चयो निमित्तत्वेनाध्यारोप्यते ॥ २०१ ॥



परमार्थस्त्वयमत्रेत्याह

5 **समुच्चितनिमित्तत्वे चार्थस्यापगमेऽपि वा ।**
**स्वभावसिद्धे द्वन्द्वस्य लिङ्गसंख्ये व्यवस्थिते ॥ २०२ ॥**

यदा समुच्चितो द्वन्द्वस्य निबन्धनं तदा प्रधानधर्मानुविधानाद् न्यायप्राप्ते तदीये लिङ्गसंख्ये। यद्वात्यन्तवैलक्षण्याच्चार्थ एवात्र समुच्चयो नास्ति यस्य द्रव्येण सह गुणप्रधानभावश्चिन्त्येत। सादृश्यलेशानुगममात्रेण तु शब्दानुशासने यथाकथञ्चिदर्थो निर्दिश्यते द्वन्द्वनिमित्तत्वेन चार्थ इति। सत्त्वभूत एव तु स्वभावतो द्वन्द्वार्थ इति समुच्चयस्यासत्त्वादेव 10 निमित्तभावो नास्ति ॥ २०२ ॥

अन्योन्यापेक्षा वर्तिपदार्था द्वन्द्ववाच्याः, स एव च समुच्चयः। तत् किमुच्यते चार्थस्यापगम इत्याशङ्क्य पूर्वोक्तमर्थभेदं स्मारयति।

**पदान्तरस्थस्यार्थस्य द्योतकत्वान्न युज्यते ।**
**निपातो लिङ्गसंख्याभ्यां द्वन्द्वस्त्वर्थस्य वाचकः ॥ २०३ ॥** 15

वस्त्वर्थस्याभेदेऽप्यभिधाव्यापारभेदाच्छब्दार्थो भिद्यत इति द्वन्द्वे सत्त्वभूतार्थाभिधानाच्चार्थस्य वाक्येऽसत्त्वभूतस्य दृष्टस्यापगमो वर्णित इत्यर्थः। वाचकद्योतकशक्तिविलसितं चैतत् प्रागेवोक्तम् ॥ २०३ ॥

पुनरपि निमित्तानुविधानदर्शनमुपालभते ।

**निमित्तानुविधाने च द्रव्यधर्मानपेक्षणात् ।** 20
**गुणप्रधानभावेन क्रियायोगो न कल्पते ॥ २०४ ॥**

निमित्तानुविधाने निमित्तरूपाच्छुरितस्य निमित्तिनो द्रव्यस्याभिधानात् तस्य धर्मः शक्तिर्बुद्ध्या नावधार्यत इति क्रियाभिः प्राधान्येन गुणत्वेन वास्य योगो न स्यात्। द्रव्यं हि साधनम्। तस्य चानवधारितस्वशक्तेः कथं क्रियाभिः संबन्धः। न च निमित्तस्य क्रियायोगोऽसत्त्वभूतत्वात्। तत्र गुणभावेन करणादिरूपतया क्रियासंबन्धः, प्रधानभावेन कर्मरूपतया, तस्य क्रियाभिरुत्पत्तिसंस्कारप्रतिपत्तिविषयस्य 25 समन्वयात् ॥ २०४ ॥

---

201. 1. A यस्य.
202. 1. AP एवार्थवनु°.
204. 1 AE[3] क्रियाभिः संबन्धः.

मा भूत् क्रियायोग इति चेदाह ।

**यस्य नास्ति क्रियायोगः स्वतन्त्रोऽसौ न विद्यते ।**
**अर्थो द्वन्द्वस्य तत्र स्यादुपादानमनर्थकम् ॥ २०५ ॥**

' क्रियानुषङ्गेण विना न पदार्थः प्रतीयते । '

इति **स्वतन्त्रः** स्वनिष्ठः क्रियाभिरसम्बध्यमानः पदार्थो नास्ति । ततश्च तस्मिन्नर्थे निमित्तानुरक्ते[1] क्रियायोगाभावाद् द्वन्द्वस्य वाचकत्वेन परिग्रहो निष्प्रयोजन इति नान्वाख्येयोऽसौ भवेदव्यवहार्यः । तस्मादन्वाख्यानादेवावसीयते निमित्तानुविधानमत्र ॥ २०५ ॥

न चापि सर्वत्र निमित्तानुविधानमित्याह ।

**समुच्चयवतोऽर्थस्य वाचको नानुवर्तते ।**
**निमित्तमपि चास्यार्थः स्वधर्मैर्युज्यते ततः ॥ २०६ ॥**

येऽप्येते समुच्चितादयः शब्दाः समुच्चयोपाधिकार्थाभिधायकत्वेन प्रसिद्धाः तेऽपि निमित्तं नानुरुध्यन्ते । प्रागेव तु द्वन्द्वः यत्र समुच्चयोपाधित्वे भ्रान्तिः । यत्र हि निमित्तरूपेण निमित्तिनि तिरोहितस्वरूपे प्रतिपत्तिः तत्र निमित्तानुविधानं यथा शुक्लादौ । इह पुनर्निमित्तेन भिन्नेनावच्छिन्नस्याख्यानमिति नास्ति तत् । अत एव **समुच्चयवत** इति मतुबुपात्तः । भिन्नेन निमित्तेनावच्छिन्नस्यात्राख्यानमिति मतुपा दर्शयति । यत्र तु निमित्तरूपेणाभिधानं तत्र शुक्लादौ मतुब्[1] नोपपद्यते । तस्मान्निमित्तानुविधानाभावादत्र समुच्चितशब्दः स्वार्थं स्वलिङ्गसंख्यायोगिनमभिधत्ते तद्वद्[2] द्वन्द्वोऽपीति न कश्चिद् दोषः । तदेवं ' समुच्चितः स्याद् द्वन्द्वार्थ ' इत्यत्र पक्षे स्वभावत एव लिङ्गसंख्ये इत्येतदेव युक्तम् । समुच्चयप्राधान्ये तु

' विशेषणानाम् ' .... ( P. 1. 2.52. )

इति शास्त्रेण लिङ्गसंख्याविधानं तत्रैव तद् वक्तव्यम् ॥ २०६ ॥

समकक्ष्यानर्थानभिदधतो द्वन्द्वस्य कः समानाधिकरणपदवाच्य आश्रयः यस्य व्यक्तिवचने प्रतिपद्येते इत्याशङ्क्याह ।

**वाच्यो[1] नास्त्याश्रयो द्वन्द्वे विशेषौ तत्र हि श्रुतौ ।**
**समुच्चयस्तदाधारस्तद्धर्मैर्व्यपदिश्यते ॥ २०७ ॥**

शुक्लाः पटा इत्यत्र यथा पटशब्दोपादानो[2] गुणवचनस्याश्रयोऽस्ति नैवं पदान्तरोपादानो द्वन्द्वे वर्तते । श्रुत्यैव द्वन्द्वपदाभ्यां विशेषयोर्भेदयोरुपादानात्तदन्तरङ्गयोर्धवखदि-

205. 1. A °रक्तक्रिया°.

206. 1. AE[3] मतुम् नो वर्तते. 2. AE[3] om. तद्वत्.

207. 1. A अन्योन्यस्त्वाश्रयो, IP वाच्ये. 2. AE[3] °दाने.



राविति तावेव च विशेषौ समुच्चीयमानौ समुच्चयस्याधार आश्रय इति तल्लिङ्गसंख्ये समुच्चयवाचिनो द्वन्द्वस्य भवतः । तत्र च पूर्वोत्तरपदगताभ्यां विरुद्धाभ्यां लिङ्गाभ्यां युगपद्[3] व्यपदेशस्यासंभवात् पर्याये प्राप्ते परवल्लिङ्गं नियम्यते । संख्याप्यवयवगतैकत्वसमाहारात्मिका द्वित्वबहुत्वलक्षणावयवलक्षणाश्रयवद् द्वन्द्वस्य भवति ॥ २०७ ॥

एवं परस्परापेक्षा अवयवार्था एव द्वन्द्वार्थ इत्यत्र दर्शने प्रतिपादितमिदम् । इदानीं युगपदधिकरणवचनतायामर्थस्यासंभवपक्षे प्रतिपादयितुमाह ।

**यो वावयवभेदाभ्यां भेदवद्भ्यामिवान्वितः ।**
**एकः समूहो धर्मात् स भागयोः प्रतिपद्यते ॥ २०८ ॥**

अवयवभेदानुगतः (समुदायः) सहविवक्षायां द्वन्द्ववाच्यः, अभिधानं पुनः स्वाभाविकं

' याभ्यां चैकमनेकार्थं ताभ्यामेवापरं पदम्[1] '

इति प्रत्येकं पदैरभिधीयमानोऽर्थ इत्यत्र दर्शने व्यक्तिवचने अवयवाश्रये समुदायः प्रतिलभत इति स्पष्टमेतद् । अनुस्यूतभेदस्य च समुदायस्य द्वन्द्वेन प्रतिपाद्यत्वाद् **भेदवद्भ्याम् इव** इत्याह । न त्वत्यन्तभिन्नाभ्यामित्यर्थः । [2]भेदानुगमाच्च तयोर्भागयोराश्रयभूतयोः समुदायो लिङ्गसंख्ये अनुवर्तते । अन्यथा निरस्तभेदस्य वनयूथादिवदभिधाने भेदयोगाश्रयभूतयोरनुपादानाद्वर्तिपदाभ्यां कस्य लिङ्गसंख्ये भजेत द्वन्द्व इत्यभिप्रायः ॥ २०८ ॥

नन्वेवमप्यवयवव्यतिरेकेण समुदायानुपलक्षणात् क आश्रयाश्रयिभाव इत्याह ।

**एकश्च द्व्यात्मकोऽर्थोऽसौ भेदाभेदसमन्वितः ।**
**यौ भेदावाश्रितस्तत्स्थे लिङ्गसंख्ये प्रपद्यते ॥ २०९ ॥**

अवयवात्मतया गृह्यमाणः समुदायो भिन्नः, स्वतस्त्वेकप्रख्यानिबन्धनतयाभिन्न इति द्विरूपः । तथा च प्रत्येकं पदैर्भेदात्मना प्रत्याय्यमान आश्रयः समूहात्मना त्वर्थाश्रित इत्याश्रयभूतवर्तिपदार्थसमवेते लिङ्गसंख्ये समवलम्बत इति स्थितम् ॥ २०९ ॥

इदानीं बहुव्रीहौ व्यक्तिवचनातिदेशोपयोगं क्रमेण व्युत्पादयितुमाह ।

**यथा स्वशब्दाभिहिते चैत्रार्थे न प्रयुज्यते ।**
**चैत्रशब्दो बहुव्रीहावप्रयोगस्तथा भवेत् ॥ २१० ॥**

इहान्यपदार्थे बहुव्रीहिरन्वाख्यायते । ततश्च तेनैवान्यपदार्थस्योक्तत्वाद् द्वन्द्व इव चशब्दस्य तदभिधायिनश्चैत्रादेः प्रयोगो न प्राप्नोति । तद्यथा चैत्रशब्देनोक्ते स्वार्थे पुनश्चैत्रशब्दो न प्रयुज्यते । उक्तार्थानां ह्यप्रयोगः । तदुक्तं वार्त्तिके

3. A °पदुपदेशा°

208. 1. AE[3] °मेवापदमिति. 2. P अभेदानु°.

209. 1. A °अभिन्नस्वरूप इतिद्वितीयो रूपः, E[3] अभिन्नस्वरूपः तथा च°

'पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्'
( Vā. 4, M. Bhā I, p. 421, l. 17. )
इति । अत्र परिहारोऽभिहितो
'न वानभिहितत्वात्'
5 'सामान्याभिधाने हि विशेषानभिधानम्'
( Vā. 5, 6, M. Bhā I, p. 421, l. 20, 24. )
इति ॥ २१० ॥

एतद् व्याचष्टे ।

**यथा गौरिति शुक्लादेरभिधानं न विद्यते ।**
10 **एवं यस्याभिसंबन्धो गोभिस्तावत् प्रतीयते ॥ २११ ॥**

संबन्धिसामान्ये बहुव्रीहिरिति तद्विशेषप्रतिपत्तिरतो न भवति । तद्यथा — सामान्यवाची गोशब्दो विशेषाभिधानायासमर्थ इति प्रयुज्यते विशेषप्रतिपत्तये शब्दस्त[1]त्र गौः शुक्लः कृष्णो वेत्यादिः । एवं चित्रगुश्चैत्रो मैत्रो वेति प्रयोगो विशेषप्रतिपत्तये न्याय्यः । चित्रा गावो यस्येति स्वामिमात्रस्य प्रतीतेः ॥ २११ ॥

15 यत्र तु शब्दशक्तिस्वभावाद् बहुव्रीहिणैव विशेषोऽङ्गीकृतस्तत्र तदभिधायी न प्रयुज्यत इत्याह ।

**संबन्धी नियतो रूढश्चित्राणां न च विद्यते ।**
**गवां यथा वज्रपाणिस्त्र्यक्षो वापि व्यवस्थितः ॥ २१२ ॥**

वज्रं पाणौ यस्य, त्र्यक्षीणि यस्येति नियतः प्रसिद्धोऽव्यभिचारी रूढः
20 शक्रः शिवश्च संबन्धी वृत्तावन्तरेण विशेषपदप्रयोगमवगम्यत इति भवति । तत्र संबन्धिविशेषेऽन्यपदार्थे बहुव्रीहिः । चित्रगुरित्यत्र विशेषो नावधार्यते चित्राभिर्गोभिर्विशेषेण स्वामिमात्रस्य समन्व[1]यसंभवादिति विशेषस्यानुप्रयोगोऽत्राविरुद्धः । प्रकरणादेस्तु विशेषावगमेऽत्रापि तत्प्रयोगो नास्ति ॥ २१२ ॥

25 एवं वार्तिककृता विशेषाभिधानायानुप्रयोगे समर्थिते चोदितं भाष्ये
'भवेत् सिद्धं यदा सामान्ये वृत्तिः । यदा तु विशेषे वृत्तिः तदा न सिध्यति । चित्रा गावोऽस्य देवदत्तस्य' ( M. Bhā. I. p. 421, l. 26–27. )
इति । अत्र समाधिः ।

211. 1. A om. तत्र.
212. 1. AE³ °क्रियाभाव्यात्. 2. AE³ °मात्रस्य संबन्ध°.



'नेदमुभयं युगपद् भवति वाक्यं समासश्च । यदा वाक्यं न तदा समासः, यदा समासः सामान्ये तदा वृत्तिः । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । चित्रगुः । कः । देवदत्तः' । ( M. Bhā. I. p 422 l. 1-4. )
इति । तदेतद् व्याचष्टे ।

5 **शब्दान्तरत्वाद् वाक्येषु विशेषा यद्यपि श्रुताः ।**
**वृत्तिशब्दोऽन्य एवायं सामान्यस्याभिधायकः ॥ २१३ ॥**

निर्णीतचरमेनद् वृत्तिवाक्ययोरर्थरूपभेदेन शब्दान्तरत्वमिति । विशेषप्रक्रमेऽपि वाक्ये वृत्तिशब्दो विशेषाभिधानप्रहतशक्तिरिति युक्त एवानुप्रयोगः । न हि वाक्यमेव वृत्त्यात्मना परिणमते, पृथक् तस्यापि श्रुतत्वात् । तस्माद् वाक्योपलब्धानां विशेषाणां
10 वृत्तावनन्तर्भावात् सामान्यमेवासावाचष्टे । अदूरविप्रकर्षेण तु वृत्त्यर्थो वाक्येनोपदर्श्यते । न तु सर्वतः परिच्छिन्ने वाक्यार्थे वृत्तिपदस्याभिधानशक्तिः संख्याविशेषादेरतोऽप्रतीतेः ॥ २१३ ॥

यद्येवं किमनेनानवगमितविशेषेण साकांक्षेण सामान्याभिधायिना बहुव्रीहिसमासेन प्रयुक्तेनेत्याशङ्क्याह ।

15 **अगोरचित्रगोश्चैव रूपभेदान्निवर्तकः ।**
**न चित्रगुविशेषाणां रूपाभेदात्तु वाचकः ॥ २१४ ॥**

चित्रगुशब्देनाविद्यमानगोसंबन्धाद् व्यावृत्तोऽर्थात्माभिधीयते । चित्रत्वेन विशेषणादचित्रगोर्व्यावृत्तिः । एवञ्च, न सर्वथा सामान्यशब्दोऽयम् अपि त्वन्यव्यावृत्तिविशेषस्याभिधातेत्यर्हति प्रयोगम् । एतावतीं विवक्षां पुरस्कृत्य चित्रगवीसंबन्धे हि प्रतिपाद्ये
20 भिन्नरूप एवायं शब्दः । तभिष्टापरविशेषप्रतिपादने तु रूपसामान्यादशक्त इति सामान्यस्याभिधायकः कथ्यते । चैत्रोऽपि हि स्याच्चित्रगुर्मैत्रोऽपीत्यत्राविशेषः । एवं विशेषशब्दानामनुप्रयोगे साधिते पुनश्चोदितं
'सामान्यस्यैव तर्ह्यनुप्रयोगो न प्राप्नोति, चित्रगु तत्, चित्रगु किञ्चत्, चित्रगु सर्वम्' ( M. Bhā. I p. 422, l. 4–5 )
25 इति । अत्र समाधिः
'सामान्यमपि यथा विशेषस्तद्वत् । चित्रगु इत्युक्ते सन्देहः स्यात् सर्वं वा विश्वं वेति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः' (M. Bhā. I. p. 422, l. 4–7.)
इति ॥ २१४ ॥

213 1. A सिद्धा.
214. 1. AE³ °न्यव्यावृत्तवि°.

अत्र सामान्यस्य कथं विशेषसादृश्यमिति व्याचष्टे ।

**यथा चित्रगुरित्येतत् प्रयुक्ते न प्रयुज्यते ।**
**एवं यदि स्यात् सामान्यं तस्य न स्यात् प्रतिश्रुतिः ॥ २१५ ॥**

**चित्रगुः** इत्येवं चित्रगवीस्वामिन्याख्याते न तदर्थ एव शब्दोऽनाकाङ्क्षितार्थः
5 प्रयोगमर्हति । एवंभूतं यदि सर्वादिपदोपादानं सामान्यमनाकाङ्क्ष्यमाणं स्यात् तदा न
प्रयुज्येत । यावताकाङ्क्ष्यते तदित्यर्हति तावत् प्रयोगम् ॥ २१५ ॥

अन्यव्यावृत्त्या[1]र्थाभिधानाच्च विशेषपदमेवैतदित्याह ।

**सर्वादयो विशेषास्तु प्रदेशानां निवर्तकाः ।**
**यथा प्रदेशाः सामान्यप्रदेशान्तरबाधकाः ॥ २१६ ॥**

10 इह भेदकत्वं विशेषलक्षणमिति यथा चैत्र इत्युक्ते मैत्रादिविशेषान्तरव्यवच्छेदः
प्रतीयते सामान्यस्य च निवृत्तिस्तथा सर्वं विश्वमित्यादिसामान्यपदप्रयोगेऽपि विशेषनिवृत्ति-
प्रतीतेरन्यव्यवच्छेदकमिदं सामान्यमपि विशेषो भवत्यपेक्षावशादित्यर्थः । एवं पदार्था-
भिधानपक्षेऽनुप्रयोगानुपपत्तिचोद्यं समाहितम् । यदा तु चित्रा गावो यस्येति विभक्त्यर्थेऽ-
न्य[2]पदार्थे संबन्धलक्षणे बहुव्रीहिस्तदा संबन्धवाचिका विभक्तिः षष्ठी मानुप्रयोजि, द्रव्यं
15 तु संबन्ध्यनभिहितमिति तदभिधानायानुप्रयोग उपपद्यते एव । तदुक्तं भाष्ये

'अथवा विभक्त्यर्थोऽभिधीयते । एतच्चात्र युक्तम् । अत्र हि सर्वपश्चात् पदं
वर्तते ' ( M. Bhā. I. p. 422, l. 8-9. )

इति । चित्रा गावो देवदत्तस्येति [3]यथैतत् षष्ठ्यन्तं पदं तदभिधाव्यापारेण प्राति-
पदिकार्थोपसर्जनं विभक्त्यर्थं प्राधान्येनाचष्टे । तथा[4] च संबन्ध्युपसर्जनस्यान्यपदार्थता
20 न्याय्येति सर्वपश्चाच्छब्देन षष्ठ्यन्तस्य पदस्य तत्र विभक्त्यर्थे व्यतिरेके संबन्धलक्षणे वृत्ति-
माह । अभिधाव्यापारेण नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायात् पूर्वमवच्छेदके
प्रातिपदिकार्थे संबन्धिनि वृत्तिः, पश्चात्तदुपहितविशेषे[5] संबन्ध इति स एवान्यपदार्थः
प्रधानभूतो न्याय्यः । पूर्वं तु तात्पर्यदशा संबन्ध्यन्यपदार्थ उक्तो नाभिधाव्यापाराश्रयेण ।
तदाश्रयणमेव तु न्याय्य इति भाष्यकारो मन्यते ॥ २१६ ॥

25 तदेतदाह ।

**विभक्त्यर्थाभिधानाद्वा षष्ठी नानुप्रयुज्यते ।**
**द्रव्यस्यानभिधानात्तु तच्छब्दोऽनुप्रयुज्यते ॥ २१७ ॥**

गतार्थोऽयं श्लोकः ॥ २१७ ॥

---

215. 1. AE[3] प्रयुङ्क्ते.

216. 1. A °वृत्त्यार्थो°, IP °व्यावृत्ताभि°. 2 A CD . अन्यपदार्थे. 3. AE[3] यदेतत्.
4. AE[3] तस्य. 5. A °हितविशेषे संबन्ध°.



अत्र पक्षे चोदितम्

" विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः " ( Vā. 7,
M. Bhā. I, p. 422, l. 10. )

इति विभक्त्यर्थस्यासत्त्वभूतत्वात्[1] सत्त्वस्य द्रव्यस्य ये लिङ्गसंख्ये तदुपचारो व्यवहारोऽत्र
5 समासवाच्यस्य न स्यादित्यर्थः । अत्र समाधिरुक्तः

" सिद्धं तु यथा गुणवचनेषु " ( Vā. 8. M. Bhā. I, p. 422, l. 1/ )

इति । तत्र गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति । शुक्लादीनामाश्रयैर्मतुब्लोपेन
सामानाधिकरण्यात् । इह तु संबन्धमात्रवचनस्य बहुव्रीहेः संबन्धिवचनैर्मतुब्लोपात्
सामानाधिकरण्यं न युज्यत इत्याह ।

10 **सामानाधिकरण्यं चेन्मतुब्लोपात् प्रकल्पते ।**
**मतुपोऽपि तदर्थत्वादनवस्था प्रसज्यते ॥ २१८ ॥**

बहुव्रीहिवन्मतुपापि संबन्धस्यैव प्रतिपादनात् संबन्धिनोऽनभिधाने पुनरपरो
मतुब् विधेयः तेनापि संबन्धिनोऽप्रत्यायने पुनरपर इत्यनवस्था अनिष्टा[2] मतुपामत्र
15 स्यात् । मतुपा तु संबन्ध्यभिधाने मत्वर्थे बहुव्रीहेर्विधानात् तेनापि तथैवार्थाभिधाने
विभक्त्यर्थाभिधानपक्षो न भवेत् ॥ २१८ ॥

नकेवलमनवस्था, यावत्

**संबन्धस्य च संबन्धी संबन्धोऽन्यः प्रसज्यते ।**
**विभक्त्य[1]र्थप्रधाने च क्रियायोगो न कल्पते ॥ २१९ ॥**

बहुव्रीहिवाच्यः संबन्धः प्रकृत्यर्थः । तेनावच्छिन्नोऽपरो मतुब्वाच्यः संबन्धः ।
20 प्रकृत्यर्थोपरक्तत्वाच्च प्रत्ययार्थस्य प्रकृत्यर्थसंबन्धावच्छिन्नः प्रत्ययार्थः प्रकृत्यर्थस्य **संबन्धी**
स्यात् । तथा च प्रकृत्यर्थस्य ( प्रत्ययार्थस्य ? ) संबन्धरूपता हीयेत । उपाधिमत्स्वात्
संबन्धिरूपता[2]प्राप्तेरित्यभिप्रायः । षष्ठ्यर्थप्रधाने च बहुव्रीहौ चित्रगुरानीयतामित्यादिः
**क्रियायोगो** न स्यात् संबन्धस्यासत्त्वभूतत्वेन कारकशक्त्याविर्भावायोगात् ॥ २१९ ॥

अथ तत्र पश्य ततः पश्येति विभक्त्यर्थप्रधानेऽपि दृष्टः क्रियायोगः । नेत्याह ।

25 **विभक्त्यर्थप्रधानत्वात् ततस्तत्रेति न क्रिया ।**
**दृश्यादिः कर्मकर्त्रादिर्निमित्तत्वाय कल्पते ॥ २२० ॥**

अपादानाधिकरणशक्तिप्रधानयोस्ततस्तत्रेत्यनयोर्दर्शितिष्ठत्यादिका क्रिया कर्तृ-

---

218. 1. A om. द्रव्यस्य. 2. AI अनिष्टा.

219. 1. A °क्त्यर्थे प्र°. 2. P °पता प्राप्तेरि°.

कर्मशक्तीनाविर्भावयति, विभक्त्यर्थस्य विभक्त्यन्तरार्थविरोधात् । किंत्वत्रावधिमत आधेयस्य च क्रियायोगः प्रतीयते ततः पश्य, तत्र तिष्ठतीति ॥ २२० ॥

एवं विभक्त्यर्थाभिधानपक्षे दोषः । किं च विभक्त्यर्थाभिधाने चित्रगुर्देवदत्तस्येति षष्ठी स्यात् । न भविष्यति ।

'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः ' इति ।

(M. Bhā. I. p. 423, l. 12.)

अत एव क्रियायोगो न भविष्यतीत्याशङ्क्याह ।

अन्तर्भवेच्च संबन्धः प्राधान्याभिहितः कथम् ।
स प्रातिपदिकार्थश्च तथाभूतः कथं भवेत् ॥ २२१ ॥

[1]चैत्रस्येति तथा षष्ठ्या सम्बन्धः प्राधान्येनोद्भूतरूपोऽभिधीयते तथा च बहुव्रीहिणेति स कथमत्रान्तर्भवेत् । यो हि संबन्ध्युपसर्जनः संबन्धोऽभिधीयते सोऽन्तर्भवति समासे । तद्यथा – राजपुरुष इत्यत्र राजविशिष्टस्य पुरुषार्थस्य प्राधान्यात् सम्बन्धो गुणभूत इति भवत्यसौ प्रातिपदिकार्थः, इह तु व्यतिरेकेणोच्यमानः कथं प्रातिपदिकार्थः स्यात् ।

इदानीं क्रियायोगं तावदुपपादयति ।

असम्भवात्तु संबन्धे संबन्धसहचारिणि ।
जातिसङ्ख्यासमाहारकार्याणामिव सम्भवः ॥ २२२ ॥

गामालभेत, ब्राह्मणानां शतमानय, पञ्चपूली बध्यतामिति जात्यादिषु शब्दचोदितेषु क्रियायोगानुपपत्तेस्तत्सहचारिण्यविनाभाविनि द्रव्ये क्रिया यथानुष्ठीयन्ते तथा चित्रगुरानीयतामिति संबन्धमात्रे क्रियानुपपत्तेः तदविनाभूते संबन्धिनि तन्निवेशः ॥ २२२ ॥

स्यादेतत् । जातिशब्दैः स्वरूपाच्छुरितोऽभिधीयतेऽभेदेन सहचारीति युज्यते तत्र क्रियायोगः । इह तु संबन्धस्य प्राधान्यात् कथमेतदित्याशङ्क्यात्रापि सामानाधिकरण्यमुपपादयितुमाह ।

सोऽयमित्यभिसंबन्धात् विशिष्टाश्रयवाचिनाम् ।
शुक्लादिवल्लिङ्गसङ्ख्ये शास्त्रारम्भाद् भविष्यतः ॥ २२३ ॥

मा भून्मतुब्लोपादत्र सामानाधिकरण्यम्, सोऽयमित्यभिसंबन्धाश्रयेण तु शुक्लादिवत् संबन्धेनोपचरिताभेदः सम्बन्धी वृत्तिपदवाच्यः सम्बन्धमात्रेऽपि विधानाच्छब्दशक्तिस्वाभाव्यादिति मञ्चादिवन्निमित्तानुविधानपरिहारार्थं

221 1. A चित्रस्येति.



'विशेषणानाम्.... ' (P. 1. 2. 52.)

इति सूत्रेण संबन्धिगतलिङ्गसंख्यासिद्धिः । निमित्तानुविधाने तु संबन्धस्य द्विष्ठत्वाद् द्विवचनं स्यात् । शास्त्रारम्भात्तु प्रधानभूतान्यपदार्थाश्रये व्यक्तिवचने सिध्यतः ॥ २२३ ॥

यद्येवं कथमिदमुक्तं भाष्ये

"यदि तर्हि विभक्त्यर्थोऽभिधीयते, कृत्स्नः पदार्थः कथमभिहितो भवति सद्रव्यः सलिङ्गः ससंख्यश्च " (M. Bhā. I. p. 422. l. 23-24.)

इति । यावता सोऽयमित्यभिसंबन्धाल्लिङ्गसंख्योपपत्तिरित्याशङ्क्य भाष्यकाराभिप्रायं व्याचष्टे ।

भेदेन तु विवक्षायां सामान्ये वा विवक्षिते ।
सलिङ्गस्य ससङ्ख्यस्य पदार्थस्यागतिर्भवेत् ॥ २२४ ॥

संबन्धिनो व्यतिरेकेण यदा संबन्धस्य बहुव्रीहिणा प्रतिपादनमिष्टं तदा द्रव्येणासामानाधिकरण्यात् तल्लिङ्गसंख्ययोरयोगात् कृत्स्नस्य पदार्थस्यागतिरुक्ता । सोऽयमिति संबन्धविवक्षायामेव वा निर्विशेषस्य सामान्यस्य चित्रगोरिदमुचितमित्यचित्रगुव्यावृत्तिमात्रपरेऽभिधाने बहिरङ्गस्य चैत्रादिपदान्तरगम्यस्याश्रयस्याभावाल्लिङ्गसंख्यासर्वनामनपुंसकैकवचनप्रसङ्गात् कृत्स्नः पदार्थः कथमभिहितो भवतीत्युक्तम् । अतश्चात्र सोऽयमित्यभिसंबन्धेऽपि कृत्स्नपदार्थाभिधानाभावात् विभक्त्यर्थाभिधानपक्षस्त्याज्यः, द्रव्याभिधानपक्ष एवाश्रयितव्यः ॥ २२४ ॥

स कथमुपपद्यत इत्याह ।

साधुत्वं च विभक्त्यर्थमात्रे वृत्तस्य दृश्यते ।
कृत्स्नार्थवृत्तेः साधुत्वमित्यर्थग्रहणं कृतम् ॥ २२५ ॥

प्रयुक्तानां शब्दानामन्वाख्यानात् षष्ठ्यर्थमात्रे द्रव्यादिरहिते वृत्तस्यैकार्थीभावापन्नस्य बहुव्रीहेः समासस्य प्रयोगो यतो न दृश्यते द्रव्यप्रधानस्यैवान्यपदार्थस्यास्मात् प्रतीतेः । अतोऽर्थग्रहणं सकलार्थवाचिनः प्रयोगज्ञापनार्थं कृतम् । तदुक्तं भाष्ये

'अन्यपद ' इत्येता[1]वता सिद्धे यदर्थग्रहणं करोति तस्यैतत् प्रयोजनं कृत्स्नः पदार्थो यथा विज्ञायेत सद्रव्यः सलिङ्गः ससंख्यश्च । '(M. Bhā. I. p. 422, l. 26.)

इति । सद्रव्य[2] इत्ये(?)वमपि निर्देशे द्रव्यमेव प्रधानमभिसंहितं न गुणादयोऽपि समक[3]क्ष्याः द्रव्यस्यैव तात्पर्यदृशा गुणाद्युपरक्तस्य प्रतीतेः । तत्र पद इत्युक्ते सामर्थ्याद् विभक्त्यर्थः सन्निहितः प्रतीयेत, शब्दे शब्दस्य वृत्त्यभावात् । अर्थशब्दोपादाने तु पदेनार्थो विशेष्य-

225. 1. M Bhā. has सोऽयमेवं सिद्धे. 2. A सद्रव्यमपि नि°. 3. A समकक्ष्यतया.

माणः सर्वपदावधिको विज्ञायेत । यथा ह्याधिक्याद् वाक्यार्थोऽत्रैवं व्यावर्त्यते तथा न्यूनत्वाद् विभक्त्यर्थमात्रमिति लिङ्गसंख्यावत् पदार्थभूतं द्रव्यमेवान्यपदार्थ इति पदार्थाभिधानपक्ष एव ज्यायान् । ततश्चानुप्रयोगः समर्थितः ।। २२५ ।।

अत्र च पक्षे व्यक्तिवचनातिदेशस्य नास्त्युपयोग इति तस्य पक्षान्तरे सप्रयोजनत्वमाह ।

**सोऽयमित्यभिसंबन्धाद् द्रव्यवृत्तिरियं यदा ।**
**सलिङ्गस्य ससङ्ख्यस्य तदा साधुत्वमुच्यते ।। २२६ ।।**

विभक्त्यर्थप्रधानपक्षे द्रव्यसामान्येन संबन्धस्योपचरितस्याभेदस्याभिधानेऽपि विशेषगतलिङ्गसंख्यासिद्ध्यर्थं

'यथा गुणवचनेषु' (vā. 8, M. Bhā. I, p. .22, l. 17.)

इति वार्तिककारेण व्यक्तिवचनातिदेशस्योपयोग उक्तो न त्वर्थपक्षे । अर्थग्रहणात् कृत्स्नद्रव्याभिधाने स्वाभाविकत्वाल्लिङ्गवचनयोरत्रेत्यर्थः ।। २२६ ।।

अत्र त्वयमुपालंभो

'यदि तर्हि कृत्स्नः पदार्थोऽभिधीयते लैङ्गाः साङ्ख्याश्च विधयो न सिध्यन्ति'

(M. Bhā. I. p. 422, l, 27–28)

इति भाष्य उक्तः । तमेव व्याचष्टे ।

**अन्तर्भूतविभक्त्यर्थे षष्ठी न श्रूयते यथा ।**
**तथाश्रुतिः प्रसज्येत लिङ्गसङ्ख्याभिधायिनाम् ।। २२७ ।।**

अर्थग्रहणात् सलिङ्गसंख्यस्य द्रव्यस्य प्राधान्येनाभिधाने तद्गुणभूतस्य विभक्त्यर्थस्य संबन्धस्यान्तर्भावात् प्रातिपदिकार्थस्य यथा षष्ठीविभक्तिर्न भवति तथा लिङ्गे स्त्रीत्वे भवाः लैङ्गाष्टाबादयः संख्यायामेकत्वादिकायां भवाः सांख्याः स्वादयस्तेषामपि अश्रुतिः अश्रवणमप्रयोगः प्रसज्येत आपद्येत ।। २२७ ।।

स्वाद्यभावे केवला प्रकृतिः कथं प्रयोगार्हेत्याशङ्क्याह ।

**साधर्म्यमव्ययेन स्याद् बहुव्रीहेस्तथा सति ।**
**लिङ्गसंख्यानिमित्तस्य संस्कारस्याप्[1]वर्तनात् ।। २२८ ।।**

लिङ्गसंख्याप्रापितस्य संस्कारस्य टाबादिस्वाद्युत्पत्तिलक्षणस्याभावादलिङ्गसंख्यैरव्ययैर्बहुव्रीहिपदानामेकयोगक्षेमता स्यात् । यथैवाव्ययस्य स्त्रीप्रत्ययविभक्तिरहितस्य प्रयोगनियमापवादात् केवलस्य प्रयोगः साधुरेवं बहुव्रीहेर्भवेदित्यर्थः ।। २२८ ।।

---

228. 1. A °स्यावर्तनात.



चैत्रादिना सत्त्ववचनेन पदान्तरेण तर्हि कथं सामानाधिकरण्यमित्यत आह ।

**प्रयुक्तेन च संबन्धाच्चैत्रादिश्रवणं भवेत् ।**
**विना विभक्त्या संबन्धो विभक्त्या विद्यते विना ।। २२९ ।।**

बहुव्रीहिपदेन द्रव्यसामान्यवाचिना विभक्तिरहितेनोच्चारितेन चित्रग्वित्यादिना विशेषप्रतिपादकानां चैत्रादीनां तत्समानाभिधेयत्वात् तद्वदेव विभक्तिरहितानां प्रयोगो भवेत् । विभक्तिरहितस्य विभक्तिशून्येनैव सह संबन्धो न्याय्यो न तु सविभक्तिकेन, अत्यन्तवैधर्म्यात् । तथा चासंब[1]द्धे द्रव्यसामान्यनिष्ठद्रव्यविशेषाभिधानं न स्यात् (?) ।। २२९ ।।

एवमत्र पदार्थाभिधानपक्षे चोद्यभाष्यं व्याख्यातम् । अत्रैव परिहारभाष्यम्

"लैङ्गेषु तावदुक्तंसिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः" (M. Bhā. I. p. 423, l. 2.)

इति । यथान्यत्र टाबादयो द्योतकास्तथा बहुव्रीहेरपि भविष्यन्तीत्यर्थः । सांख्येष्वप्युक्तम् ।

"कर्मादीनामनुक्ता एकत्वादयः इति द्वितीया[1]दयो भविष्यन्ति"

(M. Bhā. I. p. 423, l. 3.)

इत्यादि । तदेतद् विवृणोति ।

**अभिधानेऽपि संख्यायाः संख्यात्वं न निवर्तते ।**
**षष्ठ्यर्थस्याभिधाने तु स्यात् प्रातिपदिकार्थता ।। २३० ।।**

बहुव्रीहिपदैरभिहितापि सङ्ख्या स्वकार्यं स्वादिलक्षणं प्रापयत्येव । तद्यथा एको द्वौ बहव इत्यत्र । न ह्यभिहितापि संख्या स्वरूपं जहाति । ततश्च कर्मादिविशेषणायाः संख्यायाः अभिधानाय द्वितीयादयस्तावदुत्प[2]द्यन्ते । प्रथमापि

'न केवला प्रकृतिः प्रयोक्तव्या'

इति समयपालनायोत्पत्स्यते । अव्ययात्तु लुग्वचनेनायं प्रयोगनियमो बाधितः । न चैवं बहुव्रीहिपदेभ्यो लुगन्वाख्यातः । तुल्ये समयपालने द्वितीयादयः कस्मान्न भवन्तीति चेन्न, अर्थाभावात् । कर्मादिषु हि द्वितीयादयः तदभावे कथं भवेयुः । तस्मादेकादिशब्देभ्य इवार्थानुगुण्यात् प्रथमैकवचनादीन्येव भविष्यन्ति प्रातिपदिकार्थमात्रे । तदुक्तम्

'अर्थतो व्यवस्था' (M. Bhā. I. p. 423, l. 8.)

इति । वचनग्रहणाद्वा प्रथमा भविष्यत्युक्तार्थापि । षष्ठ्यर्थस्य तु संबंधस्य द्रव्यगुणभूतस्याभिधाने प्रातिपदिकार्थत्वादभिहितः सोऽर्थोऽन्तर्भूत इति षष्ठी न भवति । यत्र हि

---

229. 1. AE[3] चासंबन्धे.

230. 1. M. Bhā. has सांख्या भविष्यन्ति. 2. E[3] उपपद्यन्ते. 3. E[3] °र्थसाधुत्वं.

प्राधान्येनोद्भूतः संबन्धः स विषयः षष्ठ्याः । तदेवं पदार्थाभिधानेऽनुप्रयोगानुपपत्तिचोद्यप्रतिसमाधानाय विभक्त्यर्थाभिधानपक्षः समाश्रितः । तत्र च सामानाधिकरण्यं क्रियायोगश्चोपपादितः । किं चार्थग्रहणात् कृत्स्नार्थ[3]वृतेः साधुत्वं प्रयोगप्रामाण्यादवस्थापितम् ॥ २३० ॥

5 केचित् पुनर्मतान्तरमाहुरित्याह ।

**अनुप्रयोगसिद्ध्यर्थं न विभक्त्यर्थकल्पना ।**
**वस्त्वन्तरमुपक्षिप्तमिति केचित् प्रचक्षते ॥ २३१ ॥**

'पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्'
(Vā. 4. M. Bhā. I. p. 421, l. 17.)

10 इत्यस्य प्रतिसमाधानाय विभक्त्यर्थाभिधानपक्षो नाश्रितः

'न वानभिहितत्वात्' (Ibid, l. 20.)

'सामान्याभिधाने हि विशेषानभिधानम्' (Ibid, l. 24.)

इत्येवमनुप्रयोगस्योपपादितत्वात् । किन्तु दर्शनान्तरमेवेदं युक्तायुक्तविचारविषयतयोपन्यस्तमित्यन्येषां मतम् । तथा ह्यत्रापि सोऽयमित्यभिसंबन्धाद् द्रव्यस्याभिधानमिष्यते ।
15 तथा चानुप्रयोगानुपपत्तिरिति तदवस्थो दोषः । तत्र पुनस्तथैव प्रतिविधेयं

'न वानभिहितत्वात्'

इति । तत् कथं परिहारान्तरमिदं भवेदिति । 'केचित्' इति वचनादत्रारुचिं सूचयति । तथाहि भाष्येऽस्यैवेति समाधानान्तरत्वेनैवास्योपक्षेपः ।

'एतच्चात्र युक्तम्, अत्र हि सर्वपश्चात् पदं वर्तते'
20 (M. Bhā. I. p 422, l. 8-9)

इति चास्य पक्षस्योत्कर्षोऽभिहितः । यद्यपि चात्रापि पक्षे सोऽयमिति संबन्धाद् द्रव्याभिधानं तथापि प्रक्रियायामनुप्रयोगसिद्ध्यर्थं विभक्त्यर्थप्राधान्यमेव । प्रयोगप्रामाण्यात्तु कृत्स्नाभिधानमर्थग्रहणात् सिद्धान्त इति प्रागुक्तमेव न्यायः । तत्र च स्वाभाविके लिङ्गसंख्ये । पक्षान्तरे तु शास्त्रादिति निर्णीतम् ॥ २३१ ॥

25 वस्त्वन्तरोपक्षेपदर्शने पक्षद्वयसङ्कलनायाह ।

**संबन्धिभिर्विशिष्टानां संबन्धानां निमित्तता ।**
**संबन्धैर्वा विशिष्टानां तद्वतां स्यान्निमित्तता ॥ २३२ ॥**

वर्तिपदोपादानैः संबन्धिभिरवच्छिन्नानां संबन्धानां बहुव्रीहिप्रवृत्तौ निमित्तत्वं विभक्त्यर्थाभिधानपक्षे । बहुव्रीहिभेदाच्चात्र बहुवचनम् । एक एव तु संबन्धः प्रतिबहुव्रीहि प्रवृत्तिनिमित्तम् । पदार्थाभिधानपक्षे तु संबन्धैरवच्छिन्नानां संबन्धिनां बहुव्रीहिप्रवृत्तौ निमित्तत्वम् । बहुवचनमत्रापि पूर्ववत् ॥ २३२ ॥



एतदेवैकयोगक्षेमत्वर्थीय[1]निदर्शनेन व्युत्पादयति ।

**केचित् संयोगिनो दण्डाद् विषाणात् समवायिनः ।**
**तद्वति प्रत्ययानाहुर्बहुव्रीहिं तथैव च ॥ २३३ ॥** 5

संयोगाख्येन संबन्धेन विशिष्टाद् **दण्डात्** संबन्धिनि प्रवृत्तिनिमित्तात् समवायाख्यसंबन्धोपकृताच्च **विषाणात् तद्वति** संयोगिदण्डसंबन्धिनि समवायिविषाणसंबन्धिनि च प्रत्ययान्मत्वर्थीयान् इनिठन्मतुब्लक्षणान् वर्णयन्ति दण्डी विषाणीत्यादौ । **तथैव** तेनैव प्रकारेण द्रव्याभिधानपक्षावलम्बिनो बहुव्रीहिं संबन्धोपकृतसंबन्धिनिमित्तमाचक्षते । यथा दण्डविषाणसंबन्धोपकृतौ संबन्धिनौ मत्वर्थीयनिमित्तमेवं यथास्वं संबन्धोपकृतो वर्तिपदार्थलक्षणः संबन्धी बहुव्रीहिसमासस्य[2] प्रवृत्तिनिमित्तम् । अन्यपदार्थलक्षणस्तु संबन्धी वाच्य इति पदार्थाभिधानपक्ष इत्यर्थः । पलाशदण्ड इति संयोगोपकृतः संबन्धो निमित्तम् । तिग्मविषाण इति समवायोपकृतः ॥ २३३ ॥ 10

पक्षान्तरमाह ।

**भिन्नं संबन्धिभेदेन संबन्धमपरे विदुः ।** 15
**निमित्तं स विभक्त्यर्थः समासेनाभिधीयते ॥ २३४ ॥**

वर्तिपदार्थलक्षणसंबन्धिविशेषोपकृतः संबन्धो वा यथायथं भिन्नोऽत्र मत्व[1]र्थीयनिमित्तम् । तथा हि दण्डी विषाणीत्युक्ते संबन्धिनः संबन्धस्य च सन्निधानाच्छब्दप्रवृत्तावविशेषेण द्वयोरपि निमित्तत्वमवधार्यते, द्वाभ्यामपि प्रतीतावनुरागजननात् । प्रक्रियाभेदस्तु कल्पनाकल्पितः । एवं बहुव्रीहिणापि समासेन सविभक्त्यर्थः संबन्धिविशेषोपकृतः संबन्धः प्रतिपाद्यत इत्युक्तमेव । संबन्धमात्रे चात्र विश्रान्त्यभावादुभयत्र सोऽयमिति संबन्धेन तद्वदभिधानम् ॥ २३४ ॥ 20

तदेवं बहुव्रीहेरन्यपदार्थविषयत्वे संबन्धस्य यदा निमित्तमात्रत्वं तदवच्छिन्नस्तु संबन्धी वाच्योऽर्थग्रहणसामर्थ्यात् तदा पूर्वः पक्षः । यदा तु संबन्ध एव प्रधानमन्यपदार्थतया स्वैरुपाधिभिः संबन्धिभिर्गुणभूतैरवच्छिन्नोऽभिधेयो वाच्यः तदा द्वितीयः पक्ष इति निगमयितुमाह । 25

---

233. 1. IP °र्थीयदर्शनेन. 2. E[3] समासप्रवृ°.

234. 1. AE[3] °र्थीये निमि.

प्रधानमन्यार्थतया भिन्नं स्वैरुपसर्जनैः ।
निमित्तमभिधेयं वा सर्वपश्चादपेक्ष्यते ॥ २३५ ॥

**प्रधानम्** अन्यपदार्थतया संवन्धो वर्तिपदार्थैर्गुणभूतैरवच्छिन्नः संवन्धिनि प्रवर्तमानस्य बहुव्रीहेर्निबन्धनमिति पूर्वस्य पक्षस्य निगमनम् । स एव वा संबन्धो वाच्यः । तथा हि सर्वपश्चादपेक्ष्यत इति संवन्धाभिधानपक्षं भाष्येण संवादयति ।

'अत्र हि सर्वपश्चात् पदं' वर्तते (M. Bhā. I p 422, l. 9.)

इति भाष्य उक्तम् । अभिधा[1]नव्यापारेण षष्ठ्यन्तस्य पदस्य संबन्ध्यवच्छिन्नसंबन्धप्रधानत्वादस्य पक्षस्योत्कर्षः प्रतिपादितः ॥ २३५ ॥

ननु च चित्रा गावो यस्येति व्यतिरिच्यमानेन तत्र गुणभूतेन स्वामिना स्वपदार्थभूता गाव एव विशेष्यमाणाः प्रधानमिति कथं संबन्धविशिष्टः संबन्धी संबन्धिविशिष्टो वा संबन्धो बहुव्रीहिवाच्यः स्यादित्याशङ्क्याह ।

स्वामिनि व्यतिरेकश्च वाक्ये यद्यपि दृश्यते ।
प्राधान्य एव तस्येष्टो बहुव्रीहि[1]र्विवक्षिते ॥ २३६ ॥

वृत्तिवाक्ययोरत्यन्तभेदादर्थभेदोऽविनाभावीति वाक्येऽन्यपदार्थस्योपसर्जनत्वेऽपि वृत्तौ प्राधान्यं तस्याभिमतम् ॥ २३६ ॥

एवं च नेदमनुगुणं वाक्यमित्याह ।

गवां विशेषणत्वेन यदा तद्वान्[1] प्रवर्तते ।
अस्यैता इति तत्रार्थे बहुव्रीहिर्न विद्यते ॥ २३७ ॥

कस्यैताश्चित्रगव्य इति जिज्ञासायां चित्रा गावोऽस्येति यदा वाक्यं प्रयुज्यते तदोपसर्जनत्वे तद्वतो गोस्वामिनो वाक्यादस्मादवगते वृत्त्यर्थो न प्रदर्शितः स्यात् परिपूर्णः ॥ २३७ ॥

इदं त्वनुगुणं वाक्यमित्या

यदा प्रत्यवमर्शस्तु तासां स्वामी गवामिति ।
गोभिस्तदाभिसंबन्धो निमित्तत्वाय कल्पते ॥ २३८ ॥

आसां चित्रगवीनां कः स्वामीति जिज्ञासायां यदा स्वामिविशेषप्रतिपत्त्यर्थं चित्र[1]-गव्य उपलक्षणत्वेनाश्रीयन्ते तदान्यपदार्थस्य वर्तिपदार्थैर्गोभिरभिसंबन्धो बहुव्रीहिसमासस्य

235. 1. AE[3] °भिधाव्यापा°.
236. 1. A °व्रीहिर्वि°व.
237. 1. A तद्वाक् प्र°.
238. 1. A चित्रागावः, E[3] चित्रा गाव्यः,



निमित्तं जायते । ततश्च चित्रा गावो यस्य सोऽयं चित्रगुरित्येवमत्रान्यपदार्थप्राधान्ये वाक्यमुचितमित्यर्थः ॥ २३८ ॥

यदा तर्हि संबन्धान्निमित्तात् संबन्धी समासवाच्यः तदा लिङ्गसंख्यातिदेशस्योपयोगो न वेत्याह ।

अपेक्ष[1]माणः सम्बन्धं[2] रूढि[3]त्वस्य निवृत्तये ।
निमित्तानुविधायित्वात् तद्धर्मार्थः प्रस[4]ज्यते ॥ २३९ ॥

संबन्धावच्छिन्नः संबन्धी वाच्य इति निमित्तस्य संबन्धस्यानुविधानमनुवृत्तिरिति तस्यैव संबन्धस्य ध[5]र्मो लिङ्गसंख्यारहितत्वं यस्य तथाभूतो बहुव्रीहिवाच्यः प्राप्नोति । संबन्धो हि निमित्तम् । असत्त्वभूतः स च नानुविधीयतेऽत्र निमित्तमिति न वाच्यं, यस्मान्निमित्तेऽननुविधीयमाने रूढिशब्दो बहुव्रीहिः स्यात् । रूढिष्ववयवार्थानुसरणाभावात् । चित्रगुरित्यादौ चावयवार्थोऽनुस्रियत एव ॥ २३९ ॥

एतदेव निदर्शनेन द्रढयति ।

नानाचित्रा इति यथा निमित्तमनुरुध्यते ।
नानाभूतेऽपि वृत्तः सन् बहुव्रीहिस्तथा भवेत् ॥ २४० ॥

नानाशब्दोऽसहभावमात्रवचनोऽव्य[1]यम् । स यदा सहभावं निमित्तमुपादाय तद्वति सत्त्वरूपे वर्तते तदापि स्वनिमित्तानुविधानादसत्त्वभूत एव । एवं बहुव्रीहिरपि स्यात् । निमित्तान्निमित्तवत्यर्थे निमित्तसरूपः प्रत्ययो जायत इति निमित्तिनः स्वरूपस्य शुद्धस्याप्रतिभासनात् स्वकार्ययोगाभावे निमित्तकार्यमेव न्याय्यमित्यत्र युक्तिर्गर्भीकृता, न तु दृष्टान्तमात्रादर्थसिद्धिः ॥ २४० ॥

तदेवं निमि[2]त्तानुविधानेऽत्र प्राप्ते व्यक्तिवचनातिदेशः सफलः । यदा तु वार्तिपदार्थभूताः संबन्धिनो निमित्तमन्यपदार्थस्य द्रव्यस्य तदा नार्थोऽतिदेशेनेत्याह ।

संबन्धिनि निमित्ते तु द्रव्यधर्मो न हीयते ।
लिङ्गाभावो हि लिङ्गस्य विरोधित्वेन वर्तते ॥ २४१ ॥

प्रवृत्तिनिमित्तं संब[1]न्धी वाच्योऽपि संबन्धी लिङ्गसङ्ख्यासमन्वययोग्य इत्यत्र पक्षे स्वाभाविके लिङ्गसंख्येनार्थोऽतिदेशेन । न ह्यत्र निमित्तानुविधानेऽपि द्रव्यधर्मस्य लिङ्गसंख्यायोगित्वस्य हानिर्निमित्तस्यापि लिङ्गसंख्यायोगित्वात् । यद्यपि चान्यलिङ्गसंख्याश्चित्रा गावश्च संबन्धिनो निमित्तभूताः देवदत्तश्चान्यपदार्थो वाच्यः अन्यलिङ्गसंख्यः

239. 1. A अपेक्ष्यमाण. 2. AE[3] संबन्धो. 3. E[3] रूपित्वस्य. 4. AE[3] प्रयुज्यते.
5. A स धर्मो, E[3] न्यसधर्मो.
240. 1. IP अव्ययः, E[3] om. असद्भाव—स यदा. 2. AE[3] निमित्तनिमित्त°.
241. 1. AE[3] संवन्धि,

तथापि संबन्धिनामवयवार्थानामत्र प्रवृत्तिनिमित्तानां निमित्तिरूपातिरोधायकत्वं, भेदेन वृ[2]त्तिहेतुत्वात् । तथा चातिरस्कृतात्मान्यपदार्थः संबन्धी प्रतीयमानः स्वलिङ्गसंख्या-योगार्ह एवेति नास्ति विरोधः । संबन्धस्य तु प्रवृत्तिनिमित्तत्वे स्वशब्दोपादानोऽसौ स्वरूपाविरोधेन संबन्धिनं गमयेत् । तथा च तेन[3] निमित्तेनालिङ्गसंख्येन तिरोहितरूपः संबन्धी स्वलिङ्गसंख्याकार्यं नासादयति । लिङ्गाभावो लिङ्गविरोधी, नान्यलिङ्गता ॥ २४१ ॥

तथाहि ।

**संख्यावान् लिङ्गवांश्चार्थोऽभिन्नधर्मा निमित्ततः ।**
**आसन्न एव द्रव्यत्वात् त[1]द्धर्मैर्न विरुध्यते ॥ २४२ ॥**

यदा संबन्धी निमित्तं स एव च लिङ्गसंख्यावानन्यपदार्थः तदासौ **अभिन्नधर्मा** तुल्यधर्मा । केनाभिन्नधर्मेत्याह [2]**निमित्ततः** इति । ल्यब्लोपे पंचमी । निमित्तम-पेक्ष्येत्यर्थः, निमित्तेन तुल्यधर्मेति यावत् । द्वयोरपि संबन्धिनोः सत्त्वरूपत्वात् । एवं चासन्न एवान्यपदार्थो निमित्तस्य तुल्यधर्मत्वान्निकटो नातिदूरः संबन्धनिमित्तपक्षवत् । अतश्च निमित्तधर्मैर्लिङ्गसंख्याभेदैरन्यपदार्थो न विरुध्यते । अतिरोहितात्मा ह्यभिधीयमानः स्वलिङ्गसंख्याभ्यां योक्ष्य[3]त इत्यर्थः । क्वचित्तु विरोधे सति निमित्तधर्मानुवृत्तिर्भवत्येव । तद्यथा-हरीतक्यः फलानि खलतिकं वनानीति । इत्थं च व्यतिरेकेण प्रतीयमानस्य निमित्तस्य द्वयी गतिः तद्धर्मानुविधानं हरीतक्यादिषु । तदभावो यथा बहुव्रीहौ । स्वरूपावेशेन त्वभेदेन प्रतीयमानस्य निमित्तस्य निमित्तिना धर्मोऽनुविधीयत एव । गतमेतत् ॥ २४२ ॥

इदं तु वक्तव्यं—विभक्त्यर्थपक्षेऽपि सोऽयमिति संबन्धात् संबन्धिनिष्ठत्वे कः पदार्थाभिधानपक्षाद् भेद इत्यत आह ।

**विभक्त्यर्थेन चाविष्टं शुद्धं चेति द्विधा स्थितम् ।**
**द्रव्यं शुद्धस्य यो धर्मः स न स्यादन्यधर्मणः ॥ २४३ ॥**

षष्ठीलक्षणविभक्तिवाच्येन संबन्धेनापादिताभेदं द्रव्यं विभक्त्यर्थाभिधानपक्षे वाच्यम्, अनन्योपहितं शुद्धं च पदार्थाभिधानपक्षे वाच्यमिति प्रकारद्वयेन द्रव्यस्य प्रवर्तनात् पक्षभेदः । तत्र शुद्धस्य स्वेनात्मनाभिधीयमानस्य **यो धर्मो** लिङ्गसंख्ये स न भवति संबन्धेनाविष्टस्याख्यायमानस्य पररूपोपरागादिति लिङ्गसंख्यातिदेशोऽत्र सफलः ।

2. AE[3] प्रवृत्तिनिमित्तहेतुत्वात्. 3. AE[3] केन.

242. 1. A तद्धर्मेन. 2. A om. निमित्ततः इति । ल्यब्लोपे पचमी. 3. A योक्ष्यते.



पदार्थाभिधानपक्षे तु शुद्धस्य द्रव्यस्यान्यपदार्थस्य वर्तिपदार्थविशिष्टस्याभिधानाद् वर्ति-पदार्थलक्षणाः संबन्धिनः प्रवृत्तिनिमित्तमिति द्रव्यधर्माहानि[1]रुक्ता ॥ २४३ ॥

एतदेव वाच्यस्य प्रकारद्वयेन वर्तनं पक्षयोर्विभजति ।

**द्रव्यमात्रस्य निर्देशे भेदोऽयमविवक्षितः ।**
**ग्रन्थे पूर्वत्र भेदस्तु द्वितीयेऽनुप्रदर्शितः ॥ २४४ ॥**

विभक्त्यर्थविशलक्षणो यो विशेषो **द्रव्यमात्रस्य** शुद्धस्य संबन्धानुपहितस्य **निर्देशे** प्रतिपादने पूर्वस्मिन् **ग्रन्थे** यत्रानुप्रयोगानुपपत्तिश्चोदिता

' नवानभिहितत्वाद् '

इत्यादिना च प्रतिसमाहिता भाष्ये तत्र पदार्थाभिधानपक्षे नाभिधातुमिष्टः ।

' अथवा विभक्त्यर्थोऽभिधीयत '

इत्यत्र तु **द्वितीये** भाष्यग्रन्थेऽयं विशेषः साक्षादेवोक्तः । अत्रापि च विभक्त्यर्था-विष्टं द्रव्यमेवोच्यते । अन्यथा द्रव्यानभिधाने सर्वथैवासद्व्यक्तिवचनं कथमतिदेशादपि प्राप्येत । प्रधानं तु संबन्धोऽत्र विवक्षितः ॥ २४४ ॥

यद्येवं तेन संवृतस्वरूपत्वाद् द्रव्यस्याभिधानाभाव इति कथमिदमुक्तं सद्रव्यः सलिङ्गः ससंख्य इत्यत आह ।

**द्रव्यस्य ग्रह[1]णं चात्र लिङ्गसंख्याविशेषणम् ।**
**द्रव्याश्रितत्वं हि तयोस्ततोऽन्यस्य न सिध्यतः ॥ २४५ ॥**

यद्यपि लिङ्गसंख्ययोर्द्रव्यं विशेष्यं तथापि तयोर्विशेषणमत्र द्रव्यग्रहणं बोद्धव्यम् । अन्यस्य गुणादेस्ताभ्यामयोगप्रतिपादनार्थं द्रव्याश्रितत्वमे[2]वानयोरिति संबन्धाभिधानेऽपि लिङ्गसंख्यासिद्ध्यर्थं सद्रव्य इत्युक्तम् । संबन्धो हि षष्ठीवाच्यमुद्भूतमत्र रूपं हित्वा द्रव्याभेदेनाभिधीयमानः[3] सद्रव्योऽभिहितो भवति । न तु द्रव्यस्यात्र गुणभावादन-भिधानम् । आर्थेन हि रूपेण प्राधान्यं द्रव्यस्यैव । पक्षभेदार्थं तु संबन्धस्य शाब्दं प्राधान्यमाश्रितम् ॥ २४५ ॥

तथा हि ।

**संबन्धिभिन्न[1]संबन्धपरिच्छिन्ने प्रवर्तते ।**
**समासो द्रव्यसामान्ये विशिष्टार्थानुपातिनि ॥ २४६ ॥**

243. 1. AE[3] °धर्महानि°.

244. 1. P °थैवातद्व्यक्ति°.

245. 1. A ग्रहणे. 2. E[3] °त्वमनयो° 3. E[3] °नस्य द्रव्ये°.

246. 1. AE[3]. °भिन्नः सं°.

वर्तिपदार्थभूतैः संबन्धिभिः विशेषितो यः संबन्धस्तेन परिच्छिन्ने स्वरूपसंभेदेनावच्छिन्ने संबन्धिनि द्रव्यसामान्ये विभक्त्यर्थाभिधानपक्षे बहुव्रीहिर्वाचकत्वेन वर्तते। सामान्य इति पदार्थविशेषणामनभिहितानामनुप्रयोगोपपत्तिमत्रापि दर्शने पक्षान्तरवदाह ॥ २४६ ॥

अतश्च विशेषैः सामानाधिकरण्यात् तदनुपातित्वे फलमाह।

**द्रव्यधर्मानतिक्रान्तो भेदधर्मेष्ववस्थितः।**
**भविष्यदाश्रयापेक्षे लिङ्गसंख्ये प्रपद्यते ॥ २४७ ॥**

द्रव्यसामान्यवृत्तित्वाद् योग्यतामात्राद् द्रव्यधर्मं लिङ्गसंख्यालक्षणमनतिक्रान्तः समासो द्रव्यविशेषग[1]तं च रूपाभेदादसमर्थो लिङ्गवचनं प्रतिपत्तुमिति

विशेषणानां .... ( P. 1. 2. 52. )

इति शास्त्रसामर्थ्यात् पदान्तरप्रयोगावधृतद्रव्यविशेषाश्र[2]यगते यथायथं लिङ्गसंख्ये समवलम्बते। इत्यवसितविचारो बहुव्रीहिः ॥ २४७ ॥

क्रमप्राप्ते नञ्समासे लिङ्गवचनातिदेशं विचारयितुं भाष्योपक्षिप्तं पक्षत्रयं समर्थयते।

**शास्त्रप्रवृत्तिभेदेऽपि लौकिकार्थो न भिद्यते।**
**नञ्समासे यतस्तत्र त्रयः पक्षा विचारिताः ॥ २४८ ॥**

एकत्र गुणप्रधानभावस्यानवस्थानात् कथं पक्षत्रयोपपत्तिः। अब्राह्मणादेर्ह्यन्यपदार्थस्यैव क्षत्रियादेरवधारणात् तत्प्रधानत्वमेव न्याय्यमिति चोदिते सतीदं समर्थनम्—

'अर्थानादेशनात्, तत्र[1] लब्ध्यर्थम्।'

इति वदता स्थितलक्षणोऽर्थः प्रक्रियाभेदेऽप्यव्यभिचारी लौकिकः उक्तः। तथाहि—यदान्यपदार्थः प्रधानं तदा व्यक्तिवचनमुत्तरपदम्, अविद्यमाना ब्राह्मणव्यक्तिराश्रयभूतास्मिन् क्षत्रिये क्षत्रियजाताविति। यदा तु पूर्वपदार्थो नञर्थो निवृत्तिरूपः प्रधानं तदा[2] तस्यासतः क्रियायोगाभावान्निषेधस्य प्रसक्तपूर्वकत्वादुत्तरपदार्थसदृशमेव प्रतीयते। एवमुत्तरपदार्थप्राधान्येऽपि ब्राह्मण्येनावसितः क्षत्रियादिरेवावगम्यत इति नास्ति भेदः स्थितलक्षणस्यार्थस्य। अपोद्धारपदार्थस्त्वन्वाख्यानाङ्गमिति प्रक्रियायां स भिद्यते। तथा च किंप्रधानोऽयं समास उत्तरपदार्थप्रधानः पूर्वपदार्थप्रधानोऽन्यपदार्थप्रधानो वेति पक्षत्रयमुपन्यस्य भाष्ये यस्मिन् पक्षे शास्त्रप्रक्रिया न विलुप्यते तमवस्थापयितुं विचारो न विरुध्यते ॥ २४८ ॥

यद्यपि चापोद्धारपदार्थः प्रतिपादकशब्दनिष्ठः तथापि

247. 1. A °शेषे गतश्च रू°, E[3] शेषे गतं च. 2. AE[3] 'श्रयं गते.
248. 1. A तत्र. 2. A om. तदा.



**शब्दान्तरेऽपि चैकत्वमाश्रित्यैव विचारणा।**
**अब्राह्मणादिषु नञः प्रयोगो न हि विद्यते ॥ २४९ ॥**

न ब्राह्मणोऽब्राह्मण इत्यादिपरिकल्पितावयवविभागेन प्रतिपाद[1]कशब्दनिष्ठं पूर्वपदोत्तरपदगतार्थविभागपरिकल्पनयान्वाख्येयस्थितलक्षणार्थशब्दानुशासनं क्रियते लाघवार्थम्. तथाहि प्रक्रियायामपि वाक्याद् वृत्तेः शब्दान्यत्वेऽपि वाक्येन सहाभेदं परिकल्प्य परीक्षा विधीयते। तथा चाब्राह्मणादिषु समासेषु यद्यपि नञ् नाम न कश्चिद् दृश्यते तथापि वाक्ये नञो [2]दृष्टेस्तदभेदेन व्युत्पादनम्। सर्व एव हि वृत्तेः संसृष्टार्थाया विशेषणविशेष्यादिभेदोऽर्थानां वाक्याभेदसमाश्रयः वाक्यार्थस्य वृत्तौ संप्रत्ययात्। ततश्च निवृत्तिलक्षणस्य नञ[3]र्थस्य संप्रत्ययादब्राह्मणादिष्वकाररूपमिदं नञ्संबन्धीति निश्चीयते। अधिकापनयादिषु त्वकाररूपमेवानुवर्तते, न नञर्थः। परमार्थतस्त्वब्राह्मणादिर्निरस्तावयवविभागो मुण्डिसूत्र्यादिवदिति

ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले।

( Vāk. II. 14. )

इत्यादिना निर्णीतमेव ॥ २४९ ॥

एवं पक्षत्रयविचारोपपत्तिमुक्त्वा कीदृगर्थो वाक्ये नञो दृश्यते, यस्य तदभेदेन वृत्तौ व्युत्पाद्यमानायामनुगम इत्याह।

**प्राक् समासात् पदार्थानां निवृत्तिर्द्योत्यते नञा।**
**स्वभावतो निवृत्तानां रूपाभेदादलक्षिता ॥ २५० ॥**

वाक्ये नञ्प्रयोगे निवृत्तिरवसीयते। सा च न स्वतन्त्रा, नि[1]र्विशेषणस्याभावस्याप्रतीतेरिति पदार्थनिष्ठासौ। तत्र सन् पदार्थो नञ्प्रयोगमात्रान्निवर्तितुं नोत्सहते। शब्दान्तरप्रयोगेऽपि च पदानां वाच्यस्य न्यूनतातिरेकयोरनुपपत्तिः। तस्मात् स्वभावेनैव निवृत्तानां नञ् द्योतको निवृत्तेः। निवृत्तास्तर्हि कथं शब्देनोच्यन्त इति चेद्, न वस्त्वर्थः शब्दार्थः। उपचारसत्ताश्रयस्तु भावाभावसाधारण:[2] प्रतीतिप्रतिभासी शब्दवाच्य इति

'व्यपदेशे पदार्थानामन्या सत्तौपचारिकी' ( सं. ३९ ) इति कृतनिर्णयम्। तथा च भावाभावसाधारण्यात् प्रयोगस्यानभिव्यक्ता निवृत्तिर्नञापि द्योत्यत इति परपदार्थनिष्ठस्यावेदनाद् द्योतकत्वमुच्यते ॥ २५० ॥

249. 1. AE[3] °पादितश. 2. A नञः प्रयोगो दृष्टः 3. A om. नञर्थस्य
250. 1. A निर्विशेषणस्य, E[3] निर्विशेषणत्वस्य. 2. AE[3] रणप्रती.

यद्येवं नञः स्वतन्त्रः पदार्थ एव नास्ति यः प्रधानं स्यात्, सति वा तस्मिन्नभावात्मना तेन विशेष्यमाण उत्तरपदार्थः स्वभावात् प्रच्युतः कथमसत्त्वात् प्राधान्यं प्रतिपद्येत। असति च वर्तिपदार्थयोरभिसंबन्धे तदवच्छिन्नान्यपदार्थाभिधानमपि न कल्पेतेति कथं पक्षत्रयोपपत्तिः। अथोत्तरपदार्थगता क्रिया प्रतिषिध्यते तदा समास एव नास्तीत्याह।

**ब्राह्मणादिस्थया वाक्येष्वाख्यातपदवाच्यया।**
**क्रियया यस्य संबन्धो वृत्तिस्तस्य न विद्यते ॥ २५१ ॥**

क्रिया प्रतिषिध्यमाना पदान्तरोपादाना वा स्यात् वृत्तिपदवाच्या वा। प्रथमे कल्पे ब्राह्मणो न भुङ्क्ते, ब्राह्मणो नाधीत इति तिङन्तपदप्रतिपाद्य[1]या ब्राह्मणादिसमवायिन्या यस्य नञः क्रियया योगः तस्योत्तरपदेनासामर्थ्यात् समासो नास्ति। क्रियया हि नञोऽत्र संबन्धो न ब्राह्मणादिभिरुत्तरपदैः ततश्च समासस्यैवात्राभावाद् गुणप्रधानभावविकल्पो वर्तिपदार्थानां निरालम्बनः। पदार्थाङ्गभूतया त्वस्तिक्रियया नञो योगे समासो भवत्येव। तदानीं ह्युत्तरपदार्थेनैव सामर्थ्यम्, ब्राह्मणो नास्तीति। अव्यभिचारा हि सत्ता पदार्थस्याप्रयुज्यमानेऽपि क्रियापदे प्रतीयत इति सामर्थ्यलभ्यायास्तस्या निषेधे निवृत्ति[2]पदार्थकैरेवोत्तरपदैरुपात्तेऽर्थे द्योतकस्य नञः प्रयोगात् सिद्धान्तयिष्यते समासः ॥ २५१ ॥

नन्वनेन न्यायेनोत्तरपदस्वीकृतयान्ययापि क्रियया नञः सामर्थ्ये भवतु समास इत्यत आह।

**पाचकादिपदस्था चेन्नञा संबध्यते क्रिया।**
**तत्र सत्तानुपादानात् त्रिपक्षी नोपपद्यते ॥ २५२ ॥**

उत्तरपदेन पाचकादिना या गुणभावेन पच्यादिक्रियोपात्ता सा यदि नञा द्योतकेन वाक्य इव युज्यते तदा स्वार्थावच्छिन्नाया वाच्यत्वेन नञा सत्ताया अपरिग्रहात् पक्षत्रयं न घटते। द्योत्यार्थेनोत्तरपदेनैव संबन्धादुत्तरपदार्थप्राधान्यमेवैकं भवेत्। नहि नञः स्वतन्त्रः कश्चित् पदार्थो यः प्रधानं इति वा निरूप्यते द्योतकत्वाद् द्योत्यार्थनिष्ठत्वात्। तथा च यत्र द्योत्येन क्रियालक्षणेनार्थेनास्ति संबन्धः तत्र समासो न पाचकोऽपाचक इत्यादि। अत्र हि गुणभूतोत्तरपदेन क्रियाभिधीयत इति नञा निषेध्यतया तस्याः संबन्धः। ब्राह्मणादेस्तूत्तरपदस्य गुणभूतापि क्रिया न वाच्येति तेन नञः संबन्धाभावात् पूर्वोक्तपक्षत्रयानुपपत्तिः। तस्माद् द्योतकत्वं नञोऽनुपपन्नं पक्ष-

251. 1. AE[3] तत्र प°. 2. AE[3] °पाद्यतया. 3. निवृत्तप°.



भेदानुपपत्तिप्रसङ्गादिति वृत्तिविषये वाचकत्वमभ्युपगमनीयम्। तथा चासत्तावचनत्वान्नञो निवृत्तपदार्थकैरुत्तरपदैर्ब्राह्मणादिभिरभिसंबन्धात् पक्षत्रयमुपपद्यते। असत्तासामान्यवचनो हि नञ् तद्विशेषवचनैर्योगमनुभवन् यथाविवक्षं पूर्वो[1]त्तरान्यपदार्थप्रधानेतरभावसमाश्रयणेन वृत्तिमापद्यते ॥ २५२ ॥

यद्येवं

**सत्तयैवाभिसंबन्धो यदि सर्वत्र कल्प्यते।**
**असन्निति समासेऽस्मिन् सत्तान्या परिकल्प्यताम् ॥ २५३ ॥**

सर्वपदार्थानां सत्तायोगस्याव्यभिचारात् सत्तयैव पदार्थाङ्गभूतया न क्रियान्तरेण व्यभिचारिणा यदि नञो योगः कल्प्यते तदा[1] असन्नित्यत्रापि नञ्[2]समासे सत्ताया उत्तरपदनिबन्धनायाः संबन्धि सत्तान्तरं नञा प्रत्याख्यमानं कल्पनीयमापतति। न चैवं सत्ताभेदः प्रतीयते, एकस्या एवात्र निषिध्यमानायाः सत्ताया अवगमात् ॥ २५३ ॥

अत्रैवापरं दोषमाह।

**कृत्वान्ते च तुमुनन्ते च नञ्समासे न दृश्यते।**
**विशेषणविशेष्यत्वं नञा सत्ताभिधायिना ॥ २५४ ॥**

अकृत्वा अकर्तुमित्यत्राख्यातेनेव[1] कृत्वातुमुनादिसंबन्धयोग्यतया साध्यस्यैवार्थस्य प्रधानत्वेनाख्यायमानस्यासन्नित्येवमर्थेन नञा करोतेरभिसंबन्धोऽवच्छेद्यावच्छेदकभावो नोपपद्यते। न हि सत्तां निषेधता नञा करोतेः संबन्धो युज्यते, प्रतिषेध्येनैव प्रतिषेधस्य संबन्धात्। करोतेश्च सत्तात्मकत्वाभावान्नात्र प्रतिषेध्यत्वं भवेदिति कथमभिसंबन्धः। तस्मादसत्तावाचित्वे नञ उभयत्राप्यत्र नोपपत्तिरिति निषेधमात्रवचनोऽत्र नञ्। तथा चासन्नित्यत्रोत्तरपदार्थभूतां सत्तां निषेधतीति न द्वितीयसत्तापरिकल्पना आपतति। अकृत्वेत्यादौ तु करोतिमेव निषेधतीति संबन्धोपपत्तिः। किं त्वत्र ब्राह्मणादावनुपपत्तिः, ब्राह्मणार्थस्य सतो निषेद्धुमशक्यत्वात्। अत्रापि सन्नर्थः करोत्यर्थश्च भावात्मकः कथं निषेद्धुं शक्यते। एवं तर्हि स्वभावतो निवृत्तस्यार्थस्य द्योतको नञ् वाक्य इव वृत्तौ प्रयुज्यते, तत्रापि द्वयी गतिः। क्रियायोगमन्तरेण पदार्थस्य केवलस्यानुपपत्तेर्विशिष्टक्रियाश्रयो वार्थात्मा स्वभावतो निवृत्तो द्योत्यतां क्रियासामान्याश्रयो वा। [2]पूर्वत्र कल्पे सामर्थ्याभावाद् वृत्तिर्नास्ति। सति वा सामर्थ्ये

252. 1. Ab[3] °त्तरपदान्यपदार्थ°.

253. 1. AE[3] तदा सन्नि°. 2. AE[3] नञः समा°.

254. 1. IP. °तेनेव. 2. E[3] repeats अर्थात्मा स्वभावतो निवृत्तो द्योत्यतां क्रियासामान्याश्रयो वा before पूर्वत्र.

पक्षत्रयानुपपत्तिरित्युक्तम् । द्वितीये पक्षे सत्तालक्षणस्य क्रियासामान्यस्य नञ्द्योत्यस्य सामान्यवाचिनैवोत्तरपदेन संबन्धेऽनवस्थोक्ता । विशेषवाचिना त्वसंबन्ध इति द्योतकत्वमत्र नोपपद्यते । द्योतकत्वे हि द्योत्यार्थनिष्ठत्वात् सत्यपि संबन्धे उत्तरपदार्थप्राधान्यमेवैकं स्यात् । तस्माद् वाचकत्वमभ्युपेयम् । तथा च नञः स्वतन्त्रोऽर्थ इति यथायोगं तस्य गुणप्रधानभावोपपत्तौ पक्ष[3]त्रयविचारः ॥ २५४ ॥

तत्रासत्तावचनो नञिति यथा द्वितीया सत्ता नापतति यथा चाकृत्वेत्यादौ संबन्धो युज्यते तथोपपादयति ।

**क्रियायाः साधनाधारसामान्ये नञ् व्यवस्थितः ।**
**ततो विशिष्टराधारैर्युज्यते ब्राह्मणादिभिः ॥ २५५ ॥**

सामान्याभिधानेऽपि नञोऽ[1]सत्तावचनत्वेन प्रस्तावात् सत्तालक्षणात्र क्रिया । तथा ह्यभावात्मको नञोऽर्थो भावस्य सत्ताया निषेधरूपः । तस्याः साधनमकर्मकत्वात् कर्तृशक्तिः । निराश्रयायाः साधनभावानुपपत्तेः सामर्थ्यलभ्यस्तदाधार आश्रयोऽनाश्रितविशेषः सामान्यमस्तीत्येवंरूपोऽत्र निर्दिष्टः । तत्र वाचकत्वेन नञ् व्यवस्थितः प्रवृत्तः । किं विद्यमानोऽर्थोऽस्तीत्येवंरूपो नञो वाच्यः । नेति ब्रूमः । कथं तर्हि '**क्रियायाः साधनाधारसामान्ये नञ् व्यवस्थितः**' इत्युच्यते । स्वार्थमभावात्मकं तत्र निवेशयतीत्येवमेतदुच्यते, ततश्चाभावोपरक्तमस्तिक्रियासाधनाधारसामान्यं वृत्तिविषये[2] नञ्वाच्यमिति नास्तीत्येवंरूपो नञोऽर्थः । तत्र किं नास्तीति विशेषाकांक्षा तदुत्तरपदैः पूर्यते । तथा च ततः सा[3]मान्यावस्थानाद्धेतोर्विलक्षणैः सत्ताविशेषसाधनाधारवचनै[4]र्ब्राह्मणादिशब्दैः सम्बध्यते नञिति तदर्थयोः सामान्यविशेषभावेन विशेषणविशेष्यभावोपपत्तिः । सामान्यरूपं ह्यविद्यमानं विशिष्टैरविद्यमानैर्युज्यते गोत्वं शाबलेयमित्यादिभिरिव । तत्र ब्राह्मणस्या[4]सत्त्वमिति यदा कामचाराद् विशेषणविशेष्ययोर्विवक्षा तदा पूर्वपदार्थप्रधानता । असन् ब्राह्मण इति तु सामानाधिकरण्ये स्वपदार्थविश्रान्तावुत्तरपदार्थप्रधानता । असद् ब्राह्मण्यमस्येत्येवमन्यार्थगामित्वे वर्तिपदार्थयोरन्यपदार्थप्राधान्योपपत्तिः । एवं विशेषे सामान्यस्याव्यभिचारात् पाचकादौ पच्यादिक्रियाविशेषानुगतसत्तात्मकक्रियासामान्याश्रयपक्षभेदोपपत्तिः । एवं करोतिना[5] सत्तात्मनैव युज्यते न विशेषरूपेणेति विशेषे सत्तामेव समवायिनीं नञर्थोऽसत्सामान्यं[6] निषेधयोग्यतयाकृत्वाकर्तुमित्यादावास्कन्दति । असन्नित्यत्रापि प्रकरणाद् विशेषनिवेशनीमेव सत्तामसत्तासामान्यं निषेध्यतयावलम्बते । अनवच्छिन्नविषयस्यासत्त्वस्य प्रयोजनाभावेनाप्रतिपाद्यत्वात् । ब्राह्मणादिरेव हि कश्चित् सन् निषेद्धुमत्रोपादीयते, न सन् ब्राह्मण इति । प्रकरणात्तु विशेषावसाये ब्राह्मणादेपदप्रयोगानादरः । तथा च ब्राह्मणादिरि[7]वात्राप्यर्थ इति सामान्यविशेषयोर[8]वायं विशेषणविशेष्यभावः । न हि द्वयोः सामान्ययोः प्रयोगोऽस्ति, नैराकाङ्क्ष्यानुपपत्तेरिति सत्तान्तरपरिकल्पनादोषानवसरः[9] । सर्वत्र चात्रोत्तरपदार्थसदृशप्रतिपत्तिः । अन्यत्राध्यारोपितस्य हि स्वतो निवृत्तस्य निषेधः सुवचः । तदित्थं वाचकत्वमभ्युपगम्य सर्वमुपपद्यते ॥ २५५ ॥



द्योतकस्य तर्हि वाक्ये नञो वृत्तौ वाचकत्वं कथमुपपद्यते इति चेदाह ।

**वृत्तौ यथा गताद्यर्थमुपादाय निरादयः ।**
**युज्यन्ते साधनाधारैर्नञ्समासेऽपि स क्रमः ॥ २५६ ॥**

निष्कौशाम्बिः अतिखट्वः प्रपर्ण इत्यादिवृत्तिपदेषु पूर्वपदभूता निरतिप्रभृतयोऽसत्त्ववचना अपि वाक्ये दृष्टाः सत्त्वभूतार्थाभिधायिनः । तथाहि—गतक्रान्तादिसाधनक्रियावचनाः कौशाम्ब्यादिभिरपादानादिसाधनशक्त्याधारैर्द्रव्यैः सम्बध्यन्ते । यदि चासत्त्ववचना एव स्युस्तदा तैः सत्त्ववचनैः संबन्धो न स्यादिति तदन्यथानुपपत्त्या निष्क्रमणादिक्रियोपसर्जने साधनशक्त्याधारे द्रव्ये वृत्तिरेषामनुमीयते । वाक्यपरिदृष्ट एव च तत्र वृत्तिरभिधानशक्तिनियमादिति नातिप्रसङ्गः । यदाह वाक्यकारः

'तदर्थगतेर्वा'

इति । येनार्थेन निरादेर्भवति कौशाम्ब्यादिना सामर्थ्यं तदन्यथानुपपत्त्या तस्यैव प्रतीतेरित्यर्थः । एवं यथात्र वृत्तौ पूर्वपदं पदान्तरसंभिन्नार्थतया वाक्यपरिदृष्टं विशेषमन्तर्भावयति तथैवात्राब्राह्मणादावि[1]ति साम्यम्[3] । अत्रापि ह्युत्तरपदार्थसंबन्धान्यथानुपपत्त्या नञोऽसत्सामान्यवाचकत्वं परिकल्प्यत इति वाचकत्वोपाया[4] सैवानुपूर्वी ॥ २५६ ॥

एवमप्यसत्सामान्याभिधायित्वे कथं पक्षत्रयोपपत्तिः, पूर्वोत्तरपदार्थयोर्गुणप्रधानभावानियमे सति हि त्रयः पक्षा उपपद्येरन् । स तु कथमत्र नियम इत्याह ।

**तत्रासति नञो वृत्तेर्ब्राह्मणक्षत्रियादिभिः ।**
**विशेषणविशेष्यत्वं कल्प्यते कुब्जखञ्जवत् ॥ २५७ ॥**

द्वयोरपि खञ्जकुब्जशब्दयोर्गुणनिमित्तत्वात् विशेषणविशेष्यभावं प्रत्यनियम उक्तो भाष्ये खञ्जकुब्जः, कुब्जखञ्ज इति । एवमसत्सामान्ये नञो वाचकत्वेन वर्तनात्

---

3. A विचारः न पक्षत्रये तत्र सत्त्ववचनो नञिति ॥ २५७ ॥

255. 1. E[3] नञोऽसत्ता°. 2. E[3] °यासाधनाधानाधारसा°. 3. E[3] तत्सामा°. 4. E[3] °णस्य सत्त्व°. 5. E[3] करोतिसत्ता°. 6. A° मान्यनिषेध°.

7. IP °णादिरित्येनात्रा°. 8. A om. एवायं विशेषणविशेषभावाः । न हि द्वयोः सामान्ययोः. 9. P °नवतरः.

256. 1. E[3] सत्त्वव°. 2. A त्तिरेवानु°. 3. A साम्ये. 4. AE[3] °पायः से इ°.

तद्विशेषवचनैर्ब्राह्मणादिभिर्यथारुचि विशेषणविशेष्यत्वं गुणप्रधानभावः पर्यायेण घटते ॥ २५७ ॥

तथा चाब्राह्मणोऽक्षत्रिय इत्यादौ किं सिद्धमित्याह।

**कामचारे च सत्येवमसतः स्यात् प्रधानता।**
**गुणत्वमितरेषां च तेषां वा स्यात् प्रधानता ॥ २५८ ॥**

'सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात्'

इति खञ्जकुब्जादिवदनियमे यदासत्सामान्यं नञर्थः प्राधान्येन विशेष्यतया विवक्ष्यते तदा पूर्वपदार्थप्रधानता इतरेषामुत्तरपदार्थानां ब्राह्मणादीनां गुणत्वविवक्षायां सत्याम्। यदा तु तेषामुत्तरपदार्थानां प्राधान्यं विवक्ष्यते तदोत्तरपदार्थप्रधानो नञ्समासः। अत एव च पूर्वोत्तरपदयोरभिसंबन्धेऽर्थान्तरविषये विवक्षितेऽन्यपदार्थप्राधान्यमप्युक्तं भवति। वाक्ये तु निषेध्यनिष्ठतया निषेधस्यान[1]वगतेर्न स्वतन्त्रो नञः[2] पदार्थ इत्यवाचकत्वाद्[3] द्योतकत्वम्। अतश्च गुणप्रधानभावे विवक्षानियमाभावात् तत्र पक्षत्रयानुत्थानम्। अत एव चादिव[4]दलिङ्गसंख्यत्वमव्ययधर्मो नञर्थस्य वाक्ये न तु वृत्तौ सत्त्वभूतार्थवा[5]चित्वात् ॥ २८५ ॥

इत्थं पक्षत्रयोपपत्तौ समर्थितायां प्रथमं भाष्य उपक्षिप्तमुत्तरपदार्थप्राधान्यं परीक्ष्यम्। तथाहि विरोधादसता कथं ब्राह्मणादिर्विशेष्येतेत्यत आह।

**प्राधान्येनाश्रिताः पूर्वं श्रुतेः सामान्यवृत्तयः।**
**विशेष एव प्रक्रान्ता ब्राह्मणक्षत्रियादयः ॥ २५९ ॥**

सतो निषेद्धुमशक्यत्वान्निवृत्तिविशिष्ट एव विशिष्टेऽर्थे ब्राह्मणादयः शब्दा[2] वाचकत्वेनात्रोपक्रम एव प्रवृत्ताः। यदा तु तेषां भावरूपेऽप्यर्थे श्रुतेः शब्दस्य रूपमी[3]दृशमेव तदासौ स्वार्थरूपा निवृत्तिर्द्यो[3]त्यते नञा। नञ्पदप्रयोगे हि स विशेषः प्रकाशत इति विरोधाभावात् कल्पते विशेषणविशेष्यभावः। प्राधान्येनाश्रितः[4] इत्युत्तरपदार्थप्राधान्यपक्षमवलम्बते ॥ २५९ ॥

एतदेव निदर्शनेन व्युत्पादयति।

**यथा गौरादिभिस्तेषामवच्छेदो विधीयते।**
**असताप्यनभिव्यक्तं तादात्म्यं व्यज्यते तथा ॥ २६० ॥**

258. 1. AE[3] °धस्यावगतेर्न°. 2. AE[3] नञ्पदार्थ°. 3 A °त्वादद्योत°. 4. A °दिवदलिङ्गत्वासंख्य° E[3] दिवदलिङ्गतासंख्यात्व°. 5. AE[3] न्तार्थाभिधायित्वात.

259. 1. AE[3] धादसन् ब्रा°. 2. P शब्दा. 3. A बोध्यते, E[3] वाच्यते, 4 AE[0] °न्येनाश्रुत इत्यु°.

260. 1. AE[3] सामान्यश्रुता. 2 AE[3] तथा बुद्धि°.



गौरः शुक्लः कृष्णो ब्राह्मण इत्यादौ यथा गौरादिभिर्विशेषणैरवच्छिद्यन्ते सामान्यभू[1]ता ब्राह्मणादयस्तथास[2]द्विशेषवचनाः श्रुतिसारूप्यादनवगतविशेषा नञा विशेष्यन्ते।

ननु गौरादयो विद्यमानार्थगतमेव विशेषमादधाना युक्तं यद्विशेष[1]णं स्युः। नञा तूत्तरपदार्थोन्मूलकेन कथं विशेषणविशेष्यभावः। नञ्प्रयोगे ह्युत्तरपदार्थोऽसन्नित्यवधार्यते। तथा चासत्त्वादुत्तरपदार्थस्याप्रयोग एव ब्राह्मणादिशब्दानां प्राप्नोतीत्याशङ्क्याह।

**यथा सत्ताभिधानाय सन्नर्थः परिकल्प्यते।**
**तथा[2]सत्ताभिधानाय निरुपाख्यो[3] विकल्प्यते ॥ २६१ ॥**

इह पदादुच्चरिताद् भावाभावसाधारणोऽर्थः प्रतीयते। न चासौ तथाविधो बाह्यः,[4] तस्य भावैकनिष्ठत्वात्। स एव चेच्छब्दैरुच्यते तदा तस्य सत्ताव्यभिचारात् तां प्रत्याकांक्षानुपपत्तेः सन् ब्राह्मण इति नावकल्पेत विशेषणविशेष्यभावः। अवकल्पते च। तस्मादुपचारसत्तारूढोऽर्थः पदवाच्यत्वेन कल्प्यते सामान्येन भावाभावसंबन्धक्षम इत्यसन् ब्राह्मण इत्यत्रापि परिकल्पितार्थनिष्ठत्वेन नञ् प्रयोगो न विरुध्यते। बुद्धिर्ह्यस्य बहिः सदसत्त्वमनपेक्ष्याकारं निरूपयन्ती विरोध्यविरोधिविशेषणसमन्वयक्षमं तं पदार्थीकरोतीति प्रागेव निर्णीतम्। तत्र यथा नीलोत्पलमिति बुद्ध्या भागभेदकल्पनया सामान्यात्मना वस्तु निरूपितं नीलविशेषणेन संबध्यते तथा भावाभावसाधारण्येन बुद्ध्या गृहीतस्य निवृत्तिर्विशेषणं युज्यते। न ह्युत्पलं नाम किंचित् सामान्यं जगत्यस्ति वस्तु यन्नीलसंबन्धाद् विशेषमाश्रयेत्। एकमेव हि तदपि[5] निर्भागं नीलोत्पलमिति बुद्ध्यैव भागभेदोपपत्तिः। एवमिहाप्यब्राह्मण इति निर्विषयस्य प्रतिषेधस्या[6]प्रवृत्तेः सत्ता निषेध्यत्वेनोपचर्यते। बुद्धिस्थायाश्च सत्ताया बाह्यत्वेनारोपाद् बाह्यसत्ताविषयः प्रतिषेधोऽवतिष्ठते तेनैतदचोद्यं बुद्धिप्रतिभासस्यापि स्वेनात्मना सत्ता कथं निषेध इति ॥ २६१ ॥

एवं निवृत्तपदार्थकस्यापि ब्राह्मणशब्दस्य प्रयोग उपपादिते तत्सदृशाधिकरणप्रतिपत्तिं नञ्[1]समासे प्रतिपादयितुमाह।

**क्षत्रियादौ पदं कृत्वा बुद्धिः सत्तान्तराश्रया।**
**जात्या भिन्नां ततः सत्तां प्रसक्तामपकर्षति ॥ २६२ ॥**

261. 1. A विशेषणानि. 2. AE[3] तथा सत्ता°. 3 A °पाख्योऽपि कल्पते. 4. P ब्राह्म. 5. AE[3] तदविभागं. 6. A °धस्य प्रवृ°, E[3] °षयस्याप्रतिषेधस्य प्रवृ°.

ब्राह्मणसत्ताविषया बुद्धिर्यदा कुतश्चिद् भ्रान्तिकारणात् क्षत्रिये प्रवर्तते तदा ब्राह्मणशब्दस्तत्र प्रयुज्यते। सोऽयं मिथ्याध्यवसायो यदा तत्त्वज्ञानान्निवर्तते तदा नञः प्रयोग इत्ययं विषयो नञ्समासस्य। अब्राह्मणोऽयं क्षत्रिय इति क्षत्रियसामानाधिकरण्यात् तदवगतिः। एवं च नञ्[2]प्रयोगादुपजाता सम्यग्बुद्धिर्ब्राह्मणत्वैकार्थसमवायिनीं सत्तां क्षत्रिये ब्राह्मणशब्दप्रयोगात् प्रसक्तामपकर्षति ततो[3] निवारयति। नायं ब्राह्मणो मिथ्या त्वेवमवसितस्तत्सदृशो[4]ऽब्राह्मणोऽयमिति, सदृशः क्षत्रियादिरेव समासार्थः सम्पद्यते न लोष्टादि, समारोपनिबन्धनस्य सादृश्यादेरभावात्। तथा चोक्तं

'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थः[5]' इति ॥ २६२ ॥

इह कथं नञ्समासः अभाव इति। न ह्यत्रोत्तरपदार्थसदृशार्थसंप्रत्ययः अपि [1]तु तन्निषेधः प्रतीयते भावस्योत्तरपदार्थस्य। तस्य चासतः कथं भावशब्दविषयतेत्यत आह।

**अभाव इति भावस्य प्रतिषेधे विवक्षिते।**
**सोपाख्यत्वमनाश्रित्य प्रतिषेधो न कल्पते ॥ २६३ ॥**

प्रतिषेधविषयप्रकॢप्त्यर्थमत्रापि बुद्ध्या निरूपितमाकार[2]मवलम्ब्य भावशब्दप्रयोगात् तस्य श्रुतिसा[3]म्यादसद्विषयतानवगमात् तदवगमाय नञ्प्रयोग उपपद्यते। निरुपाख्ये हि व्यामोहाद् भावतत्त्वसमारोपे तत्त्वाध्यवसायान्नञ्प्रयोग इत्यर्थः ॥ २६३ ॥

एवं चैतत्।

'अथवा सर्व इमे शब्दा गुणसमुदाये वर्तन्ते'

(M. Bhā I. p. 411; l. 15.)

इति दर्शनमुपक्षिप्तमत्र भाष्ये। तदवलंबनेनाप्याह।

**अनेकधर्मवचनैः शब्दैः संघाभिधायिभिः।**
**एकदेशेषु वर्तन्ते तुल्यरूपाः स्वभावतः ॥ २६४ ॥**

जातिगुणक्रियालक्षणो धर्मोऽत्र गुणशब्देन विवक्ष्यते इति धर्मपदेनाह। समुदायस्य[1] शब्दात् प्रतीतेः स एव शब्दार्थो न्याय्यः। तच्च[2]

262. 1. AE[3] °मेऽपि प्र°. 2. A E[3]च गुणप्रयो. 3. E[3] om. ततो निवारयति. 4. AE[3] °शो ब्रा°. 5. AE[3] ह्यर्थगति.

263. 1. IP तु निषेधः. AE[3] °तमाकारान्तरमव°. 3. AE[3] तिसामान्यात्.

264. 1. AE[3] समुदायस्यैव. 2. AE[3] ततश्च.



'तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम्' (Ibid. l. 16.) इत्युक्तम्। यस्य परिपूर्णा धर्मा[3] जात्यादयः श्रुतादयश्च स मुख्यो ब्राह्मणः। तदभिधायी ब्राह्मणशब्दो रूढः। तेन तुल्यश्रुतिरवयवे वर्तते।

'समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते। तद्यथा
तैलं भुक्तं घृतं भुक्तम्' (Ibid. l. 19. 20)

इत्युक्तम्। यद्यपि च संघाभिधाय्येकदेशाभि[4]धायी चार्थभेदात् स्वभावतोऽत्यन्तभिन्न एव शब्दः तथापि श्रुतिसाम्यादर्वाग्दर्शना भेदं नावगच्छन्तीत्यभेदमाश्रित्य समुदायावयववृत्तित्वं कथ्यते। तथा च ब्राह्मणजातिरहिते क्षत्रिये विद्याविनयलक्षणैकदेशाश्रयो ब्राह्मणशब्दप्रयोग इति तस्यैकदेश[5]वृत्तिता श्रुतिसारूप्यादनवगता नञ्प्रयोगादवधार्यते।

तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः, (Ibid. l. 17) इति वा ब्राह्मणक[6] उच्यते, यो गुणहीनो जातिमात्रेण तु ब्राह्मणः। इत्थं चात्र गुणसमुदायवृत्तित्वात् पूर्वोत्तरपदयोः सामानाधिकरण्यमुपपद्यते। अत्र हि नञा यस्यैव गुणस्य स्वाभाविकी निवृत्तिः सैव द्योत्यत इत्यवशिष्टानां गुणानामर्थात् सद्भावोऽवगम्यते। तत्र पूर्वमुपचारसत्ताश्रयेणोक्तम्। इदानीं तु पारमार्थिकस्यैव कस्यचिद् धर्मस्य नञा निवर्तनेऽपि परिशिष्टमात्राकलापे समुदायाध्यासेन शब्दप्रवृत्तिर्ननिर्विषयेत्येतदाख्यायते। उभयोरपि च तयोरवयवयोः समुदायात्मनाध्यासात् तस्यैव निषेधस्तत्रैव च शब्दप्रवृत्तिरिति ॥ २६४ ॥

नैवं चोद्यं—उत्तरपदार्थानुपादानांशनिषेधात् कथमुत्तरपदेन समन्वय इति। तथाहि—

**यथैकदेशकरणात् कृत इत्यभिधीयते।**
**अकृतश्चेति संघातः स एवाब्राह्मणे क्रमः ॥ २६५ ॥**

एकदेशस्य निष्पत्तेस्तदपरस्य चैकदेशस्यानिष्पत्तेः कृताकृतः संघातोऽभिधीयते। अवयवात्मकत्वात् समुदायस्यावयवधर्मोपचारो न विरुध्यते। एवं गुणसमुदायस्यैकदेशप्रवृत्तिनिवृत्तिभ्यामब्राह्मणशब्दवाच्यता[1] ॥ २६५ ॥

अत्र दोषमाह।

**ब्राह्मणोऽब्राह्मणस्तस्मादुपन्यासात् प्रसज्यते।**
**अकृते वा कृतासङ्गादवशिष्टं कृताकृतात् ॥ २६६ ॥**

3. AE[3] धर्मजात्या°. 4. AE[3] एक देशाश्रयो ब्राह्मण शब्दप्रयोग इति तस्यैकदेशाभिधायी. 5. A °देशाप्रवृत्तिता 6. A °ण उ°, E[3] °णःक उ°.

265. 1. AE[3] °ब्दवाच्यं.

एकदेशं संघातात्मनाऽवसाय ब्राह्मणोऽयमिति कथ्यते। एकदेशान्तरस्यासत्त्वात् पुनः स एवाब्राह्मणः इति प्राप्नोतीति विरोधापत्तिः। यदि वा सर्वथैवाकृते समुदाये समर्थसाधनसन्निधेर्निर्वृत्तिसंभावनया कृतशब्दो यथा प्रयुज्यते तद्वत् क्षत्रियादौ ब्राह्मणसमानधर्मदर्शनात् ब्राह्मणशब्दवाच्यमात्राकलापं प्रत्यस्य ब्राह्मणत्वसंभावनया ब्राह्मणशब्दप्रयोगे सति यदा नञा मुख्यार्थतानि[1]वर्तनेन गौणार्थतेदृशी प्रकाश्यते[2] तदा कृताकृतशब्देन तुल्योऽयं नञ्समास इति द्वितीयार्धेन चोद्यं निवारितम् ।। २६६ ।।

एकदेशे च ब्राह्मणशब्दोऽ[1]मुख्य इति सादृश्यान्मुख्यभ्रान्तिः स्यात्। तामपाकर्तुं नञ् प्रयुज्यमानो भवति विशेषणमित्याह ।

अमुख्यसंभवे तत्र मुख्यस्य विनिवृत्तये ।

शास्त्रान्वाख्यानसमये नञ् प्रयुक्तो विशेषकः ।। २६७ ।।

उपक्रम एवामुख्येऽर्थे ब्राह्मणशब्दः प्रयुक्तोऽनधिगतविवक्षितार्थ इत्यब्राह्मणशब्दस्य लौकिकस्याखण्डस्यान्वाख्यानार्थमेवं विभागे विवक्षितार्थसिद्ध्यर्थमुपपद्यते नञ्प्रयोग इत्यर्थः ।। २६७ ।।

अत्रोत्तरपदार्थप्राधान्ये भाष्ये चोदितम्—

'अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं
प्राप्नोति' ( M. Bhā. I. p. 410, l. 8-9. )

इति। तत् कथम्। यावता राजपुरुषादिवत् पूर्वपदार्थोपहितविशेषस्योत्तरपदार्थस्य प्रतीतेरित्याशंक्य भाष्यकाराभिप्रायमाचष्टे ।

पदार्थानुपघातेन दृश्यते च विशेषणम् ।

राजपुरुषादौ राजाद्यर्थः पुरुषाद्यर्थस्यानुच्छेदेन विशेषोपसंहारात् युक्तं विशेषणम् । इह तु नञर्थ उत्तरपदार्थोच्छेदकः कथं विशेषणं स्यात्। अनर्थक एवात्र नञ्। तथा च ब्राह्मणमात्रस्यानयनं स्यादिति भाष्यकाराभिप्राय इत्यर्थः।

अथ न सर्वथोत्तरपदार्थनिवृत्तिरत्र, अपि तु

अथ जातिमतोऽर्थस्य कश्चित् धर्मो निवर्तितः ।। २६८ ।।

नञेति शेषः। गुणसमुदाये जातेः प्रवृत्तिहेतुत्वात् तद्वतः समुदायस्य प्रदेशमात्रस्य निवृत्तिर्नञा द्योत्यते। तदपरस्य तु प्रदेशस्य स्थितिरिति भवति विशेषावसायः ।। २६८ ।।

266. 1. A °ता निवर्तते न गौ°. 2. AE[3] °श्यते यति तदा.
267. 1. AE[3] °ब्दो मु°.
268. 1. A प्रतितिरि°.



यद्येवं

अवश्यं ब्राह्मणे कश्चित् क्वचिद् धर्मो न विद्यते ।

विशेषावचनात्तत्र नञः श्रुतिरनर्थिका ।। २६९ ।।

नहि सर्वो ब्राह्मणः परिपूर्णगुणो लभ्यत इति ब्राह्मणशब्दः प्रदेश[1]वृत्तिरेव सर्वः। पूर्णगुणेऽपि जातिमात्रसंस्पर्शेन प्रवृत्तेः। तथा च नञ्प्रयोगेऽपीत्यनर्थको नञ् ।। २६९ ।।

किंचास्मिन् पक्षे

अविशिष्टस्य पर्यायो नञा विशिष्टः प्रसज्यते ।

अन्वाख्यानाद्धि साधुत्वमेवंभूते प्रतीयते ।। २७० ।।

य एवार्थो ब्राह्मण[1]शब्दस्य निवृत्तैकदेशः स एवाब्राह्मणशब्दस्येति नञ्समासवचनेन प्रज्ञापितसाधुभावोऽब्राह्मणशब्दो ब्राह्मणशब्दस्य पर्यायः प्राप्नोति ।। २७० ।।

एतत् समाधत्ते

पदार्थानुपघातेन यद्यप्यत्र विशेषणम् ।

उपचारसतोऽर्थस्य सावस्था द्योत्यते नञा ।। २७१ ।।

एकदेशोऽप्यत्र न मुख्यो ब्राह्मणजातीय इति बुद्ध्या तमुपचर्य तच्छब्दप्रयोगः। तथा चास्य सोपचरितलक्षणावस्था नञा प्रकाश्यत इति पदार्थानुपघातेनैवेदमपि विशेषणं युज्येत इत्यर्थः ।। २७१ ।।

तथाहि

विशेष्येषु यथाभूतः पदार्थः समवस्थितः ।

तथाभूते तथाभावो गम्यते भेदहेतुभिः ।। २७२ ।।

राजपुरुषनीलोत्पलादावपि यथावस्थितविशेष्यपदार्थनिष्ठो विशेषण[1]पदार्थ इति भेदहेतुभिर्विशेषणैर्यथायथमर्थोऽवगम्यते, एवमिहापि ब्राह्मणपदार्थो बुद्ध्योपचरितैकल्प इत्येवं नञ्पदप्रयोगादवगम्यत इति युक्तं विशेषणम् । तदुक्तं भाष्ये

'अथेह राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति। अस्त्यत्र विशेषः[2]। राजात्र विशे[3]षकः प्रयुज्यते। तेन राजविशिष्टस्यानयनं भवति। इहापि तर्हि नञ् विशेषकः प्रयुज्यते। तेन नञ्विशिष्टस्यानयनं भविष्यति'
( M. Bhā. I, p. 410, l. 25–p. 411, l. 1–3 )

इति ।। २७२ ।।

269. 1. E[3] प्रवृत्तिरेव सर्वः.
270. 1. E[3] °भावो ब्रा°.
272. 1. A, विशेषणार्थ. 2. A विशेषणम्. 3. AE[3] विशेषणं.

अत्र चोदितम्—

'कः पुनरसौ' ( Ibid l. 3. )

तत्रोक्तम्

'निवृत्तपदार्थकः' ( Ibid l. 3. )

इति। एतदाक्षिपति।

**निवृत्तेऽवयवस्तस्मिन् पदार्थे वर्तते कथम् ।**
**नानिमित्ता हि शब्दस्य प्रवृत्तिरुपपद्यते ॥ २७३ ॥**

बुद्धिपरिगृहीताकारे[1]ऽपि शब्दः प्रवर्तमानो बाह्यगतं बीजमवलम्बत एव। तथा च दृश्यविकल्पयोरेकत्वाध्यवसायात् बाह्यमेव शब्दार्थं मन्यन्त इति क्षत्रियादौ ब्राह्मणादेरेकदेशवाचित्वादवयवशब्दस्य कथमसति निमित्ते प्रवृत्तिः, येन सावस्था नञा द्योत्यत इत्युच्यते ॥ २७३ ॥

अथ स्वाभाविकी निवृत्तिरिति क्षत्रियेऽपि ब्राह्मणशब्दस्तदा

**आरच्छब्दवदेकस्य विरुद्धेऽर्थे स्वभावतः ।**
**शब्दस्य वृत्तिर्यद्यस्ति नञः श्रुतिरनर्थिका ॥ २७४ ॥**

यथा दूरान्तिकार्थवृत्तिराराच्छब्दस्तथा ब्राह्मणक्षत्रियवृत्तिः स्वभावतो ब्राह्मणशब्दो रूढ इत्युपगमे[1] विनापि नञ्प्रयोगं प्रकरणादिवशात् क्षत्रियावगतिर्ब्राह्मणशब्दाद् भविष्यतीति किं नञा कृत्यं येन नञ्समासोऽन्वाख्यायते। न ह्यवश्यमनेकार्थानां पदान्तरप्रयोगाभिव्यङ्ग्यविशेष[2]त्वमुपलब्धम्। तदुक्तं भाष्ये

'यदि स्वाभाविकी निवृत्तिः किं नञ् प्रयुज्यमानः करोति'
( M. Bhā. I. p. 411. l. 4–5. )

इति ॥ २७४ ॥

अतोऽनन्तरमुक्तं

'अथ वाचनिकी, तद् वक्तव्यं नञ् प्रयुज्यमानः
पदार्थं निवर्तयति' ( I bid, l 5–6. )

इति। एतद् व्याचष्टे।

**अथ स्वभावो वचनादन्वाख्येयत्वमर्हति ।**
**तद्वाच्यमप्रसिद्धत्वान्नञार्थो विनिवर्त्यते ॥ २७५ ॥**

---

273. 1. A °कारोऽपि.
274. 1. A °त्ववगमे. 2, AE³ शेषकत्वम्.



स्वभावोऽपि दुरवधारणत्वान्नञ् इत्यनेन यदि शब्देन ज्ञाप्यते तदेदमपि वचनेनान्वाख्येयम्, नञ्प्रयोगे पदार्थानां प्रसिद्धोऽर्थो विनिवर्तत इति। अथास्यायं स्वभावः प्रयोगपारम्पर्यात्रसेयः, तदा सर्वस्यैवं स्वविषये व्यापारे शब्दान्तरानपेक्षणादुत्तरपदेनापि निवृत्त्यभिधाने नञ् नापेक्षितव्य इत्यर्थः ॥ २७५ ॥

अतोऽनन्तरं

'कीडप्रतिकीडवद्' ( I bid, l. 7-8. )

वाचनिको निवृत्तिः।

'यद्येवं नञो माहात्म्यं न जातुचिद् राजानो हस्त्यश्वं बिभृयुः,'
( Ibid, l. 8·9 )

इति दूषयित्वा स्वाभाविकी निवृत्तिः सिद्धान्तिता।

तद्यथा 'समन्धकारे द्रव्याणां प्रदीपनिमित्तं दर्शनम्' ( Ibid, l. 11 )
इत्युक्तम्। एतद् व्याचष्टे।

**यद्यप्युभयवृत्तित्वं प्रधानं तु प्रतीयते ।**
**प्रस्थानं गम्यते शुद्धे तदर्थेऽपि न तिष्ठतौ ॥ २७६ ॥**

गतिनिवृत्तिवचनस्तिष्ठतिः प्रसिद्ध इत्यन्तरेण प्रशब्दमुपसर्गं प्रस्थानार्थोऽपि तमर्थमवगमयितुमपर्याप्तो यथा एवं क्षत्रियवचनोऽपि ब्राह्मणशब्दो नञमन्तरेण न तदर्थनिश्चयाधायीत्यर्थः। न हि प्रशब्दस्य प्रस्थानमर्थः तिष्ठतेर्निरर्थकत्वप्रसङ्गादित्यसौ तिष्ठत्यर्थः प्रशब्दस्तु द्योतकः। एवमत्रापि विज्ञेयम् ॥ २७६ ॥

ननु च यदि क्षत्रिये मुख्यो ब्राह्मणार्थो नास्ति तदा[1] किमर्थं संदिग्धार्थो ब्राह्मणशब्दः तत्र वाचकोऽभ्युपगम्यते तस्य चायममुख्योऽर्थो नञ् प्रयोगादवधार्यते इति

'यदि पुनरयं निवृत्तपदार्थकः किमर्थं ब्राह्मणशब्दः प्रयुज्यते' ( Ibid. l. 12–13. )

इत्युक्तं भाष्ये। तदाह।

**किमर्थमतथाभूते सति मुख्यार्थसम्भवे ।**
**भेदे ब्राह्मणशब्दस्य वृत्तिरभ्युपगम्यते ॥ २७७ ॥**

व्याख्यातार्थोऽयं श्लोकः ॥ २७७ ॥

अत्र परिहारभाष्यम्—

'एवं यथा विज्ञायेत अस्य पदार्थो निवृत्त' इति। नेति ह्युक्ते सन्देहः स्यात् कस्य पदार्थो निवृत्त[2] इति। तत्रासन्देहार्थं ब्राह्मणशब्दः प्रयुज्यते' ( M. Bhā. I. 411, l. 12–14. )

इति। एतद् व्याचष्टे।

अयं पदार्थ एतस्मिन् क्षत्रियादौ न विद्यते ।
इति तद्वचनः शब्दः प्रत्ययाय प्रयुज्यते ॥ २७८ ॥

अयमर्थः । अज्ञानाद् दुरुपदेशाद् वा केनचिद् ब्राह्मणार्थः क्षत्रियेऽध्यवसितः[3] । स एवं बोध्यते नायं ब्राह्मणोऽब्राह्मणोऽयमिति । क्षत्रिय इति तूक्ते ब्राह्मणार्थस्य तत्र-निषेधो न कृतः स्यादिति विवक्षितो[4]ऽर्थो न प्रतीयेत । तस्माद् बुद्ध्या तत्र ब्राह्मणा-र्थमाश्रित्य नञो विषयप्रक्लृप्तौ तदर्थनिवृत्तिः[5] कथ्यत इति युक्तम् ॥ २७८ ॥

बौद्धश्च[1] शब्दार्थः समारोपितरूपः सर्वत्र युज्यत एवेत्याह

बुद्धेर्विषयतां प्राप्ते शब्दादर्थे प्रतीयते ।
प्रवृत्तिर्वा निवृत्तिर्वा श्रुत्या ह्यर्थोऽनुषज्यते ॥ २७९ ॥

इह यः शब्दादर्थः प्रतीयते स व्यव[2]हाराङ्गं बहिः सदसत्त्वमनपेक्ष्येति शब्दा-दर्थाः प्रती[3]यन्त इत्यादिना पूर्वं निर्णीतम् । तथा च भावाभावसाधारणशब्दैः स्वार्थः समुल्लिख्यत इति तत्र पदार्थेऽनवस्थिते यथायोगं भावरूपमभावरूपं वा विशेषणमुप-कल्पत एव ॥ २७९ ॥

तत्रोत्तरपदार्थप्रधाने नञ्समासे

'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थ गतिः'

इत्युक्तत्वात् यत्रैव ब्राह्मणशब्दस्य भ्रान्त्या प्रयोगस्तत्रैव तदर्थनिषेधे तदधिकरणसंप्रत्ययो न सर्वत्रेत्यतिप्रसङ्गाभावार्थं

'सन्देहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते'

इत्यादि भाष्यम् । तद् व्याचष्टे ।

असम्यगुपदेशाद्वा निमित्तात् संशयस्य वा ।
शब्दप्रवृत्तिर्न त्वस्ति लोष्टादिषु विपर्ययात् ॥ २८० ॥

दुरुपदेशात् क्षत्रिये ब्राह्मणशब्दप्रवृत्तिः पिङ्गलकेशादेरुपदिष्टस्य विषयविवेकानव-धारणात् कस्यचिद् भवति । सन्देहनिमित्तं गुणः संदेहशब्देनात्रोक्तः । तथा हि सादृश्य-लक्षणात् संशयनिमित्तात् तत्र शब्दप्रवृत्तिरित्यत्यन्तविसदृशेषु लोष्टादिषु ब्राह्मणशब्दप्रवृत्त्य-भावादब्राह्मणशब्दादुत्तरपदार्थसदृश एव क्षत्रियोऽवगम्यते, न लोष्टादि । भ्रान्तिनिवा-रणाय हि नञः प्रयोगः । भ्रान्तिश्च सति निमित्ते, निर्बीजभ्रान्त्ययोगादिति सदृश एव तस्य नियमः । अत एव च नञा ब्राह्मणार्थे मुख्ये क्षत्रिये निवारिते तदधिकरण-भूतः क्षत्रियोऽवस्थित एवेति प्रतिपद्यतेऽसौ क्रियासु साधनभावमब्राह्मणमानयेत्यादौ । प्रतिषेधमात्रोपक्षयत्वे तु नञ्समासस्यात्रासाधनः समासार्थः स्यादिति न समारोपितरूप-प्रतिषेधमात्रेऽस्य व्यापारः । समारोपस्य च प्रतिपत्तॄणां विपर्यासितदर्शना[1]न्नियमाभाव इत्यसत्यपि सादृश्ये कुतश्चिद् भ्रान्तिकारणात् सर्वत्र प्रसिद्धे नञ्समासे समारोपोऽनु-गन्तव्यः । उपचरितोत्तरपदार्थप्रतिषेधेन ह्युत्तरपदार्थप्रधानो नञ्समास इत्यप्राणि-नामस्त्रीविषयादयोपधादचित्तकर्तृकादिति प्रयोगदर्शनात् समारोपितनिमित्तानुसरणेनो-त्तरपदार्थसदृशप्रतिपत्तिर्विज्ञेया ॥ २८० ॥

'इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये संगृहीतं भवति ।

किम् । अनेकम्' ( M. Bha. I, p 412, l. 1-2. )

इति भाष्यम् । तद् व्याचष्टे ।

अनेकस्मादस इति प्राधान्ये सति सिध्यति ।
सापेक्षत्वं प्रधानानामेवं युक्तं त्वतल्विधौ ॥ २८१ ॥

एकशब्दार्थस्यात्र प्रधानत्वे तदाश्रयमेकसंख्यत्वादेकवचनमनुपसर्जनत्वात् सर्वनाम[1]-संज्ञाकार्यं स्मायादि च भवति । यदि पूर्वपदार्थस्यान्यपदार्थस्य वा प्राधान्यं स्यात् तदैकार्थस्योपसर्जनत्वात्

'संज्ञोपसर्जनप्रतिषेधः' ( Vā. 2 on M. Bhā. I. p. 87 l. 7. )

इति सर्वनामसंज्ञा न स्यात् । तथा अस इत्यत्रान्तरङ्गकार्यं

'त्यदादीनामः' ( P 7. 2. 102. )

इत्येवमादि तदर्थस्य प्राधान्ये सिध्यति । गणपाठो हि सार्वार्थ्येन प्राधान्येन विशेष्यत इत्युक्तं

'पाठात् पर्युदासः, पठितानां संज्ञाकरणं, सर्वाद्यानन्तर्यकार्यार्थम्'
( Vā. 3, 4, M. Bhā. I. p. 87 l 10, 14. )

इति । तथा

'त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम्' ( Vā. 8,) M. Bhā. II, p. 368, l. 5. )

इत्यस्य परिहारार्थं यदुक्तं भाष्ये

278. 1. M. Bhā. has निर्वर्तेत इति. 2. M. Bhā. has निवर्तत इति. 3. A क्षत्रियो. 4. AE[3] °तोऽर्थो. 5. A त्तिरिति युक्तम्.

279. 1. P बोद्धुश्च. 2. AE[3] सर्वव्यवहाराङ्ग. 3. A प्रतीयन्ते, E[3] प्रत्याय्यन्ते.

280. 1. AE[3] °दर्शनानां नि°.

281. 1. E[3] °नामकार्य°.

'नात्र त्वतलौ प्राप्नुतः । किं कारणम् । असामर्थ्यात्' ( Ibid, I. 11 ) इति तदुत्तरपदार्थप्राधान्ये युज्यते । तथा हि — अब्राह्मणत्वमित्यस्य निरस्तावयवविभागस्य लौकिकस्य शब्दस्यान्वाख्यानाय यदा विभागः क्रियते तदा नञर्थस्य प्रतिषेधस्य भावस्य चापोद्धृतस्य ब्राह्मणादन्यस्य भाव इति यदा युगपद्विवक्षा तदा परत्वात्[2] त्वतलौ स्याताम् । तयोः कृतयोः पुनःप्रसङ्गविज्ञानान्नञ्समासे समासस्वरः स्यात् सतिशिष्टत्वादव्ययपूर्वपदप्रकृतिस्वरः । प्रत्ययस्वरश्चेष्यत इति पूर्वविप्रतिषेधेनात्र नञ्समासे चोदिते परिहारोऽयं भाष्येऽभिहितो नात्रेत्यादि । ब्राह्मणादन्यस्य भाव इति प्रतिषेधमपेक्षमाणो ब्राह्मणार्थस्तद्धितेनैकार्थीभावमनुभवितुं पूर्वमसमर्थ इति प्रथममत्र नञ्समासः क्रियते । ननु च भावार्थमपेक्षमाणोऽपि ब्राह्मणार्थः सापेक्ष एवेति नञ्समासोऽपि न स्यात् । नैतदस्ति । प्रधानमिदानीं सापेक्षमिति भवति वृत्तिः । तद्धिते तु प्रकृत्यर्थस्योपसर्जनस्य सापेक्षत्वम् । तदेतत् कथमुपपद्यते यद्युत्तरपदार्थप्रधानो नञ्समासः । पूर्वपदार्थान्यपदार्थप्राधान्ये तु भावप्रत्यययोरेकयोगक्षेमो नञ्समासः स्यात् । उभयत्रापि गुणस्य सापेक्षत्वादिति परिहारभाष्यं नोपपद्येतेत्युत्तरपदार्थप्रधानताया उत्कर्षः । ननु च नित्यशब्ददर्शने विभज्यान्वाख्यानपक्षेऽपि

'वाह ऊठ्' ( P. 6. 4. 132. )

इति लिङ्गाद् युगपत्सन्निधानेऽप्यन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति नञ्संबन्धमात्राश्रयो नञ्समास एव पूर्वं भवति । सत्यमेतत् । भावार्थं त्वपेक्षमाणो ब्राह्मण उद्भूतव्यतिरेको नञा संबध्यत इति प्रधानमत्र सापेक्षमित्येतदेव युक्तम् । पूर्वविप्रतितिषेधवचनं तु ज्ञापकमुक्तम्

'अतोऽन्यो[3] भावप्रत्ययो नञ्समासात् प्राग् भवति'

इति । तथा च तत्रोत्तरपदवृद्धिर्नञ्स्वरश्च भवति ॥ २८१ ॥

अतोऽनन्तरं भाष्यम्

'किमत्र संगृहीतम्, एकवचनम्'

इति । तद् व्याचष्टे ।

**एकस्य च प्रधानत्वात् तद्विशेषणसन्निधौ ।**
**प्रधानधर्मव्यावृत्तिरतो न वचनान्तरम् ॥ २८२ ॥**

एकार्थस्य प्रधानत्वात्तन्निषेधेनानेक इत्यत्र बहुष्वपि प्रतिपाद्येषु प्रधानार्थानुयाय्येकवचनमेव भवति । न तु बहुवचनमित्यर्थः ॥ २८२ ॥

2. AE[3] परत्वाभित्यत्वा°. 3. A अन्योन्याभावप्र° E[3] अन्या[मे]वप्र°.



ननु च द्व्यादयोऽत्रैकशब्दवाच्याः समारोपितैकत्वा इति नञा तत्रैकार्थप्रतिषेधे ..आधारस्य द्व्यादेः सम्प्रत्ययात् तद्गतमेव वचनं न्याय्यमित्याशङ्क्याह ।

**प्रधानमत्र भेद्यत्वादेकार्थो विकृतो नञा ।**
**हित्वा स्वधर्मान् वर्तन्ते द्व्यादयोऽप्येकतां गताः ॥ २८३ ॥**

नञ् विशिष्टोऽनेक इत्यत्रैकार्थः प्रधानं विशेष्यत्वादिति तदाच्छुरितरूपाः, परित्यक्तस्वभावधर्मा द्व्यादयो निमित्तस्वरूपतामापन्ना[1] निमित्तानुविधानादेकत्वेनैव प्रतीयन्त इत्येकवचनमेव न्याय्यम् ॥ २८३ ॥

विरुद्धेषु द्वित्वादिषु कथमेकत्वयोग इति चेदाह ।

**ब्राह्मणत्वं यथापन्ना नञ्युक्ताः क्षत्रियादयः ।**
**द्वित्वादिषु तथैकत्वं नञ्योगादुपचर्यते ॥ २८४ ॥**

नञ्प्रयोगाद् ब्राह्मणशब्दो यथाऽब्राह्मण इत्यत्र क्षत्रियवृत्तिरवधार्यते तथानेक इत्यत्रापि द्व्यादिवृत्तिरेकशब्दः । प्रतीयते ह्युत्तरपदार्थसदृशोऽर्थः । तत्र चाध्यारोपितो दुरुपदेशादिना निमित्तेनोत्तरपदार्थ इति सर्वत्र समानम् ॥ २८४ ॥

तथा हि ।

**एकत्वयोगमासज्य स धर्मः प्रतिषिध्यते ।**
**द्व्यादिभ्यस्तेषु तच्छब्दो वर्तते ब्राह्मणादिवत् ॥ २८५ ॥**

भ्रान्त्या द्व्यादावेकत्वमारोपित नञा निवार्यते नत्वेकशब्दः । तथा[1] हि भ्रान्तिनिवारणं विवक्षितं न प्रतीयेतेति क्षत्रियादौ ब्राह्मणादिशब्दवदेकशब्दोऽत्र प्रयोगार्हः । असति ह्येकशब्दे द्व्यदिष्वेकत्वारोपाभावात् किं बाधितुं नञ् प्रयुज्यते ॥ २८५ ॥

तस्मान्नञो विषयप्रक्लृप्त्यर्थमेकशब्दः प्रयुज्यमानः प्रधानार्थ इति स्वधर्माननुवर्तते वृत्तिवाक्ययोरविशेषेणेत्याह ।

**आविष्टसंख्यो वाक्येऽसौ यथा द्व्यादौ प्रयुज्यते ।**
**वृत्तौ तस्य प्रधानत्वात् सा संख्या न निवर्तते ॥ २८६ ॥**

283. 1. E[3] °पन्ननिमि°
285. 1. E[3] om. तथा हि.

'एकं चेन्ननिक्तितौ, नैकं द्वयादय' इति यथा वाक्ये संख्यान्तरेऽप्येकशब्दोऽपरित्यक्तस्वसंख्य एव प्रयुज्यते तथा समासेऽपि तदर्थस्य प्रधानत्वादनेक इत्यत्र स्वसंख्यापरित्यागो नास्ति ॥ २८६ ॥

तत्परित्यागे तु विवक्षितार्थप्रतीतिरित्याह ।

**प्रतिषेध्यो यथाभूतस्तथाभूतोऽनुपज्यते ।**
**वचनान्तरयोगे हि न सोऽर्थः प्रतिषिध्यते ॥ २८७ ॥**

प्रतिषेधविषयप्रक्लृप्तमर्थमसदर्थमप्युत्तरपदं प्रयुज्यत इति यादृशोऽध्यरतः[1] **प्रतिषेध्यस्ता**दृशार्थाभिधानायोत्तरपदमुपादीयते । द्वयादौ चैकत्वं प्रतिषेध्यमित्युत्तपदस्यैकवचने सत्ययं विवक्षितः प्रतिषेधोऽवगम्यते । द्विवचनाद्युपादाने त्वेकत्वं प्रतिषिध्यमानं न प्रतीयेत । तस्माद्विवक्षितार्थोपयि[2]कत्वादेकवचनमेव न्याय्यम् ॥ २८७ ॥

"कथं पुनरेकस्य प्रतिषेधे द्विबहूनां सम्प्रत्ययः (M. Bhā. I, p. 412, l. 3.)

इति भाष्यमेकत्वनिवृत्तिमात्रं प्रसज्यप्रतिषेधरूपमभिप्रेत्य प्रवृत्तं पर्युदासाश्रयेण समर्थयते ।

**अशुक्ल इति कृष्णादिर्यथार्थः संप्रतीयते ।**
**संख्यान्तरं तथानेक इत्यत्राप्यभिधीयते ॥ २८८ ॥**

पर्युदासे शुक्लनिवृत्त्या नीलादयोऽविशेषेणाशुक्लशब्दाद् यथा प्रतीयन्ते तथा द्वयादयोऽप्येकसंख्यानिवृत्त्या विशेषेणानेकपदादवगम्यन्ते ॥ २८८ ॥

एतदेव समर्थयितुं भाष्यम्

" प्रसज्यायं क्रियां [1]गुणं वा ततः पश्चान्निवृत्तिं करोति । तद्यथा आसय भोजय शाययानेकम् । (M. Bhā I p. 412 l. 3.)

इति । तद् व्याचष्टे ।

**क्रियाप्रसङ्गात् सर्वेषु कर्मस्वङ्गीकृतेषु च ।**
**एकस्मिन् प्रतिषिद्धेऽपि प्राप्तमन्यत् प्रतीयते ॥ २८९ ॥**

क्रियापदं सामर्थ्यात् साधनान्याक्षिपत्यविशेषेण । तथासयेत्युक्ते कर्मसामान्यमवगम्यते । तत्र विधिपूर्वकत्वान्निवृत्तेः क्रियासामर्थ्याक्षिप्तनानासंख्याश्रयकर्मप्रसङ्गे सत्येकप्रतिषेधादप्रतिषिद्धस्य संख्यान्तरयोगिन एव साधनत्वमवबुध्यते ॥ २८९ ॥

एतच्च कस्मिन् पक्षे कथ्यत इत्याह ।

---

286. 1 E[3] om. E[3] om. एवं चेन्न निक्तितो.
287. 1. E[3] °शोऽध्यर्थः. 2. A °पयिकवचन°.
289. 1, M. Bhā. क्रियागुणौ.



**[1]क्रियाश्रुतिश्च प्रक्रान्ते प्रसज्यप्रतिषेधने ।**
**पर्युदासे तु नियतं संख्येयान्तरमुच्यते ॥ २९० ॥**

प्रसज्यप्रतिषेधे प्रतिषेधोपलक्षणत्वाच्छब्दस्य क्रियासामर्थ्यात्[2] प्रतिषिद्धवर्जं साधनोपादानम् । पर्युदासे तु शब्दादेवानेकमित्यस्मादुत्तरपदार्थसदृशनियतसाधनोपादानमित्युक्तमेव ॥ २९० ॥

आसय शायय भोजय इति प्रयोज्यप्रयोजकप्रैषोपादानेन विरुद्धक्रियानिर्देशस्योपादाने भाष्यकारस्याभिप्रायं व्याचष्टे ।

**धात्वर्थः कर्मविषयो व्यपदिष्टः स्वसाधनैः[1] ।**
**अर्थात् सर्वाणि कर्माणि प्रागाक्षिप्यावतिष्ठते ॥ २९१ ॥**

अकर्मको धात्वर्थ आसनादिभेदभिन्नः पूर्वं यदा निर्दिष्टः प्रयोज्यप्रयोजकादि[2]स्वसाधनावच्छिन्नो विरुद्धक्रियास्वभावः तदा तस्य[3] विरुद्धानेकस्वभावस्यैकेन साधनेन साध्यत्वायोगात् पूर्वमेवानेकं साधनमुपात्तमित्येकनिषेधेन तस्यैव सम्प्रत्ययः ॥ २९१ ॥

अनन्तरं भाष्यम्—

'यद्यपि तावदत्रतच्छक्यते वक्तुं यत्र क्रियागुणौ प्रसज्येते । यत्र तु खलु न प्रसज्येते तत्र कथमनेक[1]स्तिष्ठति इति ' (M. Bhā. 1. p. 412, l. 4–6.)

इति । तत्र परिहारः ।

'भवत्येवंजातीयकेष्वप्येकस्य प्रतिषेधे बहूनां सम्प्रत्ययः (Ibid l. 6.)

इति । अत्र चोद्यभाष्ये प्रसज्यप्रतिषेधे निषेधमात्रोपक्षयाद् द्वयादीनामप्रतिपत्तिः स्यादित्यर्थः । पर्युदासे समानजातीयस्य संख्यान्तरस्यैकत्वसमारोपास्पदत्वात् सिद्धः सम्प्रत्यय इति परिहाराभिप्रायः । एतद् व्याचष्टे ।

**निर्ज्ञातसाधनाधारे यत्राख्याते प्रयुज्यते ।**
**अनेक इति पश्चाच्च विरुद्धात्यनुपज्यते ॥ २९२ ॥**
**साध्यत्वात्तत्र सिद्धेन क्रिया द्रव्येण लक्ष्यते ।**
**प्रागेवाङ्गीकृतं द्रव्यमतः पूर्वेण भिद्यते ॥ २९३ ॥**

य[2]त्र कुतश्चिद्धेतोरेकतयावधृतः साधनशक्त्यधिकरणभूतो द्रव्यात्मा आख्याते तद्वाच्यायां क्रियायां पुनरयथार्थतावसायादनेक इति प्रतिषि[3]ध्य पश्चात् क्रिया[4]पदं

---

290. 1. E[3] क्रियाश्रयश्च. 2. A °मर्थ्यात् प्र°.
291. 1. E[3] °धने. 2. AE[3] °कादिः स्वसा°. 3. A तस्याविरु°.
292.–93. 1P. नेकं ति°. 2. AE[1] यः. 3. A om. प्रतिषिध्य. 4. A om. क्रियापद.

तिष्ठतीति प्र[5]युज्यते तत्र प्रागवधृतस्य शक्तिमतो द्रव्यस्य परार्थमुपादीयमानत्वात् तदात्मानुरूपां साध्यामाक्षिपति क्रियां न क्रियासामर्थ्येनाक्षिप्यते द्रव्यमिति पूर्वस्मादस्य भेदः। अत्रापि च प्रज्ञा[6]तसाधनविषयोपनिपातादेकप्रतिषेधस्य प्रतिषिद्धपरिहारेण प्रतीयते साधनम्। तदेवमश्रुतेऽपि पूर्वं क्रियापदे नैकनिषेधमात्र एव वाक्यं पर्यवस्यति
5 क्रियाकांक्षणादिति तत्राप्येकनिषेधे संख्यान्तरस्य[7] साधनत्वमवगम्यते ॥२९२, २९३॥

एवं यत्रापि हि क्रियोपदेशो नास्ति तात्पर्यं तत्रापि यावत् संख्यान्तरं प्रतीयत एवेति दृष्टान्तितं भाष्ये। तद्यथा

'न न एकं प्रियम्, न न एकं सुखम्'

(M. Bhā. I. p. 412, l. 7.)

10 इति। तद् व्याचष्टे

**संख्यैव प्रतिषेधेन संख्यान्तरमपेक्षते।**
**वाक्येऽपि तेन नैकत्वमात्रमेव निवर्त्यते ॥ २९४ ॥**

'न न एकं प्रियम्, न न एकं सुखमि'त्येतद् वाक्यम्।
'आबाधे च' (P. 8. 1. 10.)

15 इत्यत्र द्विर्वचनम्। शत्रोःसुखेन प्रियेण च प्रयोक्तुराबाधः। अत्र च क्रियापदस्याश्रवणात् सुखप्रियप्रतिषेधमात्रव्यापारेऽपि वाक्ये संख्यान्तराध्यासितानि सुखानि प्रियाणि च प्रतीयन्ते। एकं शत्रोर्न सुखम्, अपि तु बहूनि। एवं प्रियाणीति। अयं ह्यत्र वाक्यार्थः। विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् सर्वसुखप्रियनिषेध एकपदोपादानमनर्थकं स्यात्। एवं च यत्र वाक्येऽप्येतत् सामर्थ्यं तत्र वृत्तावुत्तरपदार्थसदृशस्यार्थस्य
20 पर्युदासे प्रतीतौ का वि[1]चिकित्सा। तत्र ह्येकपदमेव द्विबहूनाहेति नैकत्वमात्रनिवृत्तिः, अपि तु तन्निवृत्तिविशिष्टस्य द्व्यादेः प्रतिपत्तिः सिद्धा ॥ २९४ ॥

ननु कथं द्व्यादिरेव नियमेन प्रतीयते। एकप्रतिबन्धेऽन्यदेव शेषरूपं प्रतीयतामित्याशङ्क्याह।

**स्नेहान्तरादवच्छेदस्तथासत्तेः प्रतीयते।**
25 **तैलेन भोजने प्राप्ते न त्वन्यदुपसेचनम् ॥ २९५ ॥**

यथा भोजनमतैलेन विधेयमिति चोदिते तैलप्रतिषेधसामर्थ्यात् सर्पिरादिस्नेहान्तराद्धेतोरवच्छेदो विशेषणं भोजनस्य प्रत्यासत्तेरेकजातीयत्वात् प्रतीयते, न दध्ना

5. A °ष्ठतीत्यनुयुज्यते पश्चात् क्रियापदं तिष्ठतीति प्रयुज्यते. 6. P च ज्ञातसा° 7. E[3] °न्तरसाधन°.
294. P °तीतौ विचि°.



पयसा वा, तथेहाप्येकप्रतिषेधे समानकार्यं संख्यान्तरमेव संख्याजात्या प्रत्यासन्नं प्रतीयते, न त्वविशेषेण यत्किंचिदेवान्यदिति स्थितमुत्तरपदार्थप्रधानतायां नञ्समासस्यानेकार्थत्वस्योपपत्तिरिति। कथं तर्हि

'वृत्तिभेदप्रयोजकं चित्तमेकमनेकेषाम्'

5 इति भगवतः पतञ्जलेः प्रयोगः। एकशेषाश्रयेणेति ब्रूमः। एकनिषेधेऽपि हि कुतश्चिन्निमित्तान्नियतामेव व्यक्तिं संभावयेदिति संप्रत्येकशेषो न्याय्यः। भाष्यकृता त्वेकवचनं समर्थितं न तु बहुवचनं निवारितम् ॥ २९५ ॥

इदानीमन्यपदार्थप्रधानपक्षविचारायाह

**एकार्थे वर्तमानाभ्यामसता ब्राह्मणेन च।**
10 **यदा जात्यन्तरं बाह्यं क्षत्रियाद्यपदिश्यते ॥ २९६ ॥**

तदावकल्पतेऽन्यपदार्थप्रधानो नञ्समास इति प्रकरणादवसेयम्। इहाब्राह्मणादिभिर्नञ्समासैरुत्तरपदार्थविपरीतवस्तुप्रत्यायनं दृश्यते। तत्र चान्वाख्यानप्रक्रियायां यदोत्तरपदोपादानाः समारोपितब्राह्मणाद्यर्थाः क्षत्रियादय इति नयः[1] तदोत्तरपदार्थप्राधान्यं निर्णीतं

15 'प्राधान्येनाश्रिताः पूर्वं' (Verse 259.)

इत्यादिना। यदा त्वसत्सामान्यवृत्तिरप्ययं नञ् सद्विशेषनिबन्धनया ब्राह्मणश्रुत्या सामान्यविशेषभावेनैकाधिकरण्येन संबन्धमनुभूय तत्संबन्धप्रापितार्थातिशयं बाह्यं पदान्तरोपादानं क्षत्रियाद्यनुरुणद्धि,[2] न तावत्येव विश्राम्यति, तदान्यपदार्थप्रधानो नञ् समासः। तथा ह्यविद्यमानो ब्राह्मणो ब्राह्मणव्यक्तिराश्रयभूता यस्य क्षत्रियस्य क्षत्रियजातेरित्यस्या
20 अन्यपदार्थभूताया वर्तिपदार्थाभ्यामभावब्राह्मणाभ्यामवच्छेद इति जात्यन्तरं बाह्यं भवति ॥ २९६ ॥

उत्तरपदार्थप्राधान्ये तु क्षत्रियादौ समारोपिताया ब्राह्मणजातेः प्रतिषेधात् सदृशं क्षत्रियादिजात्यन्तरमुत्तरपदवाच्यमेव न बाह्यं भवति बहुव्रीहाविवान्यपदार्थ इत्यस्याः श्रुतेरन्तरङ्गे स्वपदार्थ एव युक्ता वृत्तिरित्याशङ्क्यैतत् सदृशतत्पुरुषान्तरनिदर्शनेन व्युत्पादयति।

25 **श्यामेव शबली कन्येति यथान्यद् व्यपदिश्यते।**
**असन्[1] ब्राह्मण इत्याभ्यां तथान्ये क्षत्रियादयः ॥ २९७ ॥**

295. 1 E[3] °प्यपि दृश्यते.
296. 1. AE[3] नयः 2. AE[3] °पतदिह तावत्येव.
297. 1. AE[3] असद्ब्र°.

शस्त्रीव श्यामा शस्त्रीश्यामा कन्येति श्यामाशब्दस्य शस्त्र्यां वृत्तौ समासवाच्य-
मुपमेयमुक्तमिति तत्र यथा वर्तिपदाभ्यामनभिधीयमानापि कन्या समासेनाभिधीयते।
यतः कन्याशब्देन सामानाधिकरण्यं प्रतिपद्यते समासः तथासन्निति नञास[2]दर्शने
ब्राह्मण इति च तद्विशेषवचनेनाभिधीयमानोऽपि क्षत्रियः समासेनाभिधीयते। तथा च
5 यथोपमानसमासो विशेषविहितः सामान्यविहितेन बहुव्रीहिणा न बाध्यते तथा नञ्-
समासोऽपीति वचनादन्यपदार्थोऽप्ययं तत्पुरुषः इत्यर्थः ॥ २९७ ॥
अत्रैव निदर्शनान्तरमाह।

**असास्नो गौरिति यथा गवयो व्यपदिश्यते।**
**जात्यन्तरं न गोरेव सास्नाभावः[1] प्रतीयते ॥ २९८ ॥**

10 [2]गौरवश्यं सास्नासंबद्ध[3] इत्यसास्न इत्युक्ते यदि परं सास्नामात्रमस्य नास्ति,
परिशिष्टावयवसंनिवेशसाम्यमिति गोशब्दस्य गवयस्य प्रतिपत्तिर्न [4]गोरेव प्रतिषिद्ध-
सास्नायोगस्यातो वाक्यात् प्रतीतिर्नञ्सामानाधिकरण्यात्। एवमब्राह्मण इत्युक्ते जात्य-
न्तरं क्षत्रियोऽवगम्यते। ब्राह्मणजातिमात्रनिषेधे परिशिष्ट[5]द्धर्मप्रतिपत्तेः ॥ २९८ ॥
तथा

15 **तुल्यरूपं यथाख्यातं कण्टकैर्भेदहेतुभिः।**
**खदिरं जातिभेदेन खर्जूरा[1]त् प्रतिपद्यते ॥ २९९ ॥**

खदिरख[2]र्जूरौ गौरकाण्डौ सूक्ष्मपर्णावित्यभेदेन पूर्वमाख्याते सदृशौ खदिर-
खर्जूरौ प्रतिपद्य पश्चात् कण्टकवान् खदिर इत्यभिधाने कण्टकानां खर्जूरेऽभावात् ततः
खदिरस्य भेदहेतुभ्यस्तेभ्यो विशेषः प्रतिपद्यते। तथा च खदिरः खर्जूरादन्य एव न तु
20 कण्टका[3]दिसंबन्धःअधिकं तस्यैव प्रतिपद्यते, तथा ब्राह्मणधर्मैः सादृश्यमवधार्य क्षत्रिये
ब्राह्मणत्वावसायाद् ब्राह्मणश[4]ब्दे प्राप्ते कथ्यते नायं ब्राह्मण इति जातिभेदमात्रम्,
अन्यत् सर्वं सदृशमिति[5] जात्यन्तरमिति प्रतीयत इति ॥ २९९ ॥
दार्ष्टान्तिकमाह।

---

2. A नञा सदर्शेन.

298. 1. AE³ भावात् प्र°. 2. AE³ गोर°. 3. AE³ संबन्धः. 4. E³ गौरेव.
5. A परिनिष्ठिततद्धर्म°, E³ परिनिष्ठितधर्म°.

299. 1. AE⁶ खर्जुरान्. 2. AE³ खदिरखर्जुरौ. The M. Bhā has खर्जु (Kielhorn) or खुर्जुर (Nrinayasāgara). I have retained Helārāja's °खर्जूर. According to A and E³, Helārāja had खर्जुरे. 3. AE³ °कादिभिसंब. 4. A °शब्देन. 5. E³ °सजात्यन्तर.



**अविद्यमानब्राह्मण्यो यादृशो ब्राह्मणो भवेत्।**
**अङ्गीकृतोपमानेन तथान्या[1]र्थोऽभि[2]धीयते ॥ ३०० ॥**

शस्त्रीश्यामा कन्येति यथा वर्तिपदाभ्यामनुपात्ता कन्याभिधीयमानोपमानोमेय-
भावमवगमयति, असास्नो गौरिति च सास्नावर्ज[3] यत्सादृश्यं गोगवययोरर्थान्तराभिधान-
5 निबन्धनं कण्टकवर्जं[4] च गौरकाण्डादि ⊕ स्यमेव विवक्षितमिति सर्वत्र[5] यथात्रोपमान
गर्भमन्यार्थाभिधानं तथाब्राह्मण इत्यत्रापि। तथा च ब्राह्मणजातिवर्जमन्यैर्धर्मैः[6] सादृ-
श्यात् क्षत्रियादिरेवान्योऽर्थोऽभिधीयते। तथा हि वैश्यः क्षत्रियो वा ब्राह्मण इवायम-
ब्राह्मणः। तत्र सर्वथा भेदेऽभेदे वा नास्ति सादृश्यमिति गोगवयवत् कथञ्चिद्
भेदाभेदावनुसर्तव्यौ। यथा हि ब्राह्मणः कुतश्चिन्निमित्तादपोद्धृतब्राह्मण्यसामान्यस्तथा-
10 जातीयकोऽयमित्यर्थः। ब्राह्मणस्यापि हि संभ[7]व इत्यब्राह्मण इत्यभिधानं कथमिव क्षत्रि-
यादेर्न स्यादित्यतिशयोक्तिगर्भमेतदुक्तम्। तदेवमुपमानोपमेयभावमङ्गीकृत्य नञ्समासः
क्षत्रियादिजातिभेदोपादानमर्थमासादयति। दृष्टश्च सादृश्यान्तर्भावो नञ्समासे। तद्यथा
अवर्षा हेमन्त इति। अत्र हि नञ्समासे वर्षासदृशो हेमन्तोऽभिधीयते ॥ ३०० ॥
कथमत्र सादृश्यमित्याह।

15 **अवृष्टयो यथावर्षा नीहाराभ्रसमावृताः।**
**तद्रूपत्वात् स हेमन्त इत्यभिन्नः प्रतीयते ॥ ३०१ ॥**

न वर्षा अव[1]र्षा हेमन्तो वर्षासदृश इत्यर्थः। अविद्यमानवर्षणक्रिया यथा[2] वर्षाः
प्रकीर्यमाणनीहारनिकराः प्रलम्बमाननीलघनाच्छादितदिगन्तराः तथायं हेमन्तः तमः-
सन्ततितिरस्कृतालोक इत्येवंविधवर्षासादृश्यादवर्षा इत्यभिधीयते ताद्रूप्येण। स्वपदा[3]र्थेऽपि
20 ह्ययं तत्पुरुषो व्युत्पादितो गर्भीकृत्योपमामन्यपदार्थे वर्तते। न ह्यविद्यमाना वर्षा वर्षा-
त्वमस्येत्युपक्रम एवान्यपदार्थे व्युत्पाद्यते, उपसर्जनह्रस्वत्वप्रसङ्गात्। एवं गर्भीकृतोपमा
नञ्समासाः प्रक्रियायामन्यपदार्थप्रधा[4]नविषया इत्येकेषां दर्शनम् ॥ ३०१ ॥

**अपरे ब्राह्मणादीनां सर्वेषां जातिवाचिनाम्।**
**द्रव्यस्यान्यपदार्थत्वे नञा योगं प्रचक्षते ॥ ३०२ ॥**

जातिपदार्थपक्षे ब्राह्मणादयः शब्दाः जातिमेवाधारविविक्तां प्राधान्येनाचक्षत 25
इति वार्तिपदेन द्रव्यस्यानुपादानात् तदभिधायी समासोऽन्यपदार्थप्रधानो भवति।

---

300. 1. AE³ तथान्योऽर्थो, 2. IP. विधीयते. 3. AE³ वर्ज्यम°. 4. AE³ कण्टकादिव°. 5. P सर्वत्रोपमा°. 6. A °र्भैरसाह°. 7. P संबन्धः.

301. 1. AE³ om. अवर्षा. 2. P om. यथा. 3. A °पदार्थो. 4. AE³ °प्राधान्यवि°.

असन् ब्राह्मणोऽविद्यमानं ब्राह्मण्यं यस्मि'न् क्षत्रियद्रव्यलक्षणेऽर्थेऽसावब्राह्मण इति जातिवाचिना ब्राह्मणशब्देन सह तत्पुरुषः । तत्र ब्राह्मणजातेर्यत्राश्रयान्तरे संभाव्यते समवायस्तत्रैव निषेधः समुचितो नात्यन्तविजातीय इति क्षत्रियादिद्रव्यमेवान्यपदार्थ उक्तः ॥ ३०२ ॥

अस्मिन् दर्शने बहुव्रीहिनञ्समासयोर्विषयविवेकोऽपि' कल्पत इत्याह ।

**न चैवंविषयः कश्चिद् बहुव्रीहिः प्रकल्पते ।**
**अगुरश्व इति व्याप्तिर्नञ्समासेन यस्य न ॥ ३०३ ॥**

एवंविषयो जात्यवच्छिन्नान्यपदार्थद्रव्याभिधायी नञ्समासवन्न क'ल्पते बहुव्रीहिः । मत्वर्थे भूमादौ बहुव्रीहिविधानात् । अविद्यमाना गावो यस्येत्यगुरयमश्व इत्ययं बहुव्रीहिर्यस्य नञ्समासेनानेन गोचरो नाक्रान्तः स कल्प'त इत्यर्थादुक्तं भवति । अविद्यमानो गौर्गोत्वमस्याश्वस्य सोऽयमगौरश्व इति हि नञ्समासप्रतिपत्तिः । उत्तरपदार्थविजातीयस्य नञ्समासेन स्वभावादभिधानाद् । अविद्यमाना गावो यस्येति तु मत्वर्थे बहुव्रीहिरित्यनयोर्विषयविवेकः सिद्धः । यदा तु

नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च ।

(M. Bhā. I. p. 424, l. 7.)

इति प्रतिपदविहितो नञाश्रयो बहुव्रीहिस्तदैवं व्याख्यायते नञ्समासेन यस्य न 'व्याप्तिरवकाशदानं स एवंभूतविषयो न कश्चिद् बहु'व्रीहिः प्रकल्पते ततोऽनयोः समाने विषये प्राप्ते स्वाभाविको यथोपवर्णितो विषयविवेक इत्येतद् सामर्थ्याज्ज्ञेयम् । ॥ ३०३ ॥

इत्यमर्थानुगुण्येऽप्यन्यपदार्थप्रधानतापक्षेऽत्र प्रक्रियायां दोष उक्तः

"यद्यन्यपदार्थप्रधानः अवर्षा हेमन्त इति हेमन्तस्य यल्लिङ्गं वचनं च तत् समासस्य प्राप्नोति"

(M. Bhā. I. p. 410, l. 9–10.)

इति भाष्येऽभिहितम् । एतद् व्याचष्टे ।

**द्वन्द्वैकदेशिनोरुक्ता परवल्लिङ्गता यतः ।**
**अवर्षासु 'ततोऽसिद्धिरिष्टयोर्लिङ्गसंख्ययोः ॥ ३०४ ॥**

302. 1. P om. यस्मिन्.

303. 1. $AE^3$ °को विकल्पते. 2. $AE^3$ प्रकल्पते. 3. A °न्तः तस्य कल्पित, $E^3$ °न्तः स कल्पित. 4. A व्याप्तेरव. 5. A बहुव्रीहेः.

304. 1. $AE^3$ तथा.



अवर्षा हेमन्त इत्यन्यपदार्थप्राधान्ये हेमन्तगतलिङ्गसंख्याप्रसङ्ग इतीष्टं बहुत्वं स्त्रीत्वं च न स्यात् । न चापि

"परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (P. 2, 4, 26.)

इति परवल्लिङ्गता भवति । एकदेशिसमास एव तत्पुरुषे परवल्लिङ्गता नियमिता यतः । तत्पुरुषमात्रे हि परवल्लिङ्गतायां प्राप्तजीविकादावतिप्रसङ्गः स्यात् । तथा च वार्त्तिकम्

'प्राप्तादिषु चैकदेशिग्रहणात् सिद्धम्'

(Vā. 7. M. Bhā. I. p. 479, l. 11.)

इति ।

'उपसर्जनह्रस्वत्वमप्यत्र प्राप्नोति' (Cf. M. Bhā. I. p. 478, l. 22-23.)

इति । अवर्षा इति अगौरिति च अन्यपदार्थप्रधानत्वाविशेषाद् बहुव्रीहिवत् । न चापि

'परवल्लिङ्गमिति शब्दशब्दार्थौ (Vā. 6. M. Bhā. I p. 479 l. 1.)

इत्यतः[2] परिहर्तुं शक्यते । विशिष्टे तत्पुरुषेऽस्य वचनादित्यन्यपदार्थप्रधानपक्षो दुष्टः ॥ ३०४ ॥

इदानीं पूर्वपदार्थप्राधान्यमधिकृत्याह ।

**विशेषणं ब्राह्मणादि क्रियासंबन्धिनोऽसतः ।**
**यदा विषयभिन्नं तत् तदासत्त्वं प्रतीयते ॥ ३०५ ॥**

यदा नञ्पदोपादानोऽसदर्थः क्रियासंबन्धितया प्रक्रान्तः तदोत्तरपदार्थेन ब्राह्मणेन स एवावच्छिद्यमानो विशिष्टः प्रतीयते । ब्राह्मणलक्षणेन विशेष'णेन भिन्नमवच्छिन्नमसत्त्वं नञर्थः प्रतीयमानं प्रधानं भवतीति पूर्वपदार्थप्रधानतापक्षो जायते ॥ ३०५ ॥

ननु चासतः कथं क्रियासंबन्धित्वमित्याशङ्क्याह ।

**ब्राह्मणत्वेन चासत्त्वादुच्यतेऽसत्तदन्यथा ।**
**असदित्यपि सत्त्वेन सतः सत्ता निवर्त्यते ॥ ३०६ ॥**

क्षत्रियादिरूपे'ण सन्नेवार्थो ब्राह्मण्येनासन्नित्येवं विशिष्टविषयमसत्त्वं नञुपादत्ते, न सर्वथासत्त्वमिति नास्ति क्रियासंबन्धविरोधः । अत एव सदृशार्थसंप्रत्ययोऽपि सिद्धः । **असदित्यपि** नञ्समासे । **सत्त्वेनेति** । अत्राप्यन्यथेति संबध्यते । भावविशेषानुपहितस्याभावस्याव्यवहार्यत्वात् प्रकारान्तरेण वस्तुत्वेनोपलक्षितस्य **सत** उत्तरपदार्थस्य विद्यमानता निषिध्यते । तथा चास्य भावरूपानुपातिना क्रियाविशेषेण योगोऽस्त्येव ॥ ३०६ ॥

2. $AE^3$ इत्यदः.

305. 1. $E^3$ om. विशेषणेन.

306. 1. $E^3$ °दिरूपोऽसन्नेवा°.

तदेतस्मिन् पूर्वपदार्थप्रधानपक्षे भाष्ये चोदितम्

‘ अव्ययसंज्ञा प्राप्नोति । अव्ययं ह्यस्य पूर्वपदम् ’

( M. Bhā. I. p. 410, l. 11. )

इति । तद् व्याचष्टे ।

**सामान्यद्रव्यवृत्तित्वान्निमित्तानुविधायिनः ।**
**अयोगो लिङ्गसंख्याभ्यां स्याद् वा सामान्यधर्मता ॥ ३०७ ॥**

उत्तरपदार्थविशिष्टो नञर्थः प्राधान्येनाभिधीयते इति तस्यात्र द्रव्यसामान्यरूपे क्षत्रियादौ शब्दप्रवृत्तिनिमित्तस्यालिङ्गसंख्यत्वान्निमित्तानुविधानान्निमित्तवतः स्वेन तत्वेनाव्यपदेशात् सत्यपि सत्त्वरूपत्वेऽव्ययधर्मोपपत्तिरित्यर्थमात्रलक्षणाव्ययसंज्ञाप्रसङ्गात् समासार्थोऽलिङ्गसंख्यः स्यात् । नञो हि वाक्येऽभावसामान्यमर्थोऽसत्त्वभूतो[1] दृष्टः । स एवात्र वृत्तावुत्तरपदार्थविशिष्टः प्राधान्येनाभिधीयत इति कुतो लिङ्गसंख्ये स्याताम् । अथ समासस्याव्ययेषु पाठाभावादव्ययसंज्ञाभावाद् विभक्तेर्लुङ् नास्तीत्युच्यते तथापि व्यपदेशनिवृत्तावपि वस्त्वर्थो न निवर्तते इत्यव्ययधर्मा भवेयुरेव । तथा च भाष्यं

‘ पाठेनाव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति ’ ( M. Bhā. I. p. 410, l. 13–14. )

इति ।

‘ यथेहार्थोऽभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति’ । ( Ibid. l. 14-15 )

इति । अननुविधीयमानेऽपि वा निमित्ते सत्त्वसामान्यगतं लिङ्ग[2]सर्वनाम स्यादेकत्वसंख्या चेत्यब्राह्मणमित्येव प्रयोगः स्यात्; नत्वब्राह्मणावब्राह्मणा इत्यादि । व्यक्तिनिबन्धनो हि लिङ्गसंख्याभेदः । अत्र च व्यक्तिविशेषो न वाच्यः, क्रियायोग्ये सत्त्वमात्रे नञ्[3]समासस्याभिधाव्यापाराद् विशेषस्याप्रतीतेः ॥ ३०७ ॥

अत्र परिहारो भाष्येऽभिहितः—

‘ नेदं वाचनिकमलिङ्गता असंख्यता च । किं तर्हि स्वाभाविकमेतत् ’ ( M. Bhā. I. p. 410, l. 15. )

इत्यादि ।

‘ तत्र किमस्माभिः शक्यं वक्तुं[1]’ यन्नञः प्राक् समासाल्लिङ्गसंख्याभ्यां योगो नास्ति, समासे तु भवति ’ ( M. Bhā. I. p. 410, l. 18 )

इति । तद् व्याचष्टे—

**प्रागसत्त्वाभिधायित्वं समासे द्रव्यवाचिता ।**
**निमित्तानुविधानं च न सर्वत्र स्वभावतः ॥ ३०८ ॥**

307. 1. E[3] सत्वमतो. 2. AE[3] लिङ्गं सर्वनाम. 3. A तत्समा°.
308. 1. M. Bhā. has कर्तुम्.



इह[2]पौरुषेयी शब्दानामर्थप्रत्यायनशक्तिर्नियतविषया योग्यताभिधाना प्रयोगप्रामाण्यावसेयसतत्त्वा । तत्र वृत्तिवाक्ययोः शक्तिभेदाद् भिन्नशक्तित्वे वाक्ये नञर्थोऽसत्त्वभूतोऽपि वृत्त्या[3] सत्त्वभूतोऽभिधीयते । तथा च क्रियायोगो दृश्यते । तथाहि—वाक्ये नञ् प्रतिषेध्याद्[4] व्यतिरेकेण प्रतिषेधमाचष्ट इति प्राधान्येनाव्ययार्थस्याभिहितत्त्वाल्लिङ्गसंख्यायोगो नास्ति । वृत्तौ तु प्रतिषेधोपसर्जनस्य प्रतिषेध्यस्य नञर्थत्वात् प्रतिषेध्यप्राधान्याल्लिङ्गसंख्यायोग उपपद्यते । न चावश्यकमन्यत्रापि निमित्तानुविधानम्, हरीतक्यादिषु व्यक्तिवचनयोर्व्यवस्थान[5]दर्शनात् । त[6]तश्च नञ्समासे लिङ्गसंख्यायोगस्य दर्शनाच्छुक्लादिवन्निमित्तानुविधानं नास्तीत्यर्थः ॥ ३०८ ॥

तथाहि ।

**निमित्तानुविधाने च क्रियायोगो[1] न कल्पते ।**
**तथा चाव्यपदेश्यत्वादुपादानमनर्थकम् ॥ ३०९ ॥**

नञर्थस्यासत्त्वरूपस्य निमित्तस्यानुविधाने समासार्थस्य लिङ्गसंख्यायोगवदब्राह्मणमानय, पश्य वेत्यादिदर्शनादिक्रियासाधनभावो न स्यादित्यक्रियाङ्गस्य नामपदार्थस्य कीर्तनमफलमित्यनन्वाख्येयो नञ्समासः स्यात् । दृश्यते चास्य क्रियाङ्गभाव इति प्रयोगप्रामाण्यादननुविहितनिमित्तः सत्त्वभूतार्थाभिधायी लिङ्गसंख्याभ्यां नञ्समासः ॥३०९॥

इयता च लिङ्गसंख्यासंबन्धमात्रं स्वाभाविकताभिधानेन स्यात् । प्रयोगानुपाती तु यथायथं लिङ्गसंख्याविशेषो विवक्षित इति तत्सिद्ध्यर्थं पक्षान्तरमत्र भाष्ये प्रतिपादितम् ।

‘ अथवा गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति

( M. Bhā. 1. p. 410, l. 20. )

इति । तद् व्याचष्टे ।

**असत्सामान्यवृत्तिर्वा विशेषैः क्षत्रियादिभिः ।**
**प्रयुक्तैराश्रयैर्भिन्नो याति तल्लिङ्गसंख्यताम् ॥ ३१० ॥**

उत्तरपदार्थविशिष्टमसत्सामान्यं समासार्थोऽनिर्ज्ञात[1]विशेष इति तज्जिज्ञासायां विशेषप्रयोगे तैर्विशेषैराश्रयैरसौ समासार्थो विशिष्टः प्रयोगयोग्य इति यथा[2]यथं तल्लिङ्गसंख्य[3] एव न्याय्यः । अर्थानामितरेतरभावाव्यभिचाराद् ब्राह्मणादिनिवृत्तेः क्षत्रियादय एवाश्रय इति तद्गते एव लिङ्गसंख्ये युक्ते । सर्वमूर्तीनां च सर्वलिङ्गत्वाच्छब्दशक्तेर्लिङ्गप्रतिनियमे क्षत्रमिति यथा स एवार्थो भिन्नलिङ्गाभ्यां शब्दाभ्यामभिधीयते, एवमब्राह्मणः

2. A पौरुषेयी. 3. E[3] सत्त्वभूतो. 4. AE[3] °षेधस्याव्यतिरेकेण. 5. AE[3] °व्यवस्थादर्श°. 6. A यतश्च.

309. 1, A °योगे.

310. AE[3] निर्शात°. 2. P om. यथायथं. 3. A °संख्ये एव न्याय्ये.

क्षत्र[4]मित्यब्राह्मणशब्देन पुंस्त्वविशिष्टः सोऽर्थः प्रतिपाद्यते निवृत्तिवचनेनाभेदोपचारात् तद्वत एवोपादानात्। यथा चान्ये जातिश[5]ब्दा आविष्टलिङ्गसंख्याः तथा नञ्समासोऽपीति क्षत्रा[6]दिना भिन्नलिङ्गेनापि सामानाधिकरण्यमस्योपपन्नम्। एवमनापः पृथिवीत्याद्युपपत्तिः। अत एव चात्रापि स्वाभाविकत्वमेव लिङ्गसंख्याव्यवस्थाहेतुः। पूर्वत्र तु

5 परिहारे द्रव्यवचनत्वे स्वाभाविकत्वं हेतुरित्येतावता विशेषः ॥ ३१० ॥

ननु निर्विशेषस्य सामान्यस्याभावात् सामान्यशब्देनैवोपगृहीतो विशेष इति कथं तद्वाचिनः प्रयोग इत्याह।

आगाश्रयो हि भेदाय प्रधानेऽभ्यन्तरीकृतः।
पुनः प्रत्यवमर्शेन विभक्त इव दृश्यते ॥ ३११ ॥

10 असत्सामान्ये समासवाच्ये प्रथमत एव यद्यपि विशेषः स्वाश्रयो गर्भीकृतः तथापि सामान्यश्रुतेर्विशेषस्यावधारणाभावाद् विशेषशब्देन पुनरसौ प्रत्यवमृश्यत एव। तथा च सामान्याद् विशेषस्य विभाग एव शब्दनिबन्धन इत्याश्रयाश्रयिभावप्रतीतावाश्रयगतसङ्ख्यायोग उच्यते ॥ ३११ ॥

तथा हि।

15 समासे श्रूयते स्वार्थो येन तद्वांस्तदाश्रयः।
द्रव्यं तु लिङ्गसंख्यावदसताभ्यन्तरीकृतम् ॥ ३१२ ॥

वृत्तौ नञः सत्त्वप्रधानार्थत्वाल्लिङ्गसंख्यायोगे द्रव्यसामान्यमभावानुरक्तं तेन अ[1]सता अ[2]सद्वचनेनाभ्यन्तरीकृतं प्रतिपादितमिति पूर्वस्य परिहारस्य स्वाभाविकत्वदर्शनस्यार्थो निगमितः। गुणवचनदर्शने तु द्वितीये परिहारे समासे स्ववाच्योऽर्थः

20 प्रतीयते, येनासत्सामान्येन क्षत्रियादिः **तद्वान्** निवृत्तिविशिष्टोऽवधार्यते तस्याधार इति निमित्तिनो निमित्तानुविधाने गुणवचनवल्लिङ्गसंख्यायोगः कथितः ॥ ३१२ ॥

[1]स्वपदार्थोऽन्यपदार्थो वा[2] क्षत्रियादिः कथं येन पक्षद्वयोपपत्तिरित्याह—

एकार्थविषयौ शब्दौ तस्मिन्नन्यार्थवर्तिनौ।
असतैव तु भेदानां सर्वेषामुपसंग्रहः ॥ ३१३ ॥

25 प्राक् समासान्नञ् वाक्ये निवृत्तिद्योतकः ब्राह्मणशब्दश्च निवृत्तिविशिष्टार्थाभिधायी[3]। एवमन्यार्थवर्तिनावेनौ **शब्दौ, तस्मिन्** समासे उत्तरपदार्थेनावच्छिन्नो नञर्थ

4. A[3] क्षत्रिय. 5. [3] जातिविशेषाः. 6. AE[3] क्षत्रियादिना.

312. 1. A असत्वात्. 2. A वचनेन.

313. 1. AE[3] स पदा°. 2. E[3] वाऽक्षत्रि. 3. AE[3] धाय्येव.



एकः प्रतिपाद्यो ययोस्तावेकार्थविषयौ। उपसर्जनसंभिन्नस्यैकस्यैव नञर्थस्य वाच्यत्वात्। **सर्वेषां तु भेदानां** क्षत्रियादीनामभावेन नञर्थेनैव स्वीकाराद्दुत्तरपदस्य तद्द्योतनमात्रे व्यापारात् पूर्वपदार्थप्राधान्यम् ॥ ३१३ ॥

यदा त्वन्यपदार्थप्राधान्यं तदाह।

5 ते क्षत्रियादिभिर्वाच्या वाच्या वा सर्वनामभिः।
यान्तीवान्यपदार्थत्वं नञो रूपाविकल्पनात् ॥ ३१४ ॥

क्षत्रियो वैश्य इत्येवमादयः शब्दा अब्राह्मण इत्यत्रत्यान्[1] विशेषान् स्फुटमितरेतरविवेकेन गमयन्ति प्रयुक्ताः सन्तः। तदप्रयोगे तु सर्वनामपदं सामान्यरूपेणान्तमर्थमाह। एवञ्च कृत्वा वर्तिपदाभ्यामुपगृहीतोऽप्ययमर्थो न शक्यतेऽवधारयितुं पदा-

10 न्तरप्रयोगमन्तरेणेति शब्दशक्तिमनवधारयन्तोऽन्यपदार्थत्वं क्षत्रियादेरवगच्छन्तोऽन्यपदार्थप्रधानत्वं नञ्समासस्याहुः। नञ्पदं हि प्रतिषेधमाह, ब्राह्मणपदं तु स्वजातीयमर्थमिति क्षत्रियोऽन्यपदार्थ इति भ्रान्ताः। शब्दशक्त्यनुसारिणां तु स्वपदार्थ एवात्र सदृशलक्षणोऽर्थ इति इव शब्दः। तथाहि—**नञो रूपमी**दृशमत्र न विकल्प्यते, न विशेषेणानुगम्यते यैः यदु[2]त्तोत्तरपदार्थाभावविशिष्टमसत्सामान्यं क्षत्रियाद्याश्रयभेदोपकल्पितविशेषं

15 नञर्थ इति[3] तेषां भ्रान्तिः पूर्वपदार्थप्रधानतायां लिङ्गवचनातिदेशस्योपयोगः ॥ ३१४ ॥

अत्र पक्षे दोषमुद्भावयति।

विशेषस्याप्रयोगे तु लिङ्गसंख्ये न सिध्यतः।
अवर्षादिषु दोषश्च हेमन्तोऽन्याश्रयो यतः ॥ ३१५ ॥

असत्सामान्यस्योत्तरपदार्थोपकृतस्य समासवाच्यत्वेऽत्र यदा क्षत्रियादयो विशेषाः

20 प्रयुज्यन्ते तदा तैः प्रयुक्तैराश्रयैर्विशिष्टलिङ्गसंख्यासिद्धिरस्तु। तदप्रयोगे तु व्यक्तिविशेषनिबन्धने लिङ्गसंख्ये न सिध्यत इति सामान्याश्रय[1] एव नपुंसकैकत्वलक्षणे ते स्याताम्। अवर्षा हेमन्तः, अनापः पृथिवी अपश्चाला जनपदः अगोदौ ग्रामः, अतेजः सिकता अनर्थो गृहाः, अनिदाघो वर्षा इत्यादिषु चेष्टलिङ्गसंख्यासिद्धिर्न स्यात्। यस्माद्वर्षा[2]भ्योऽन्यो हेमन्तोऽत्राश्रयः समासार्थस्येत्यवर्षा इति हेमन्तगतलिङ्गसंख्या-

25 प्रसङ्गः। एवमन्यत्र योज्यम्। हेमन्तग्रहणस्योपलक्षणार्थत्वात् पूर्वपदार्थप्राधान्याच्च वर्षार्थस्योपसर्जनत्वाद्ध्रस्वप्रसङ्ग इति पूर्वपदार्थप्रधानपक्षोऽपि दुष्टः। उत्तरपदार्थप्राधान्यमेव त्वत्र सिद्धान्तः। तथा च यथायथमुत्तरपदार्थगतलिङ्गसंख्यासिद्धिः। अतिदेशस्य तु नायं विषयः। ये हि बाह्यपदा[3]र्थसंबन्धे भेदे विपरिवर्तन्ते ते[4] गुणवचनाः स्वाश्रयतो

314. 1. AE[3] स्यात् विशेषात्. 2. A यदुत्तरप°. 3. A इत्युक्तं; तेषां भ्रान्तिः.

315. 1. E[3] °न्याश्रये. 2. I वर्षेभ्यो. 3. AE[3] पदार्थस्य सं°.

लिङ्गसंख्ये प्रतिपद्यन्ते । तद्यथा शुक्लादयो यथा बहुव्रीहिः समासः । नञ्समासस्तूपात्तलिङ्गसंख्यामेदा[4]परित्यागेनात्यन्तमनुवर्तते वर्षादिष्विति जातिशब्दानामिवाविष्टलिङ्गत्वान्नाश्रयतो लिङ्गानुगमोऽत्र क्रियते । तथा ह्यब्राह्मणः क्षत्रम्, अब्राह्मणः क्षत्रिय इति उत्तरपदार्थासमवाय्येव लिङ्गं दृश्यते । अत एव स्वाभाविकमेतदित्युक्तम् । संख्याप्यवर्षादिषूत्तरपदार्थासमवेतैवेति सापि स्वाभाविकी । अब्राह्मणावित्यादौ तु काचिद् बाह्यपदार्थापेक्षा संख्या । यद्येवं शब्दशक्तिप्रतिनियमादप्रयोगेऽपि विशेष्यस्य विशिष्टे लिङ्गसंख्ये सिध्यत एवेति पूर्वपदार्थप्रधानपक्षोऽपि न त्याज्यः । अत एव भाष्ये चोद्यप्रतिसमाधानेन समर्थित एवायम् । असः असर्वस्मा इति च सर्वनामकार्यं भवत्येव, नञर्थस्याव्यतिरेककरत्वात् समानाधिकरणत्वात् । अतिसर्वायेत्यादावेव हि व्यधिकरणविशेषणविषये सर्वाद्यर्थस्याप्राधान्यं, न तु समानाधिकरणे नञ्समासे । वाक्य इव स्वार्थापरित्यागेनैव हि नञ्समासे सर्वादयो नञर्थविशेषणं भव[6]न्तीति प्रवर्तत एव सर्वनामकार्यम् । अत एव प्रधानसामानाधिकरण्यान्नानाविभक्तित्वादप्रथमानिर्देशाच्चासत्युपसर्जनत्वे ह्रस्वत्वमपि न प्राप्नोति । न चोपसर्जनकार्येषु पारिभाषिकसम्भवे लौकिकमुपसर्जनमुपादेयम् । तस्मादुपपन्नं पूर्वपदाप्राधान्यदर्शनम् । तदेवं नञ्समासादौ लिङ्ग[7]संख्यातिदेशो यथाभाष्यमनुसृतः ॥ ३१५ ॥

यथा नञ्समासादौ एवं

“ आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः ” ( Vā. 35, M. Bhā. I. p. 242, l. 10. )

इति जातिपदार्थपक्षाश्रयेणैकशेषप्रत्याख्याने

“ लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात् ” (Vā. 53, Bhā. I. p. 245. l. 6.)

इत्युक्तम् । गुणो द्वित्वस्त्रीत्वादिकः । स चैकार्थसमवायाज्जातेरवच्छेदकः । नियतलिङ्गसंख्यैश्च जातिशब्दैर्जातिः प्रत्याय्यत इति शब्दशक्तिस्वभावापेक्षया[1]नित्यत्वं तस्य कथ्यते । काचित् किल जातिः स्त्रीत्वयुक्तेन शब्देन प्रत्याय्यते काचित् पुंस्त्वयुक्तेनेत्यादि । तथा काचिदेकत्वयुक्तेनेत्याद्यपीत्यनित्यत्वम् । अत एव

“ गुणविवक्षानित्यत्वात् ” ( M. Bhā. I. p. 245, l. 14. )

इति भाष्ये पाठः । अत्रैव पक्षान्तरमभिहितम्

“ गुणवचनवद्वा ” । ( Vā. 54, M. Bhā. I. p. 246, l. 18. )

इति । लिङ्गवचनसिद्धिरित्येव । तदेतद् व्याख्यातुमुपक्रमते ।

4. A om. ते. 5. E[3] °भेदोपरि°. 6. A भवन्तीति. 7. A adds लिङ्ग समासादौ before लिङ्गसंख्यातिदेशो.



**आकृतिः सर्वशब्दानां यदा वाच्या प्रतीयते ।**
**एकत्वादेकशब्दत्वं न्याय्यं तस्यां च वर्ण्यते ॥ ३१६ ॥**

‘प्रख्याविशेषात्’ ( Vā. 36, M. Bhā. I. p. 242, l. 13. ) आकृतिसद्भावे
‘ चोदनासु च तस्यारम्भात् ’ ( Vā. 47, M. Bhā. I. p. 244, l. 13.
‘ ज्ञायते चैकोपदिष्टम् ’ ( Vā. 38, M. Bhā I. p. 242, l. 19. )

इति तस्या एव शब्दार्थत्वं निर्णीतम् । तथा चैकशब्दत्वे तदाश्रये सिद्धे प्रत्याख्यात एकशेषः । आकृतेरेकत्वात् तत्र संबन्धग्रहणोपपत्तेः सैव शब्दवाच्या । न[2]च प्रतिनियतो विशेषः[3] शब्दात् प्रतीयत इति सामान्याभिधानमेव । आश्रयभेदापायोपजनेष्वपि चैकप्रख्यानिबन्धनाया जातेर्भेदापायोपजनाभावात् तत्प्रयुक्तः शब्द एक एव न्याय्यः । अर्थभेदे हि शब्दानां भेदः । अर्थश्च प्रधानभूतो जातिरेकेत्येक एव शब्दः ॥ ३१६ ॥

एवमुपक्षिप्य लिङ्गं ता[1]वद्विचार्यते । तथाहि इयमाकृतिः शब्दैरभिधीयमाना आविष्टलिङ्गोक्ता । आविष्टं लिङ्गं यया सा आविष्टलिङ्गा नियतलिङ्गेत्यर्थः । सर्वत्र सर्वेषां लिङ्गानां सद्भावेऽपि केनचिच्छब्देन किंचिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषापेक्षया आविष्टलिङ्गत्वमुच्यते । तदेतदाह ।

**आविष्टलिङ्गता तस्यां स्याद् ग्राम्यपशुसंघवत् ।**
**द्रव्यभेदेऽपि चैकत्वात् तत्रैकवचनं भवेत् ॥ ३१७ ॥**

“ ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ” ( P. 1. 2. 73. )

इति जातिपदार्थे प्रत्याख्याते सूत्रे स्वभावात् प्रतिनियतलिङ्गभेदोपग्रहः । तथाहि—तत्र मूलोदाहरणविषयेषु स्त्रीत्वमेव गाव इमा इति । प्रत्युदाहरणविषयेषु तु पुंस्त्वमेव तरुणेष्विति । एवं जातिशब्दानां नियतलिङ्गता स्वभावात् । जातिपदार्थदर्शनाश्रयेण हि सूत्रप्रत्याख्याने शब्दशक्तिभेदाश्रयो लिङ्गनियमः । तथा च ब्राह्मणो ब्राह्मणीत्यादावपि जात्यभिधाने शब्दशक्तिनिमित्तमेवोभयलिङ्गा[2]भिधानम् । वृक्ष इत्यादौ तु पुंस्त्वमेव नियतं जातेरेव चाभिधीयमानत्वात् । अनुमीयमानद्रव्यभेदेऽपि तस्य शब्देनानुपादानादभिधीयमानजातिनिबन्धनमेकवचनमेव भवेदिति जात्याख्यायामेकस्मिन् बहुवचनमारभ्यते । पूर्वश्लोके यद् यदेति तत्संबन्धादिह [3]तदेति योज्यमिति समन्वयोपपत्तिः ॥ ३१७ ॥

यदि तर्हि लिङ्गभेदेन योगः कथमाविष्टलिङ्गता जातेरित्यत आह ।

316. 1. AE[3] क्षया °नित्यत्वं 2. AE[3] ननु च. 3. AE[3] विशेषशब्दात्.
317. 1. A यावद्. 2. A लिङ्गताभि°. 3. A तत्तदेति.

आश्रयाणां हि लिङ्गैः सा नियतैरेव युज्यते ।
तथा च युक्तवद्भावे प्रतिषेधो निरर्थकः ॥ ३१८ ॥

एकार्थसमवायादाश्रयगतलिङ्गोपादाना जातिः शब्दशक्त्यनुसारेण नियममङ्गीकृतवती । तथाहि वृक्षः पादपस्तरुरिति वृक्षत्वजातिराश्रयगतं पुंस्त्वमेवोपादत्ते । न कदाचिदत्र स्त्रीत्वनपुंसकत्वे दृश्येते । शिंशपादयः स्त्रीत्वमेवाश्रयन्ते । पनसमित्यादयस्तु नपुंसकत्वमेव । इष्वशनिप्रभृतयो द्विलिङ्गाः प[1]द्मशंखादयश्च । तटादयस्त्रि[2]लिंगाः । ब्राह्मणो ब्राह्मणीति च द्विलिङ्गः । न ह्यत्र लिङ्गव्यतिकरः कदाचिदपि दृश्यत इति शब्दशक्तिभेदापेक्षो लिङ्गनियमोऽयमाविष्टलिङ्गता जातेर्विवक्षिता । अत एव च

'विशेषणानां चाजातेः' (P. I. 2. 52.)

इति जातिप्रतिषेधो निष्फलः । जातिशब्दा हि स्वसामर्थ्यानुरोधेन लिङ्गोपादायिनो न युक्तस्य लिङ्गमनुरुध्यन्ते ॥ ३१८ ॥

नन्वेवं गुणवचनवदाश्रयगतलिङ्गपरिग्रहे न जातेः स्वतो लिङ्गयोगः कश्चिद्, द्रव्यधर्मत्वाल्लिंगस्य । सत्यमेतत् । प्रभूतोऽयं प्रयोग इति तु शब्दसंस्कारमात्रमत्र लिङ्गम् । आविष्टलिङ्गो वा पादपशब्दोऽनुभवति भिन्नलिङ्गेन सामानाधिकरण्यम् । तद्यथा— ब्राह्मणोऽयं नपुंसकमिति । प्रवृत्तिमन्तो हि सर्वेऽर्थास्तिसृभिः प्रवृत्तिभिरवियुक्ता इति यथायथं शब्दैरनुगम्यन्ते । अत एव चैतदाविष्टलिङ्गत्वं जातेः स्तनकेशादिव्यंजनलौकिकलिङ्गपरिग्रहे नोपपद्यत इत्याह ।

सर्वत्राविष्टलिङ्गत्वं लोकलिङ्गपरिग्रहे ।
विरोधित्वात् प्रसज्येत नाश्रितं तच्च लौकिकम् ॥ ३१९ ॥

लोकव्यवहारनिरूढे लिङ्गे समाश्रीयमाणे स्तनादीनां प्रतिनियमात् तद्व्यङ्ग्यस्य स्त्रीत्वादेरेकार्थसमवायविरोधात् सर्वस्मिन्नर्थे नियतलिङ्गत्वमेतच्छब्दानां प्राप्नुयात् । स्तनकेशयोगाभिव्यक्तस्त्रीत्वा योषित् स्त्रीलिङ्गेनैव शब्देन व्यपदिश्येत, न दारकलत्रशब्दाभ्यां पुंनपुंसकलिङ्गाभ्याम् । अश्वादयश्च नपुंसकेन वाहनशब्देन नोच्येरन् । तस्मादात्मीयः सिद्धान्तः शब्दार्थो[1]ऽर्थो यथा नानालिङ्ग उपपद्यते स प्रतिज्ञेयः । अर्थव्यक्तिवस्तुशब्दैः सर्वार्थानां व्यवहाराद् यथा त्रिलिङ्गता सम्पद्यते तथा परिभाषणीयम् । तथा च भाष्यम्—

" तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम् ।
अवश्यं कश्चित् स्वकृतान्त आस्थेयः " (M. Bhā. I. p. 245, l. 21–23.
इति ॥ ३१९ ॥

318. 1. A om. पद्म—द्विलिं . 2. E³ स्त्रीलिंगाः.
319. 1. AE³ शब्दार्थो यथा.



तथाहि

सामान्यमाकृतिर्भावो जातिरित्यत्र लौकिकम् ।
लिङ्गं न संभवत्येव तेनान्यत् परिगृह्यते ॥ ३२० ॥

सामान्यादयः शब्दा पदार्थमेकमाचक्षते भिन्नलिङ्गाः । न च तस्य पदार्थस्य लौकिकमस्ति लिङ्गमित्यलिङ्गास्तदाश्रयणे प्रसज्यन्त एते शब्दाः । तस्मादन्यद् व्यापकं शास्त्रीयं लिङ्गमाश्रीयते ॥ ३२० ॥

किं तदित्युक्तं भाष्ये

" संस्त्यानप्रसवौ लिङ्गम् "

इति । तद् व्याख्यातुमाह ।

प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते ।
आविर्भावस्तिरोभावः स्थितिश्चेत्यथ भिद्यते ॥ ३२१ ॥

अजस्रपरिणामिनां गुणानां परिणामविशेषानादरेण प्रवृत्तिः परिणाम इत्येवं सामान्यं लिङ्गलक्षणम् । तथा हि

"कस्य पुनः संस्त्यानं स्त्री प्रवृत्तिर्वा पुमान्" ( M. Bhā. I, p. 246, l.2. )

इति चोदयित्वा,

" [1]गुणानां रूपादीनाम् " ( Ibid, l. 2. )

इति भाष्यम् । सत्त्वरजस्तमस्संनिवेशानां रूपादीनां संस्त्यानं संहननं विवेकेनावस्थाय धर्माणां केषाञ्चित् प्रकृतौ प्रकृतिलयस्तिरोधानं स्त्रीत्वम् । अपरेषां प्रसवो धर्मिणि उद्भव आविर्भावः पुंस्त्वम् । रजसः प्रवृत्तिध[2]र्मणोऽङ्गितायां प्रादुर्भावः । गुणानां चात्यन्तमितरेतरसाहचर्यात् तमस उद्भूतस्याङ्गभूतरजोधर्मप्रवृत्त्यनुरोधे तिरोभावः । धर्मिरूपस्यापि तिरोभूतधर्मावस्थायामनुवृत्तिस्तमसः सत्त्वधर्मोपरागात् स्थितिर्नपुंसकं स्त्रीपुंसनिवेशरूपतयैव गम्यमानत्वान्न भेदेन लक्षितम् । अत एव संस्त्यानप्रसवावस्थाव्यापित्वात् स्थितेर्लिङ्गसर्वनाम नपुंसकम् । स्थितितिरोभावावस्थयो रजोधर्मस्य[3] प्रवृत्तेर्गुणान्तरेऽप्यनुवेधादन्वयित्वे सति लिङ्गानां सामान्यमेतत् ॥ ३२१ ॥

अनेन लिङ्गेन सर्वे पदार्था व्याप्ता इत्युक्तं भाष्ये

" प्रवृत्तिः खल्वपि नित्या । न हि कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते' । ( M. Bhā. I, p. 246, l. 5–6 ) इत्यादि । तद्व्याचष्टे ।

321. 1. M. Bhā. has गुणानाम् । केषाम् । शब्दस्पर्शरूपरसगन्धानाम् । 2. AE³ 'त्तिधर्मिणो. 3. AE³ रजोधर्म प्र°.

**प्रवृत्तिमन्तः सर्वेऽर्थास्तिसृभिश्च प्रवृत्तिभिः ।**
**सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः ॥ ३२२ ॥**

" वर्धते यावदनेन वर्धितव्यमपायेन वा युज्यते ॥
(M. Bhā. I. p. 246, l. 6.)

5 इत्यनुग्रहोपघातनिमित्तसान्निध्ये भावानां परिणाममनुभवतामाविर्भावादिलक्षणाभिर्विशेष प्रवृत्तिभिरजस्रमवियोगः । तथा हि प्रतिकलमवस्थान्तरावधारणान्यथानुपपत्त्या समुन्नीयते- परिणामः । तदुक्तं भाष्ये—

" सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः " ।
(M. Bhā. I. p. 246, l. 3.)

10 इति । एवंभूताश्च पदार्थाः शब्दैरनुगम्यन्ते । न हि शुद्धं परिणामि वस्तुतत्त्वमभिधानविषयः, आकारोपग्रहेण शब्दवाच्यत्वादिति सर्वशब्दानां स्व[1]शक्त्यनुसारी लिङ्गनियमः समञ्जसः ॥ ३२२ ॥

तत्र प्रकृतेस्त्रिगुणाया रजसानवरतमस्तु प्रवृत्तिशीलता; तद्विकाराणां च भोग्यात्मकानाम् । यस्तु भोक्ता पुरुषश्चेतनः सोऽत्यन्तविधर्मा भोग्यजातान्निर्गुणः 15 प्रकृतिमनुभवन् कथमात्मा चैतन्यं चितिरिति लिङ्गविशेषनियताभिधानविषयतामनुभवतीत्याशङ्क्याह ।

**यश्चाप्रवृत्तिधर्मा[1]र्थश्चितिरूपेण गृह्यते ।**
**अनुमातीव सोऽन्येषां प्रवृत्तीर्विष्वगाश्रयाः ॥ ३२३ ॥**

बुद्धिदर्पणे चिच्छायासंक्रान्त्या भोगनिष्पत्तेर्भोग्यभावशबलितमेव चैतन्यं व्यवहारेऽ- 20 भ्यक्ष्यते । तदेव च शब्दगोचरोऽत्यन्ताज्ञातस्याभिधानायोगात् । तथा चान्येषां भोग्यानां पृथगपरिमितपदार्थरूपानुगताः प्रवृत्तीः[2] परिणामविशेषाननुगच्छतीत्याभासगतलिङ्गभेदोपचारो निराभासेऽपि चैतन्ये ॥ ३२३ ॥

तथा हि ।

**तेनास्य चितिरूपं च चितिकालश्च भिद्यते ।**
25 **तस्य स्वरूपभेदस्तु न कश्चिदपि विद्यते ॥ ३२४ ॥**

तेन बुद्धिदर्पणसंक्रान्तेन भोग्यजातेनास्य भोक्तुश्चितिक्रिया भिद्यते, प्रतिभोग्यं विवेकेन गृ[1]ह्यते । विषयरूपानुकारेण हि ज्ञानमन्यथा प्रविभज्यते । अत एवाविच्छिन्नापीयं चितिक्रिया चेत्यगतकालभेदोपचारात् प्रविभक्तकालेवावधार्यते । परमार्थतः पुनश्चै-

322. 1. A °नां शक्त्यनु°
323. 1. AE³ °र्मार्थश्चि°. 2. AP °गता प्रवृत्तिः,
324. 1. AE³ भिद्यते.



तन्यमात्ररूपस्य भोक्तुर्न कश्चन स्वरूपतो देशतः कालतो वा भेदः । चितिक्रियापि न ततो भिन्ना निराभाससंविन्मात्ररूपत्वात् तस्य । पुरुषस्य चैतन्यमिति तु विकल्पकल्पिताकारो भेदो राहोः शिर इत्यादिवत् । अनुत्पन्नविवेकख्यातयो[2]ऽर्वाग्दर्शना गुणपुरुषयोः स्वरूपमेलनेन व्यवहरन्ति ॥ ३२४ ॥

5 इत्थं च कृत्वा पारमार्थिकेन चैतन्यरूपेण व्यवहाराभाव इत्याह ।

**अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते ।**
**प्रतिबिम्बकधर्मेण यत्तच्छब्दनिबन्धनम् ॥ ३२५ ॥**

बुद्ध्याकारसंनिविष्टेषु सत्त्वादिगुणेषु जडेषु सत्त्वधर्मस्वच्छत्वातिशयवशेन चैतन्योपराग इति तत्रादर्शतलप्रख्ये प्रतिसंक्रान्तं बिम्बं व्यावहारिकं चैतन्यमभिधानविषय इति तदन्येषां प्रवृत्ती[1]रनुविद्धदनुभवति लिङ्गयोगमित्यर्थः । यत्तु परं स्वयंज्योतिरपेत- 10 विकारग्रन्थि तदपरिणामि नावतरति व्यवहारम् । तदुक्तम्

' चितिशक्तिरपरिणामिनी '

इत्यादि ।

तदेवं व्यवहारे चैतन्येऽपि लिङ्गयोगाद्—

15 **अवस्था तादृशी नास्ति या लिङ्गेन न युज्यते ।**
**क्वचित्तु शब्दसंस्कारो लिङ्गस्यानाश्रये सति ॥ ३२६ ॥**

भोक्तृभोग्ययोर्लिङ्गभेदानुगमस्य साधितत्वात् तद्व्यतिरेकेण पदा[1]र्थान्तराभावान्न काचिदसौ पदार्थावस्था यस्या लिङ्गसंबन्धो नास्तीति व्यापकमिदं लिङ्ग[2]लक्षणं जाता[3]वप्यन्वयि । अवस्थात्रयस्यावियोगात्सर्वभावानां नित्याया अपि जातेस्तदनपायद् । 20 सम्भवदपि चेदं लिङ्गं क्वचिदविवक्षयाप[4]कीर्यते । तदाह भाष्यकारः—

' तच्चोभयं सर्वत्र । यद्युभयं सर्वत्र कुतो व्यवस्था । विवक्षातः । स्त्या[5]नविवक्षायां स्त्री; प्रसवविवक्षायां पुमान्, उभयोरविवक्षायां नपुंसकम् " (M. Bhā. I. p. 245, l. 18.)

इति । तथा च शब्दसंस्कारमात्रं न केवला प्रकृतिः प्रयोक्तव्येति लिङ्गप्रत्ययस्तत्र । 25 यथोच्यते

" तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात् " (Vā. I, M. Bhā. II. p. 245, l. 18.)

इति ॥ ३२६ ॥

2. A °ख्यातिकयोर्वाग्दर्शनानुगुणपु°; E³ °र्शनानुगुणपु°
325. 1. AE³ प्रवृत्तिरविद्धद्.
326. 1. A पदान्तरा°. 2. AE³ °दं लक्षणं. 3. A जाताप्यवस्था°. 4. A न कीर्यते; E³ परिकीर्यते. 5. M. Bhā has संस्त्यान.

यदुक्तं

'अवस्था तादृशी नास्ति या लिङ्गेन न युज्यते'।

इति। तदेव व्यक्तयति

**कृत्तद्धिताभिधेयानां भावानां न विरुध्यते।**
**शास्त्रे लिङ्गं गुणावस्था तथा चाकृतिरिष्यते ॥ ३२७ ॥**

पाकः पक्तिः पचनमिति कृदभिहितो भावोऽवस्थाभेदेन भिद्यमानस्तदनुगतं लिङ्गभेदमनुभवन्नियतलिङ्गैः शब्दैर्विषयीक्रियते। एवं गरिमा गुरुता गुरुत्वमित्यादिस्तद्धिताभिधेयः। एकापि हि यावदवस्थावस्यान्तरमनुभवत्येव। न हि कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते यतः। तथा च संस्त्यानं संस्त्यायः संस्त्येति वातुपादानैका[2]-प्यवस्था लिङ्गभेदनिबन्धनैः शब्दैः प्रत्याय्यते। तदेवं गुणावस्थालक्षणं शास्त्रे परिभाषितं **लिङ्गं न विरुद्ध्यते कृत्तद्धिताभिधेयानां भावानां** भिन्नमपि। अन्यथैकत्वाद्भावस्य किंचिदेकमेव लिङ्गं युज्यते। तदित्थं सिद्धेऽस्य लिङ्गलक्षणस्य व्यापित्वे उपसंहरति **तथा चाकृतिरिष्यते** इति। **तथा च** एवं सति गुणानां रूपादीनां सत्त्वादिगुणपरिमाणरूपाणामाविर्भावाद्यवस्था प्रवृत्तिसामान्यरूपा लिङ्गजातिरभ्युपगम्यत इत्युपसंहारः कृतः ॥ ३२७ ॥

इत्थं च जातिशब्दानां लिङ्गव्याप्तिसिद्धेर्द्रव्यपदार्थकेन यात्र लिङ्गासिद्धिः प्रसञ्जिता सा प्रतिसमाहिता भवतीत्याह।

**लिङ्गं प्रति न भेदोऽस्ति द्रव्यपक्षेऽपि कश्चन।**
**तस्मात् सप्त विकल्पा ये सैवात्राविष्टलिङ्गता ॥ ३२८ ॥**

द्रव्यपदार्थपक्षेऽपि गुणावस्था लिङ्गम्। आकृतिपदार्थनयेऽपि ता एव त्यक्तभेदा व्यक्तयो जातिरिति गुणावस्थासम्भवात् यथायथं स्वशक्त्यनुसारेण शब्दैर्नियतलिङ्गा जातिर्द्रव्यं वा नियतलिङ्गं प्रतिपाद्यत इति दर्शनद्वयेऽपि लिङ्गं प्रति भेदाभावः। कथं न भेदो यावता जातिराविष्टलिङ्गा, द्रव्यं पुनरनियतलिङ्गमित्याशङ्क्य निगमयति **तस्मात्** इति। द्वित्र्येकलिङ्गतायां—

उपादानविकल्पाश्च लिङ्गानां सप्त दर्शिताः (verse 3. Linga.)

इति जातिशब्दैस्तदुपग्रहे नियतैरेवासङ्करेण लिङ्गोपादानादाविष्टलिङ्गता जातेः कथिता। न त्वेकलिङ्गपरिग्रह एवेति पक्षद्वयसाम्यम्। वैयाकरणैर्हि न वस्तुधर्मो लिङ्गमिष्यते। [2]अपि तु शब्दार्थस्य लिङ्गयोगः। प्रतीयते च शब्देभ्यो जातिरु[3]पगृहीतलिङ्ग-

327. 1. AE[3] यावदवस्थान्तरम्°. 2. AE[3] °पादाने काप्यवस्था.
328. 1. A1P वर्णिताः 2. E[3] om. अपि तु°—विश्यते. 3. A °तिरपरिगृहीत°.



संबन्धा। तेन जातेः स्वमेव लिङ्गम्। अत आश्रयलिङ्गेन लिङ्गवत्त्वेनाभिनिविश्यते। अत एव गुणविवक्षानित्यत्वादित्येतदभ्युपपद्यते, द्रव्यव्यभिचारेण जातेरपि गुणस्य स्त्रीत्वादेर्विवक्षाप्रक्लृप्तेः ॥ ३२८ ॥

एवं द्रव्यपक्षे साम्यं लिङ्गं प्रति समर्थितम्। जातिपदा[1]र्थकेन सम्प्रति वचनं समर्थयितुमाह।

**वचने नियमः शास्त्राद् द्रव्यस्याभ्युपगम्यते।**
**यतस्तदाकृतौ शास्त्रमन्यथैव समर्थ्यते ॥ ३२९ ॥**

द्रव्यपदार्थदर्शनेऽपि[2]

'बहुषु बहुवचनम्' (P. I. 4. 21.)

इत्यादिशास्त्रसामर्थ्याद् वचननियमो न तु द्रव्यस्य संख्यास्तीत्येव, साङ्कर्यपरिहारार्थमवश्यं वचनमारम्भणीयम् ॥ ३२९ ॥

एवं चेच्छास्त्रशरणा व्यवस्था तदा जातावपि पदार्थे तच्छास्त्रमन्यथा वर्ण्यते। कथमित्याह।

**वर्तते यो बहुष्वर्थो भेदे तस्य विवक्षिते।**
**स्वाश्रयैर्व्यपदिष्टस्य शास्त्रे वचनमुच्यते ॥ ३३० ॥**

यो जातिलक्षणो बहुषु वर्तते तस्य **भेदे** भिन्नाधारसमवाये विवक्षिते **बहुषु** इति स्वाश्रयैः शास्त्रे कथितस्य बहुवचनं विधीयते। एवं द्वयोरिति व्यपदिष्टस्य द्विवचनमित्यादि वाच्यम्। तदयमर्थः द्वित्वसंख्यावच्छिन्नव्यक्तिविशेषाधिकरणा जातिर्द्विवचनान्तेन शब्देन प्रत्याय्यते, बहुत्वसंख्यावच्छिन्नाधारसमवेता तु बहुवचनान्तेन, एकसंख्याधारावच्छिन्ना त्वेकवचनान्तेन। तदेतदुक्तं भाष्ये—

'अथ यस्य द्रव्यं पदार्थः कथं तस्यैकवचनद्विवचनबहुवचनानि। एवं स वक्ष्यति, एकस्मिन्नेकवचनं, द्वयोर्द्विवचनं बहुषु बहुवचनमिति। यदि तर्हि तस्यापि वाचनिकानि न स्वाभाविकानि अहमप्येवं वक्ष्यामि एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनमिति।'

(M. Bha. I. p. 246, l. 10–14.)

इति। एकस्मिन् या वर्तते जातिरित्याद्यर्थः। केचिदकारप्रश्लेषेणाभेदे तस्येति पठन्तस्तस्यैकशब्दतार्थमेकत्वे सहजे शब्देन प्रतिपादयितुमिष्ट इति व्याचक्षते। एवमनधिगतभेदायामेव जातावाश्रयतो वचनमुपपद्यते ॥ ३३० ॥

329. 1. E[3] °दार्थिकेन. 2. P ins. लिङ्गं प्रति after अपि.
330. 1. A एकत्वसंख्या°.

**यदा त्वाश्रयभेदेन भेद एव प्रतीयते ।**
**आकृतेर्द्रव्यपक्षेण तदा भेदो न विद्यते ॥ ३३१ ॥**

आश्रयभेदेन जातेर्भेदानुविधाने वचनभेदः स्वगत एव । तथा चानेकशब्दत्वमपीति एकशेष आरभ्यत एवेति द्रव्यपदार्थपक्षेण जातिपदार्थपक्षस्य भेदो नास्ति । उभयत्रापि प्रत्यर्थं शब्दनिवेशात् । एतच्च दर्शनं भाष्ये हेयत्वेनोक्तम् ।

" यदि कदाचिदाकृतिरेकत्वेन वि'वक्षिता कदाचिद् द्वित्वेन, कदाचिद् बहुत्वेन एका आकृतिरिति प्रतिज्ञा हीयेत । यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम् एकशेषो न वक्तव्य इति स इदानीं वक्तव्यो भवति " ( M. Bhā. I, P. 245, l. 11. )

इति ॥ ३३१ ॥

तस्मात् प्रागुक्तमेव युक्तमित्युपसंहरति ।

**अभेदे त्वेकशब्दत्वाच्छास्त्राच्च वचने सति ।**
**एकशेषो न वक्तव्यो वचनानां च सम्भवः ॥ ३३२ ॥**

व्यक्तिनिबन्धनभेदानुविधानाभावेऽपि स्वाश्रयभेदनिबन्धनं

' बहुषु बहुवचनम् ' ( P. 1. 4. 21. )

इत्यादिशास्त्राद् यथोक्तेन न्यायेन यदा जातिर्वचनभेदं प्रतिपद्यते तदा प्रयोजकस्यार्थस्यैकत्वादेकशब्दत्वे सिद्धे प्रत्याख्यायते सूत्रमेकशेषलक्षणम् ॥ ३३२ ॥

अ'त्र चोदयति ।

**ननु चानभिधेयत्वे द्रव्यस्य तदपाश्रयः ।**
**आकृतेरुपकारोऽयं द्रव्याभावान्न कल्पते ॥ ३३३ ॥**

आकृतेः शब्दार्थत्वे द्रव्यस्यानभिधीयमानत्वात् तदाश्रयलिङ्गसंख्यासिद्धिः कथम् । शब्दार्थनिमित्तो हि शब्दसंस्कारः । अनभिधीयमानस्य च वस्तुतः सत्त्वेऽपि संस्कारं प्रत्यसत्त्वमेव ॥ ३३३ ॥

एतत् परिहर्तुमाह ।

**व्यपदेशोऽभि'धेयेन न शास्त्रे कश्चिदाश्रितः ।**
**द्रव्यं नाम पदार्थो यो न च स प्रतिषिध्यते ॥ ३३४ ॥**

' बहुषु बहुवचनम् ' ( P. 1. 4. 21 )

इत्यादिशास्त्रेऽभिधीयमानाश्रयभेदनिबन्धनानि वचनानीति न वचनमस्ति । किन्तु

331. 1. M. Bhā has युज्यते.
333. 1. AE³ अतः.
334. 1. E³ अभिधीयेत.



सामान्येनैतदुच्यते । तथा च भिन्नाधारा जातिर्वचनभेदं प्रतिपद्यत एव । न च जातिपदार्थदर्शने द्रव्यं नाम पदार्थो नास्ति । तथा च भाष्यम्—

' न ह्याकृतिपदार्थिकस्य द्रव्यं न पदार्थो द्रव्यपदार्थिकस्य वाकृतिर्न पदार्थः ( M. Bhā. I. p. 246, l. 14. )

इति । आकृतिपदार्थवादिनो **द्रव्यं नाम यः पदार्थो न स** नास्ति । अपि तु विद्यमान एवेति भिन्नद्रव्यसंबन्धाया जातेराश्रयगतो वचनभेदोऽविरुद्धः ॥ ३३४ ॥

अतोऽनन्तरं भाष्यम्—

' कस्यचित्तु किंचित् प्रधानभूतं किंचिद् गुणभूतम ' ( M. Bhā. I. p. 246, l. 15. )

इत्यादि । तद् व्याचष्टे

**गुणभावोऽभिधेयत्वं प्रति द्रव्यस्य नाश्रितः ।**
**उपकारी गुणः शेषः पदार्थ इति कल्पना ॥ ३३५ ॥**

जातिपदार्थकस्य जातिः प्रधानं शब्दवाच्या द्रव्यं तु गुणत्वेन वाच्यमिति न विवक्षितमत्र । अपि त्वनभिधीयमानस्यापि द्रव्यस्योपकारित्वाज्जातिं प्रति गुणत्वमुच्यते । तथा हि लोके यो यस्योपकारी स तदर्थः शेषभूतो गुण इति कल्प्यते । तथा च द्रव्यं जाताविति तत्संबन्धेन तद्गतवचनभेदप्रतिपत्तिरित्युक्तं भवति ॥ ३३५ ॥

कथमभिधेयत्वं प्रति गुणभावो द्रव्यस्यात्र भाष्ये स्पष्टो न व्याख्यायत इत्यत आह ।

**द्रव्ये न गुणभावोऽस्ति विनाद्रव्याभिधायिताम् ।**
**आकृतौ वा प्रधानत्वमत एवं समर्प्यते ॥ ३३६ ॥**

**अ'द्रव्याभिधायितां विना** इति । अत्र सति द्रव्याभिधाने यस्माद् द्रव्ये गुणभावो नास्ति, जातेर्वा प्राधान्यं तस्मादेवमेतद् भाष्यं व्याख्यायते— गुणत्वमुपकारित्वेन द्रव्यस्य नाभिधीयमानत्वेनेति । अभिधीयमानतायां हि द्रव्यस्याकृतिरवच्छेदिका स्यादिति तदेव प्रधानमभिधीयमानं स्यात् । आकृतिस्त्ववच्छेदोपयोगिनी गुण एव स्यान्न प्रधानम् । तथा च यथा राजपुरुष इत्यत्र राजार्थो न संख्याभेदं प्रधानगतमवलम्बते तथा जातिरपि नावलम्बेत । सत्यपि तु गुणत्वे तदनुवृत्तौ वचनभेदापत्तेरेकशेषप्रत्याख्यानमयुक्तं स्यात् । यदा तु नाभिधीयते द्रव्यं तदानभिधीयमानमभिधीयमानाया जातेर्गुडशब्द इव माधुर्यादेर्भेदकमित्यात्माधारलिङ्गसंख्योपसंहारेणोपकारित्वाद् गुण इति युज्यते वक्तुम् ॥ ३३६ ॥

केचिदभिधीयमानयोरपि जातिद्रव्ययोर्गुणप्रधानभावं समर्थयन्त इत्याह ।

336. 1. A द्रव्याभि°.

**केश्चिद् गुणप्रधानत्वं नामाख्यातवदिष्यते ।**
**न वृत्तिवत् परार्थस्य गुणभावस्तु वर्ण्यते ॥ ३३७ ॥**

पाचकः पचतीति यथाभिधीयमानयोरेव क्रियाकारकयोर्गुणप्रधानभावः तथात्रापि। तथाहि नामपदेन क्रियाकारकसंबन्धोपसर्जनः साधनाश्रयः प्राधान्येनाभिधीयते, धात्वर्थस्यात्र प्रत्ययार्थविशेषणत्वात् । तेन चात्र भूतेन भाविनापि च स विशेष्यत इति । न क्रिया प्रधानं भाव्यावस्थायामेव तथात्वात् । अत एवात्र संबन्धे भावप्रत्ययस्तस्यैव प्रवृत्तिनिमित्तत्वात् । क्रिया त्वत्र गुणभूतापि भेदेनावसीयते । आख्यातपदेन तु साधनविशेषप्रतिलब्धानुग्रहा क्रिया प्राधान्येनोच्यते । भाव्यमानावस्था ह्यत्र क्रिया व्याप्रियमाणेन साधनेन विशेष्यते प्रत्ययार्थेनापि सता । कर्तृव्यापाररूपा हि भावना भाव्यरूपधात्वर्थनिष्ठेति प्रधानभूतव्यापारावेशेन कर्तुर्य एवावगमः स एव परार्थस्यापि प्राधान्यावगमहेतुः । तदेवं गुणभूतमप्यत्र साधनं भेदेनावधार्यते । तथा च विशेषणैर्युज्यते देवदत्तः पचतीति । अत एव स्वसंख्यया क्रियामुपकरोति पचतः पचन्तीति । एवं जातिपदार्थका[1]नां जातिः प्राधान्येन शब्दवाच्या । द्रव्यपदा[2]र्थकानां तु द्रव्यम् । विवक्षानियमेन हि युज्यते गुणप्रधानभावः[3] । यथा तु राजपुरुषादौ वृत्तिपदे परार्थस्योपसर्जनपदार्थस्य गुणभावोऽप्रधानत्वं नैवं नामाख्यातयोः साध्यसाधनभावस्य कथ्यते । तथाहि वृत्तावुपसर्जनार्थस्य प्रधानेन संभेदापत्ते[4]र्विवेकाग्रहणास्वप्रयुक्तसंस्कारनिमित्तता नोपपद्यते । शाब्द एव हि गुणभावस्तस्य । तथा च ऋ[5]द्धादि विशेषणं न युज्यते । पाचकः पचतीति तूभयत्रापि साध्यसाधनभावावच्छेदेनोभयमपि क्रियाकारकरूपं प्रतीयत एव । केवलं सामर्थ्याद् गुणप्रधानभावः प्रतीयते यथायोगम् । तथाहि भूतं भव्यायेति परिनिष्ठितरूपं साधनं परार्थं परिनिष्ठितत्वादेवान्यस्योपकारायोपादीयमानत्वात् । यदुद्दिश्य च तत्प्रवृत्तिस्तत् साध्यं प्रधानमाख्यातपदे । नाम[6]पदे तु कारकशक्तिः प्रवृत्तिनिमित्तमिति तदाधारः प्राधान्येनाभिधीयते । एवमिह दर्शनभेदेऽपि द्वयोरपि शब्दार्थत्वेन यदाकृतेराधारप्रकल्पितातिशयसंपादनाय द्रव्योपादानं तदाकृतिः प्रधानं विशेष्यत्वेनोपक्रमात् । यदा तु व्यक्तिविशेषावच्छेदपरमाकृत्युपादानं तदा विपर्ययः ॥ ३३७ ॥

यद्येवमाकृतिपक्षेऽपि द्रव्यस्याभिधीयमानत्वात् तद्गतवचनभेदवच्छब्दभेदप्रसङ्ग इत्यारब्धव्योऽत्राप्येकशेष इत्याशङ्क्याह ।

337. 1. AE[3] पदार्थतायां. 2. AE[3] दार्थिकानां. 3. P भावम्. 4. A °पत्तिर्वि°. 5. AE[3] चार्थादिवि°. 6. A om. नामपदे.



**गुणभूतस्य नानात्वादाकृतेरेकशब्दता ।**
**सिद्धो वचनभेदश्च द्रव्यभेदसमन्वयात् ॥ ३३८ ॥**

आकृतिपदार्थ[1]कानां द्रव्यं गुणभूतं भिन्नमिति न गुणभूतशब्दार्थभेदापेक्षमनेकशब्दत्वम् । अपि तु प्रधानभूतशब्दार्थाभेदापेक्षमेकशब्दत्वमेव न्याय्यमिति नार्थ एकशेषेण। वचनभेदस्तत्र सुतरां सिद्धोऽभिधेयेन द्रव्येण भिन्नेन योगात् । अयमभिप्रायः — भेदाभेदयोर्गुणप्रधानभूतयोर्विरोधात् प्रधानयुक्तमेवैकशब्दत्वम् । न हि प्रधानमनादृत्य गुणविधानं युक्तम् । स्वनिमित्तं तु संस्कारं प्रधानानुग्रहाय गुणो वचनभेदलक्षणं प्रधानानुपरोधि प्रापयतु । कोऽत्र विरोधः ॥ ३३८ ॥

तथा हि ।

**साधनं गुणभावेन क्रियाया भेदकं यथा ।**
**आख्यातेष्वेकशब्दाया जातेर्द्रव्यं तथोच्यते ॥ ३३९ ॥**

क्रियाप्राधान्ये[1]ऽप्याख्यातस्य यथा गुणभूतसाधनाश्रयो वचनभेदः पचतः पचन्तीति तथैकशब्दवाच्यायाः प्रधानभूताया जातेस्तेनैव शब्देन द्रव्यस्याभिधाने संनिहितोऽभिधीयमानो गुणोऽसावात्माधारं संख्याभेदं तत्र कल्पयति । येन हि गुणधर्मेण प्रधानस्योपरोधो न भवति तं प्रधानोपकारायोपस्थापयत्येव गुणः । अन्यथा गुणत्वमेवास्य हीयेत, [2]उपकारप्रभावितत्वात् तस्य । इत्थं च नामाख्यातवदिति निदर्शनं सुसदृशमुक्तं न वृत्तिवदिति । न हि राजपुरुषे राजार्थनिमित्तः कश्चिद् वचनभेदादिः संस्कारोऽत्यन्तमभेदापत्तेः प्रधानार्थेनोपसर्जनार्थस्य । अत्र च साधनं क्रियाया न भिन्नां संख्यामुपसंहरति । अपि त्वविद्यमानभेदापि स्वतः क्रियाश्रयगतवचनभेदापेक्षया पचतः पचन्तीति तिङन्तेनाभिधीयत इत्युच्यते । तथा च गुणभूतसाधनभेदादेव निर्ज्ञातभेदत्वान्न तिङन्तान्येकशेषारम्भं प्रयोजयन्तीति भाष्येऽभिहितम् ॥ ३३९ ॥

तदेवं जातिविशिष्टस्य द्रव्यस्याभिधानेऽपि प्राधान्याज्जातिपदार्थाभ्युपगमे लिङ्गवचनसिद्धिरुपपादिता

'लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्' ( Va. 53, M. Bhā. I. p. 245, l. 6.) इति । गुणोऽत्र द्रव्यं विवक्षितम् । यदा तु जातिमात्राभिधानमेव तदा गुणवचनवदाश्रयतो लिङ्गवचनानि व्याख्यातुमाह ।

**एकत्वे तुल्यरूपत्वाच्छब्दानां प्रतिपादने ।**
**निमित्तात् तद्वतोऽर्थस्य विशिष्टग्रहणे सति ॥ ३४० ॥**
**सोऽयमित्यभिसंबन्धादाश्रयैराकृतेः सह**
**प्रवृत्तौ भिन्नशब्दायां लिङ्गसंख्ये प्रसिद्ध्यतः ॥ ३४१ ॥**

338. 1. AE[3] °र्थिकानाम्.
339. 1. A °न्य आ° 2. P यत उपकार°.

आधारैः सह जातेरभेदे सति शब्दैः प्रत्यायने क्रियमाणे ये जातिविशिष्टद्रव्याभिधायिनः ये च जातिमात्राभिधायिनः शब्दास्ते तुल्यरूपत्वादभेदेनाध्यवसीयन्ते। तथाहि स्वार्थ[1]प्रतिपादने जातिशब्दैर्जातिलक्षणं[2] निमित्तं तद्वति द्रव्येऽध्यारोपितमाश्रित्य जातिविशिष्टस्य द्रव्यस्याभेदेन प्रत्यायनमिति तैराश्रयभूतैर्द्रव्यैः सह जातेः सोऽयमित्यभेदप्राप्तौ निमित्तानुविधानेन निमित्तिनोऽप्यभिध[3]ानात् तद्गतलिङ्गसंख्योपादानं शुक्लादिवदविरुद्धं भिन्नशब्दायामपि प्रवृत्तौ। यदा हि जातितद्वन्तौ द्वावप्येकशब्दवाच्यौ तदैकशब्दा प्रवृत्तिर्व्याख्याता। इह तु जातिमात्रस्य शब्देन प्रतिपादने भिन्नशब्दा प्रवृत्तिः। अत्रापि च निमित्तसरूपप्रत्ययोपजननाद् यथाप्रत्ययं च शब्देनाभिधानान्निमित्तिसंक्रान्तैव शब्दप्रवृत्तिः। तथा ह्यस्य गौरिति व्यतिरेको न दृष्ट इत्यभेदोपचाराादाश्रयलिङ्गवचनसिद्धिः। एवञ्च फलतः पक्षयोरभेदः। पूर्वत्र तु गुणप्रधानभावेन द्वयोरभिधानम्। इह त्वभेदोपचारादित्येतावान् विशेषः ॥ ३४०, ३४१ ॥

यद्वा पूर्वत्रानभिधीयमानमपि द्रव्यमुपकारकं विवक्षितम्। तथा चोदितं 'ननु चानभिधेयत्वम्' इत्यादि।

जातिलक्षणनिमित्तानुविधानमन्तरेण च व्यक्तयो यथास्वं विशेषेण व्यवहारमवतरन्तीत्याह।

**प्राक् च जात्यभिसंबन्धात् सर्वनामाभिधेयता।**
**वस्तूपलक्षणं सत्त्वे प्रयुज्यन्ते त्यदादयः ॥ ३४२ ॥**

यावज्जातिरूपमाधारे न प्रत्य[1]स्यते तावद् व्यक्तीनां रूपानवसायादनिरूपणमेव। विशेषणम्। आ[2]रूपिका हि जातिराधारं [3]निरूपयन्ती व्यवहारयति। यथास्वं विशेषशब्दैः विशिष्टजातिरूपणाभावे तु विशेषशब्दानामगोचरः पदार्थ इति सत्त्वे द्रव्ये सिद्धस्वभावे वस्तुमात्रोपलक्षणाः सर्वनामशब्दास्त्यदादयः प्रयुज्यन्ते। ते हि वस्तु किंचिदिति सामान्यमात्रतया पदार्थमवगमयन्ति। तस्माद् विशेषप्रत्यायनाय जातिरूपाध्यासेन निमित्तरूपत्तां प्राप्ताः पदार्थाः यथायथं जातिशब्दैरभिधीयन्ते गवादिभिरित्यभेदोपचाराज्जातिशब्दानां द्रव्याभिधानं न गौणम्, अपि तु मुख्यमेवेत्याश्रयलिंगवचनसिद्धिरुक्ता ॥ ३४२ ॥

अत्रैव मतान्तरमाह।

**पाकौ पाका इति यथा भेदकः कैश्चिदाश्रयः।**
**इष्यते चानुपादानो धर्मोऽसौ गुणवाचिनाम् ॥ ३४३ ॥**

340. 41. 1. स्वार्थवृत्तिप्र°. 2. AE[3] जातिलक्षणनिमित्तं. 3 A °प्यनुविधानाद.
342. 1. AE[3] प्रत्याय्यते. 2. AE[3] अरूपिका. 3. A °रं न नि°.



पाकशब्दः क्रियाधर्मवचनो नोपादत्तेतदा श्रयम्। **अनुपादानो**ऽपि[1] चात्र क्रियाश्रयो भेदकः। तथा हि द्विवचनबहुवचने भवतः। कर्मस्थत्वात पचिक्रियायास्तद्भेदे पाकभेदाभिधानमत्र। एवं गुणवाचिनां शब्दानां सोयमिति संबन्धादाश्रयानुपादानेऽप्यनुपादानोऽसावाश्रयो भेदक इति जातिशब्दानां गुणवचनत्वादनुपात्तद्रव्याणामपि वचनभेदः सेत्स्यतीति कैश्चिदभ्युपगम्यते। एत[2]त्तु न युक्तम्। पाकौ पाका इति सोऽयमित्यभिसंबन्धेनाश्रयोपादानस्यादृष्टेः युक्तं यदाश्रयभेदेन पाकभेदाद् भिन्नशब्दाभिधेयत्वे स्वगत एव वचनभेदः। न ह्ययमाश्रयगतः। आश्रयभेदेनाश्रितस्य भेदादाश्रितभेदानुयाय्येव। तथा च गुडतिलतण्डुलौदनानां पाक इत्याश्रयभेदावगमादेवाश्रितभेदप्रतीतेर्न बहुवचनम्। शुक्लादिशब्दानां तु सोऽयमिति संबन्धेन दृष्टमाश्रयोपादानम्। त[3] एव च जातिशब्दानां[4] भाष्ये निदर्शनत्वेनोपन्यस्ताः

'गुणवचनवत्' (Va. 54. M. Bhā. I p. 246, l. 18.)

इति। तथा हि जातिशब्दा अप्याश्रयभेदोपचारादुपाददत एव। आश्रितमात्र[5]श्च गुणो विवक्षित इति जातिरपि तथा। प्रसिद्धवस्तु गुणवचनत्वेन शुक्लादिरित्युपमानम्। न चाधारभेदेपि जातिभेदः पाकादिवदित्यभिन्नशब्दत्वे प्रत्याख्याते एकशेषेऽभेदोपचारेण तद्वति वृत्ते लिङ्गवचनसिद्धिरत्र विवक्षिता न त्वाश्रयानुपादानेन ॥ ३४३ ॥

तथा हि—

**आश्रयस्यानुपादाने केवलं लभते यदि।**
**आधारधर्मान्[1], सामान्यं पुरस्तात् तद्विचारितम् ॥ ३४४ ॥**

अनुपात्ताधारं शुद्धमेव जातिशब्देन **सामान्यम्** अभिहितमित्याधारगतालिंगसंख्यालक्षणान् धर्मान् प्रतिपद्यत इति नेदं गुणवचनवदित्यत्र परिहारे व्याख्यातुं युज्यते। एतद्धि पूर्वत्र परिहारे "लिङ्ग[2]वचनसिद्धिर्गुणस्यानित्यत्वात्" (Va. 53, M. Bhā. I. p. 245, l. 6.) इत्यत्र पक्षान्तरं व्याख्यातम्। तथाहि तत्र

'ननु चानभिधेयत्वे' .... (verse 333.)

इत्यादिना चोदयित्वा

'व्यपदेशोऽभिधेयेन न[3] शास्त्रे कश्चिदाश्रितः' (verse 334.)

इति परिहृतम्। द्वितीयश्चापि पक्षोऽत्र व्याख्यातः।

'कैश्चिद् गुणप्रधानत्वम्' (verse 337.)

इत्यादिना द्वयोरप्यभिधीयमानत्वलक्षणो गुणप्रधानभावेन। अस्मिंस्तु परिहारे जातेरेवाभिधेयता। अभेदोपचारात्तु तदाश्रयोपादाने तद्धर्मसिद्धिः ॥ ३४४ ॥

343. 1. A om. अपि. 2. A तत्तु. 3. AE[3] अत एव. 4. A °शब्दा मा°. 5. AE[3] °मात्रं च.
344. 1. E[3] °धर्मात्. 2. A लिङ्गसिद्धि°, 3. AE[3] om. न.

तत्र कथमभेदोपचार इत्युक्तं भाष्ये

"सामान्ये वृत्तस्य वृत्तिरुपजायते"

इति । तदुपपादयितुमाह ।

**जातौ पूर्वं प्रवृत्तानां शब्दानां जातिवाचिनाम् ।**
**अशब्दवाच्या[1]त् संबन्धाद् व्यक्तिरप्युपजायते ॥ ३४५ ॥**

निमित्तपुरःसरा निमित्तिनो वृत्तिरिति पूर्वं निमित्तभूतायां जातौ शब्दप्रवृत्तिः । सा च जातिर्निराश्रया न सम्भवतीति शब्देनाभिधायकेना[2]विषयीकृतादपि तद्वत्संबन्धलक्षणात् सामर्थ्यात् व्यक्तिस्त[3]द्वान् प्रत्ययपथमुपारोहति । तथा चाह

"अधिकरणगतिः साहचर्यात्" ( Vā. 55, M. Bhā. 1. p. 246, l. 24, )

इति ॥ ३४५ ॥

प्रत्ययानुसारेण च शब्दाः[1] प्रवर्तन्त इति क्रमोऽप्यत्रोपपन्न इत्याह ।

**सोऽयमित्यभिसंबन्धाज्जातिधर्मोपचर्यते ।**
**द्रव्यं तदाश्रयो भेदो जातेश्चाभ्युपगम्यते ॥ ३४६ ॥**

अभेदाध्यासाज्जातेरिव धर्मोऽस्येति द्रव्यं जातिशब्देनोच्यते जात्यात्मकत्वापत्तेः निमित्तरूपाच्छुरितस्य पदार्थस्यावगमात् तथैवाभिधानप्रवृत्तिरिति जातिलक्षणनिमित्तं व्यक्तावध्यस्य तदभेदेन शब्दस्तत्र वर्तते । तथा च द्रव्यस्यापि निमित्ताच्छुरितस्य निमित्तनिबन्धनेन शब्देनाभिधानमर्थतो जायत इति तदाश्रयः संख्याभेदो निमित्तेऽपि प्रतिज्ञायते, न हि जातिशब्देन द्रव्यं स्वेन रूपेणाभिधीयते, अपि तु निमित्तस्य तत्र सन्निधानान्निमित्तमभिदधता शब्देन सामर्थ्यान्निमित्त्युपादानं निमित्तिनो निमित्तस्य निष्कृष्टस्याभावात् । तथा च प्रयोजकीकृतं निमित्तमेवाभिधान[2]मिति तदभेदात् तदेकत्वं न्याय्यम् । उपात्तनिमित्तिगतस्तु धर्मप्रतिलम्भः । विरम्य व्यापारायोगाच्च शब्दस्य नायमभिधायां क्रमः । प्रतिपत्तारस्तु तमेकमेव संसृष्टमर्थं स्वकल्पनाभिर्विभजन्त इति तदभिप्रायेण सामान्ये वृत्तस्येति भाष्ये क्रम उक्तः ॥ ३४६ ॥

एतदेव निदर्शनेन साधयति ।

**मञ्चशब्दो यथाधेयं मञ्चेष्वेव व्यवस्थितः ।**
**तत्त्वेनाह तथा जातिशब्दो द्रव्येषु वर्तते ॥ ३४७ ॥**

मञ्चाः क्रोशन्तीति क्रियासंबन्धस्याधेये मञ्चस्थे प्राणिन्युपपत्तेराधाररूपाभेदेनाधारवचनोऽपि मञ्चशब्दस्तदाधेयवचन इति निश्चीयते । एवमानीयन्तां गाव इति

45. 1. A [3]वाच्या सं. 2. A °केन विष°. 3. AE[3] तद्वत्.
46. 1. A[3] शब्दात् प्र°. 2. P I धान इति.



क्रियासंबन्धस्य जातावनुपपत्तेस्तदभेदापन्ना व्यक्तयः क्रियासमन्वयसमर्था जातिनिबन्धनेन शब्देनोपादीयन्त इत्यवगमः ॥ ३४७ ॥

यद्येवं कथं जातिरेव[1] पदार्थ इत्यत आह—

**तत्र जातिपदार्थत्वं तथैवाभ्युपगम्यते ।**
**जातिरुत्सृष्टसंख्या तु द्रव्यात्मन्यनुपज्यते ॥ ३४८ ॥**

यथाधेयाभिधानेऽपि मञ्चशब्दस्तदाधारवचन इत्युच्यते तथैव[2] सत्यप्याश्रयद्रव्योपादाने जातिशब्दो जातिपदार्थ एव व्यवस्थाप्यते । द्रव्यमपि हि नासौ स्वरूपेणाचष्टे अपि तु जातिरूपाध्यासेनेत्युपचरितं जातिस्वरूपसमावेशाद् द्रव्याभिधानं वाहीकाभिधानवत् । मुख्यं तु जात्यभिधानमेव । निरूढत्वाच्च नोपचारप्रतीतिः । यद्येवं निमित्ताभिधानं मञ्चादिवदेव स्यात् । तथा चैकजात्याच्छुरिता व्यक्तयः सर्वा ऐक्येनाभिधीयेरन्निति वचनभेदो न स्यादित्याशङ्क्योक्तं जातिरुत्सृष्टसंख्येत्यादि । जातेः स्वतः संख्यारहितत्वान्निरस्तसंख्यास्वरूपेण केवलमसौ द्रव्येऽध्यस्यत इति न तदाश्रया क्वचिदत्र संख्या प्राप्नोति । नापि लिङ्गमलिङ्गत्वात् तस्या इत्याधारगतलिङ्गसंख्योपग्रह एव न्याय्यः ॥ ३४८ ॥

तदेवमुपपन्नो जातिशब्दानां लिङ्गवचनयोगः शुक्लादिशब्दवत् । तत्र शुक्लादिशब्दानां मतुब्लोपादभेदोपचाराद् वा तद्वति वृत्तिः । जातिशब्दानां तु व्यतिरेकस्य कदाचिदप्यदर्शनान्मतुब्लोपेन नार्थोऽभेदोपचारादेव तद्वति वृत्तिः । तथापि च तद्वदभिधानमात्रं समानमाश्रित्य उपायभेदानादरेण शुक्लादीनां दृष्टान्ततोपपत्तिरत्रेत्याह ।

**अस्येदमिति वा यत्र सोऽयमित्यपि वा श्रुतिः ।**
**वर्तते परधर्मेण तदन्यदभिधीयते ॥ ३४९ ॥**

मत्वर्थीयवशेनाभेदोपचारेण वा शब्दोऽन्यत्र वर्तताम् । निमित्तरूपाध्यासेन तु निमित्तिनोऽभिधाने तुल्यम् । इयता चेह प्रयोजनमित्यर्थः । इत्थञ्च यथा गुण[1]शब्दत्वं द्रव्यवाच्यत्वेऽपि शुक्लादीनामुच्यते तथा गवादीनां जातिशब्दत्वेऽपि न क्वापि हानिः ॥ ३४९ ॥

तथा हि

**यत् प्रधानं न तस्यास्ति स्वरूपमनिरूपणात् ।**
**गुणस्य चात्मना द्रव्यं तद्भावेनोपलक्ष्यते ॥ ३५० ॥**

348. 1. E[3] रेकपदा°. 2. E[3] तथापि.
349. 1. A गुणरूपशब्दत्वं.

निरुपाधेरर्थस्य द्रव्यात्मनः क्रियासंबन्धक्षमस्य शुद्धं [1]रूपं व्यवहारे नास्ति। शाब्दे वैकल्पिके वा निरूपणपूर्वको हि व्यवहारः। तच्च निरूपणमर्थस्योपाधिरूपाच्छुरणेनैव। ततश्च **गुणस्य** यथायथं शुक्लजात्यादेर्विशे[2]षस्य **आत्मना** स्वरूपेण **द्रव्यं** व्यवहारे तद्भावं गुणात्मतामिवोपगतमुपलक्ष्यते। निमित्तसरूपतां प्राप्तं निमित्तीत्यर्थः ॥ ३५० ॥

एवमपि च जातिप्राधान्यं न त्रुट्यतीत्याह।

**गुणस्य भेदकाले तु प्राधान्यमुपजायते ।**
**संसर्गश्रुतिरर्थेषु साक्षादेव न वर्तते ॥ ३५१ ॥**

यदा द्रव्यं प्राधान्येन विवक्षितं भवति तदा जात्युपधीयमानं तदभिधीयते। यदा तु **गुणस्य** अन्यस्माद् भेदेनाख्यानं प्रधानतया तदा स्वसामान्यावेशेन तद[1]भेदप्राप्तस्य तस्य प्रत्यायनम्। यदा तु जातिरेव प्राधान्येनाभिमता तदा तस्याः शब्दस्वरूपाध्यासेनाभिधानम्। तथा हि–धर्मान्तरसंसर्गोपहितविशेषं वस्तु शब्दाः शक्नुवन्त्यभिधातुं, न शुद्धम्। अत एव सं[2]सर्गनिमित्ता श्रुतिः शब्दसंसर्गश्रुतिरित्युच्यते। सा च धर्मान्तरमुखेनार्थेषु निविशते नोपधानत्यागेन, साक्षान्निरुपाधेरनिरूपणान्निरूपणपूर्वकाणां शब्दानामविषयत्वात् ॥ ३५१ ॥

एवं तावज्जातिपदार्थताप्रसङ्गाद् द्रव्यपदार्थतापि कथं भवतीत्याह। यदि वा सोऽयमिति संबन्धाद् द्रव्याभिधानेऽपि यदि जातिपदार्थता कथं तर्हि द्रव्यपदार्थतेत्याह।

**जातौ वृत्तौ[1] यदा द्रव्ये स शब्दो वर्तते पुनः ।**
**जातेरेव पदार्थत्वं न तदाभ्युपगम्यते ॥ ३५२ ॥**

जातौ वर्तित्वा[2] त[3]द्विशिष्टं यदा द्रव्यमप्याह, न जातावेवाभिधाविरामः शब्दस्य तदा जातेरेव केवलाया न पदार्थत्वम्। अभेदोपचाराच्च सोऽयमिति संबन्धेन यथासमर्थितं न द्रव्योपादानमभ्युपगम्यते। अपि तु तद्वत्पक्षोऽयं पूर्वत्र परिहारेऽभिहित इत्यर्थः ॥ ३५२ ॥

ननु च विरम्य व्यापारानुपपत्तेः शब्दानां कथं जातौ वर्तित्वा[1] स एव शब्दो द्रव्ये वर्तते। दर्शनभेदेन हि भिन्ना एव शब्दा जातिमात्रवचनास्तद्व[2]चनाश्चेत्यत आह।

350. 1. AE³ स्वरूपं. 2. B³ विशेषणस्य.
351 1. E³ तदभेदे प्रा°. 2. A शब्दसंसर्गनि°.
352. 1. P वृत्तो. 2. AE³ वृत्तित्वात्. 3. A °त्वात् वि°.



**प्रवृत्तानां पुनर्वृत्तिरेकत्वेनोपवर्ण्यते ।**
**प्रतिपत्तेरुपायेषु न तत्त्वमनुगम्यते ॥ ३५३ ॥**

शब्दस्यादभेदावसायेनैवमेकत्वेन व्यवहारः प्रतिपादनोपायः। संसृष्टार्थाभिधानं ह्यक्रममप्येवं कल्पनया क्रमेण प्रतिपाद्यते। न च परप्रतिपत्त्युपायानां परमार्थानुगमो न्याय्यो हेयत्वात् तेषाम्। तथा च तद्वदभिधानन[3]येऽक्रममेवोभयाभिधानम् ॥ ३५३ ॥

अत्रापि चोभयाभिधाने प्राधान्यविवक्षावशेन जातिपदार्थता द्रव्यपदार्थता च दर्शनभेदेन समुत्तिष्ठत इत्याह।

**अपृथक्च्छब्दवाच्यस्य जातिराश्रीयते यदा ।**
**द्रव्यस्य सति संस्पर्शे तदा जातिपदार्थता ॥ ३५४ ॥**

एकशब्दोपादनत्वेऽपि जातिद्रव्ययोर्यदा जातिराधारभेदप्रकल्पितभेदा कार्यप्रवृत्तौ प्राधान्येनाश्रीयते ब्राह्मणाः शुश्रूषयितव्याः, योऽयं पानीयं पिबति स गौः पदा न स्प्रष्टव्यः, गौरनुबन्ध्य इत्यादौ, तदा सत्यपि द्रव्यस्य शब्देन संस्पर्शे जातिपदार्थपक्ष एव जातिभेदप्रतिपादनमात्रोपक्षयत्वाद् द्रव्यस्य ॥ ३५४ ॥

**द्रव्यस्य सति संस्पर्शे द्रव्यमाश्रीयते यदा ।**
**वाच्यं तेनैव शब्देन तदा द्रव्यपदार्थता ॥ ३५५ ॥**

जात्युपादायिनैव शब्देन द्रव्यो[1]पादाने सत्यपि तस्याभिधेयतयैव संबन्धे **संस्पर्शे** यदा **द्रव्यं** प्राधान्येन कार्यसंबन्धितया **आश्रीयते** जातिस्त[2]द्विशेषणमात्रोपक्षया ब्राह्मणमिमं भोजयेत्यादौ द्रव्यपरायां चोदनायां तदा द्रव्यपदार्थपक्षः। तदेतदुक्तं

'कस्यचित्तु किञ्चित् प्रधानम्' ( M. Bhā. I. p. 246, l. 15. ) इति ॥ ३५५ ॥

जातिपरायामपि चोदनायां क्रियासंबन्धक्षमत्वात् द्रव्यमेव तात्पर्यदशा पदार्थोऽवतिष्ठत इत्याह।

**अपृथक्च्छब्दवाच्यापि भेदमात्रे प्रवर्तते ।**
**यदा संबन्धवज्जातिः सापि द्रव्यपदार्थता ॥ ३५६ ॥**

द्वयोरपि शब्दोपादानत्वे कार्यप्रतिपत्त्ययोग्यत्वादनादृत्य जातिं द्रव्यमेव पदार्थमातिष्ठन्ते व्याडिप्रभृतयः। यदाह :—

353. 1. AE³ वर्तित्वात्. 2. P I तदवचनाश्च. 3. E³ °नयोऽक्र°.
355. 1. A द्रव्योपपादने. 2. AE³ जातिस्तु तद्वि°.
356. 1. E³ om. संबन्धः. 2. AE³ धिकमर्थे°.

" चोदनासु च तस्यारम्भात् " ( va. 47, M. Bha. I. p. 244, l. 13. ) इति । जातिस्तु **भेदमात्रे** स्वाश्रयव्यवच्छेदमात्र एव तत्र **प्रवर्तते** शब्दाभिधेयापि । तद्यथा— राजपुरुष इत्यत्र समासवाच्योऽपि संव[1]न्धः संवन्धिस्वरूपावच्छेदमात्रोपयोगीत्युत्तरपदार्थप्रधान एव समासो न संवन्धप्रधानः एवं गवादिशब्दा जात्यभिधायिनोऽपि तद्वत्प्रधानाः । यथा च राजपुरुषादयः शब्दाः संवन्धोपाधि[2]मर्थं सकृदेवाभिदधति तथा जातिशब्दाः जातिविशिष्टम्, नात्र क्रम इति **अपृथक्छब्दवाच्या** इत्यनेनाह । दृश्यते च केषांचित् क्रमः । यथा गर्गशब्दो मूलप्रकृतिमुक्त्वा गर्गा इति वृत्तावपत्यमाहेत्यतो वैधर्म्यं सूचयितुमेवमत्राभिधानम् । एवं दर्शनभेदेन पदार्थद्वयं विभक्तम् ॥ ३५६ ॥

केषांचित्तु शुद्धैव जातिः शब्दवाच्येति जातिपदार्थपक्षे शुद्धं च द्रव्यं शब्दवाच्यमिति द्रव्यपदार्थ[1]पक्ष इतीदमपरं पक्षद्वयमित्याह ।

**अत्यन्तभिन्नयोरेव जातिद्रव्याभिधायिनोः ।**
**अवाच्यस्योपकारित्व आश्रिते तूभयार्थता ॥ ३५७॥**

केवलजात्यभिधायी शब्दोऽन्य एव । अन्यश्च केवलद्रव्याभिधायी । उभयत्रापि चानभिधीयमाना जातिर्द्रव्यं वा यथायोगमाधारभेदप्रकल्पनेन स्वगतलिङ्गसंख्यादिधर्मप्रकल्पनेन चोपकरोतीति भगवतः पाणिनेराचार्यस्यायं पक्षः सर्वपश्चान्निर्दिष्टः । त[2]था च विषयभेदेन क्वचिज्जातिपदार्थता मद्रह्रूदादिसिद्ध्यर्थमा[3]श्रिता, क्वचिद् द्रव्यपदार्थता दध्युदकादिसिद्ध्यर्थम् । अत एव

' जात्याख्यायां....( P. 1. 2. 58. )

' सरूपाणां....P. 1. 2. 64. )

इति योगद्वयमारब्धवानाचार्यः ॥ ३५७ ॥

तदेवं प्रसङ्गाद् दर्शनभेदोपक्षेपः । प्रकृतमुपसंहरति ।

**आश्रिते त्वाश्रयकृतं भेदमभ्युपगच्छता ।**
**पुनश्चाप्येकशब्दत्वं जातिशब्दे[1]ऽनुवर्णितम् ॥ ३५८ ॥**

व्यक्तिविशेषाश्रितायां जातौ शब्देनाभिधीयमानायां संहिताश्रयनिबन्धनं शब्दसंस्कारनिमित्तं लिङ्गवचनभेदमङ्गीकुर्वता प्रयोजकस्य शब्दार्थस्याभेदादेकशब्दत्वं जातिपदार्थवादेऽत्र पूर्वस्मिन् पक्षे भाष्यकारेण

---

357. 1. A पदार्थ इति पक्षः । इदम्° I °पदार्थे इतीदः, 2. A यथा. 3, A om. आश्रिता क्वचिद् द्रव्यपदार्थता दध्युदकादिसिद्ध्यर्थम्.

358. 1. AE³ शब्देन वर्णितं.



' यदि तस्या[2]पि वचनानि वाचनिकानि अहमप्येवं वक्ष्ये बहुषु योऽर्थो वर्तते तत्र बहुवचनम् '

इति ब्रुवता वर्णितमभिहितम् । तथा चैकशेषः प्रत्याख्यायते । प्राधान्येन जातिः शब्देनाभिधीयत इति सिद्ध एकस्तदभिधायी शब्दो व्यक्तिभेदेऽपि । ये तु संवन्धिनो जातेस्ते भिद्यमाना भेदनिवन्धनं संस्कारं शब्दस्यैकस्य निर्वर्तयन्ति । द्वितीयस्मिन्नपि पक्षेऽत्र—

' गुणवचनवदाश्रयतो लिङ्गवचनानि '

इति गुणभूतस्याभिधीयमानस्यापि द्रव्यस्य शब्दभेदप्रयोजकत्वाभावात् तदेवैकशब्दत्वमुपपादितम् । संवन्धिनो हि जातेः सामर्थ्याद् वा सन्निहिता निमित्तरूपाच्छुरिता वोपादीय[3]न्त इति परिहारद्वयतात्पर्यं व्याख्यातम् ॥ ३५८ ॥

तदेवं वृत्तिविचारप्रसङ्गागतं गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनसिद्धिविचारं भाष्यप्रदेशानुवादेन यथायथं परिसमापय्योपमानसमासविचारायोपक्रमते । तत्र प्रथमं तावदुपमानलक्षणोपयोगि भाष्यम् —

" मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते । अनिर्ज्ञातमर्थं ज्ञास्यामीति " ( M. Bhā. 1. p. 397, l. 9–10. ) एतद् व्याचष्टे

**अनिर्ज्ञातस्य निर्ज्ञानं येन तन्मानमुच्यते ।**
**प्रस्थादि तेन[1] मेयात्मा साकल्येनावधार्यते ॥ ३५९ ॥**

मीयते परिच्छिद्यते येन तन्मानम् इति सामान्येनावधारितस्य पदार्थस्य निश्चयेन विशेषरूपेणावधारणनिवन्धनं साकल्येन परिच्छेदकं प्रस्थः खारी आढकमित्यादि **मानं** कथ्यते । एतच्च मानसामान्यलक्षणमिति । **प्रस्थादि** इत्यादिग्रहणात् प्रमाणोन्मानादयोऽपि गृह्यन्ते । मानस्य ह्युत्प्रपरिभिर्विशेषणम् । तत्र प्रस्थादि परिमाणं दिष्ट्यादि प्रमाणं पलाद्युन्मानम् ॥ ३५९ ॥

मानसमीपमुपमानं व्याख्यातुमाह ।

**अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते ।**
**साकल्येनापरिज्ञानादुपमानं तदुच्यते ॥ ३६० ॥**

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । तथा ह्यप्रसिद्धम् **अनिर्ज्ञातम्** गवयादि **प्रसिद्धेन** गवा सादृश्यतः **तद्धर्म** तस्येव धर्मो यस्य तदिवेति परिच्छिद्यते । सादृश्यमात्रेण परिच्छेदो नारोहपरिणाहतः **साकल्येन** विशेषात्मनापि । अत एव सादृश्यं

---

2. AB³ तस्या एव. 3 E³ °पादीयत.

359. 1. IP प्रस्थादिकेन.

प्रत्यक्षेण स्फुटमत्रावर्ण्यत इति तदपेक्षोपमानस्येति नेदं मानम् अपि तु तस्य समीपं किञ्चिद्रूपतया परिच्छेदात् । अत एवोपमानस्य प्रामाण्ये[1]ऽपि विवदन्ते किल, प्रत्यायितवाक्यमेव प्रमाणम् । सादृश्यकथनं तूपाय इति । उपमीयतेऽनेनेति च करणव्युत्पत्त्या सदृशज्ञानमुपमानम् । साक्षात् तेनोपमेयपरिच्छेदात् संज्ञासंज्ञिसंबन्धप्रतिपत्तिः फलं केषांचित् । अन्येषामनेन सदृशी मदीया गौरिति फलम् । गवादिस्तूपमानं परम्परयोपयोगात् व्यवह्रियते, चक्षुरादीव प्रमाणशब्देन ॥ ३६० ॥

एवमुपमाने व्याख्याते सामर्थ्यादुपमेयमपि व्याख्यातं भवति, उपमितिक्रियाया उपमेयविषयत्वात् । ततश्च सामान्यधर्मव्याख्यानोपक्रमं सूत्रार्थं व्याचष्टे ।

**द्वयोः समानो यो धर्म उपमानोपमेययोः ।**
**समास उपमानानां शब्दैस्तदभिधायिभिः ॥ ३६१ ॥**

येन निमित्तेनोपमानोपमेयभावोऽर्थयोरसाववश्यसन्निधिरत्र **धर्मः** सादृश्यं सामान्यमुच्यते । द्विवृत्तित्वात् सामान्यं ब्रुव[1]न्ति सामान्यवचनाः । तैः **शब्दैः** उपमानवचनानां **समासः** इति सूत्रार्थः । शस्त्रीश्यामा शरकाण्ड[2]गौरेति ॥ ३६१ ॥

ननु चात्र श्यामत्वादिगुणः प्रत्याश्रयसमवेतत्वाद्भिन्न एवेति कथं सामान्यमित्याशङ्क्याह ।

**आधारभेदाद् भेदो यः श्यामत्वे सोऽविवक्षितः ।**
**गुणोऽसावाश्रितैकत्वो भिन्नाधारः प्रतीयते ॥ ३६२ ॥**

आश्रयभेदाच्छ्यामत्वगुणस्य **यो भेदः** सोऽत्र सामान्यवचनैरिति वदतो नाभिधित्सितः आश्रयविशेषसमवेतोऽप्य[1]पेक्षितमेकत्वं येन स तथाभूतः सामान्यवचनसामर्थ्यादेवावगम्यते गुणः । भिन्नाश्रयत्वेऽपि हि गुणस्यान्वयि रूपमस्त्येव । यद्वशाच्छ्याम इत्यभिन्नाभिधानप्रत्ययसम्भवः ॥ ३६२ ॥

न चात्राभेद एव विवक्षितः अपि तु

**गुणयोर्नियतो भेदो गुणजातेस्तथैकता ।**
**एकत्वेऽत्यन्तभेदे वा नोपमानस्य संभवः ॥ ३६३ ॥**

---

360. 1. AE$^{3}$ ण्ये वि°.

361. 1. A °मान्यंते °ब्रु°, E$^{3}$ मान्यतो ब्रु°. 2. AE$^{3}$ शरकाण्डा गौरिति, IP शरकाण्डगौरिति । The text adopted here is a guess, not found in the manuscripts. The text found in the mss and the other editions is not satisfactory.

362. 1. A °तोऽपि न विवक्षितमेकत्वं°.



अत्यन्तैकत्वे भेदाधिष्ठानस्य सादृश्यस्याभावान्नोपमानोपमेयभावः । न हि भवति गौरिति गौरिव । नात्यन्तभेदेऽन्वयिनो रूपस्याभावे हिमवानिव लोष्ट इत्युपमास्ति । तस्माद् भेदाभेदविमर्शेनोपमायामाधारभेदाद् भेदः । स्वाल[1]क्षण्येनान्वयिरूपवशेन चाभेदमाश्रित्य गुणोऽत्र सव्यापारः । एवंविध एव चार्थात्मा शब्दवाच्यः । न हि शब्दाः स्वालक्षण्येन भेदमर्थानामावेदयन्ते । सामान्य एव संबन्धग्रहणात् ॥ ३६३ ॥

मा भूदत्यन्तभेदे उपमा । अभेदे तु कथं न भवति । गुणो ह्येको द्वयोरुपमानोपमेयभावं वर्तयत्येवेत्याशङ्क्याह ।

**जातिमात्रव्यपेक्षायामुपमार्थो न कश्चन ।**
**श्यामत्वमेकं गुणयोरुभयोरपि वर्तते ॥ ३६४ ॥**

अनाश्रिताधारभेदस्य श्यामतामात्रस्य विवक्षायां शस्त्रीदेवदत्तयोः श्यामगुणसमवेतमेकं श्यामत्वं सामान्यमित्येव वचनव्यक्तिः । तथा च सादृश्ये[1]न परिच्छेदाभावः ॥ ३६४ ॥

तथा हि

**येनैव हेतुना श्यामा शस्त्री तत्र प्रवर्तते ।**
**स हेतुर्देवदत्तायाः प्रत्यये[1] न विशिष्यते ॥ ३६५ ॥**

अभिन्नसामान्यानुगतेन श्यामगुणेन समवेतेन शस्त्री श्यामेति समधिगम्यते । तेनैव चाभिन्नसामान्याधारेण गुणेन देवदत्तापि श्यामेति प्रत्ययमुपारोहतीत्युभयोः श्यामत्वमित्येव प्रतीतिर्नोपमार्थः कश्चिदत्र ॥ ३६५ ॥

तस्मात्—

**आश्रयाद् यो गुणे भेदो जातेर्या च विशिष्टता ।**
**ताभ्यामुभाभ्यां द्रव्यात्मा स[1]व्यपारः प्रतीयते ॥ ३६६ ॥**

आधारभेदनिमित्तो यो गुणे विवेकोऽन्वयिरूपहेतुकश्चाविवेकस्ताभ्यां गुणगताभ्यां भेदाभेदाभ्यां कारणभूताभ्यां द्रव्यस्वभाव उपमानाख्यः परिच्छेदकरणे उपमेयस्य व्यापृतोऽवधार्यते । ततश्चोपमानोपमेयप्रवृत्तौ तयोरुपमानोपमेयलक्षणः संबन्धोऽवतिष्ठते ॥ ३६६ ॥

ननु भेदाभेदौ विरुद्धौ कथमेकत्र व्यापृतौ स्यातामित्याशङ्क्याह ।

---

363. 1. E$^{3}$ °स्वलक्षणान्वयि°.

364. 1. IP सादृश्ये न प°.

365. 1. AE$^{3}$ प्रत्ययेन वि°.

366. 1. E$^{3}$ स व्या°.

**सोऽयमेकत्वनानात्वे व्यवहारः समाश्रितः ।**
**भेदाभेदविमर्शेन व्यतिकीर्णेन वर्तते ॥ ३६७ ॥**

**सोऽयम्** इत्यनुभवसिद्धत्वेनाप्रत्याख्येयत्वमाह किल। भेदाभेदावयमाश्रितः सादृश्यव्यवहारः संकीर्णैनैकत्वनानात्वरूपेण हेतुनावतिष्ठमानो बुद्धावुपारोहतीति को विरोधः। तथा ह्यत्यन्ताभेदे स एवायमिति बुद्धिः। अत्यन्तभेदे त्वन्यदेवेदमिति। सदृश इति तु बुद्धिर्भेदाभेदोभयरूपसम्भिन्ना जायते। तथा च जातिसमुद्देशेऽभिहितम्—

सकृत्प्रवृत्तावेकत्वमावृत्तौ सदृशात्मताम्।
भिन्नात्मिकानां व्यक्तीनां भेदापोहात् प्रपद्यते ॥

इति ॥ ३६७ ॥

एतदेव व्यतिरेकमुखेनोपपादयति।

**श्यामेत्येवाभिधीयेत जातिमात्रे विवक्षिते ।**
**शस्त्र्यादीनामुपादाने तत्र नास्ति प्रयोजनम् ॥ ३६८ ॥**

श्यामात्वसामान्यानुगतस्य गुणमात्रस्याधारविशेषणत्वेऽभिधित्सिते श्यामेयं देवदत्तेत्येव वक्तव्यं स्यात्, [1]एतावता विशिष्टजातीयेन संबन्धस्य प्रतिपादनात्। तत्र किमर्थं शस्त्रीवेत्युच्यते। अविशिष्टगुणयोगस्य गुणपदादेव प्रतीतेर्न कञ्चनातिशयमुपमानशब्दाः प्रत्याययन्तीति निष्प्रयोजनमेषामुपादानम् ॥ ३६८ ॥

नन्वेवं भेदाभेदविमर्शेनोपमानोपमेयभावेऽतिप्रसङ्गः। तथाहि—श्यामगुणः सकलाश्रयवर्त्यप्याधारभेदाद् भिन्नो जात्येकत्वाच्चैक इति कथं शस्त्र्येवोपमानमित्याशङ्क्य स्वालक्षण्येन गुणयोरुपमाविषययोस्तावद् विशेषमाह।

**अशब्दवाच्यो यो भेदः श्याममात्रे स[1] वर्तते ।**
**श्यामेषु केषुचिद्वृत्तिर्यस्य सोऽत्र व्यपेक्ष्यते ॥ ३६९ ॥**

प्रत्याधारं सूक्ष्माणां भेदानामसाधारण[2]स्ववाचकासंभवादसंविज्ञानपदः श्यामगुणविशेषो वाचकाभावेऽपि वाच्यान[3]पायादस्ति स सर्वस्मिन्नन्वयी। क्वचिदेव वर्तमानोऽस्मिन्नुपमानोपमेयसंबन्धे व्य[4]पेक्ष्यते सव्यापारत्वेनाश्रीयते। तथाहि शस्त्रीश्यामेति वृत्तिपदादेवोपमानोपमेययोः श्यामगुणो विलक्षणः प्रतीयते, योऽन्यत्रासंभवीति नातिप्रसङ्गः। इत्थं चाधारभेदादन्योऽपि कयाचित् स्वरूपप्रतिपत्त्यानवासितविवेकत्वाद् गुण एव सामान्यं भेदाभेदरूपाभ्यामौपम्यमवस्थापयतीत्युक्तं भवतीति ॥ ३६९ ॥

---

367. 1. E³ प्रवर्तते.
368. 1. AE³ I °वता विशि°.
369. 1. IP न व°. 2. A रणस्ववा° E³ °रणवाच°. 3. A °च्यान्वया°, E³ °च्यानन्वया°. 4. E³ °न्येऽप्यवेक्ष्यते.



गुणजातेरपि न सर्वस्या अत्र व्यापार इत्याह।

**श्यामेषु केषुचित् किञ्चित् किञ्चित् सर्वत्र वर्तते ।**
**सामान्यं कश्चिदेकस्मिन् श्यामे भेदो व्यवस्थितः ॥ ३७० ॥**

**किंचिद्** अपरसामान्यं **केषुचित्** श्यामगुणेषु **वर्तते**। तदुपमायां सव्यापारम्। **किंचित् तु सर्वत्र वर्तते** महासामान्यम्। तदविशेषादुपमाननिमित्तं न भवति। **कश्चित् श्यामे** गुणे प्रतिनियते **भेदो** विशेषो[1] वर्तते। सोऽप्यतिशयप्रख्यापनायोपमाननिमित्तं भवत्येव। तद्यथा—चन्द्रमसः कान्तिविशेषः कन्यावदनस्योपमानिमित्तमतिशयाध्यारोपात्। उत्कृष्टगुणेन हि न्यूनगुणस्योपमानादुत्कर्षसमारोपात् प्रशंसा जायते। पूर्वं तु निरतिशयो भेदो नोपमानाङ्गमित्युक्तम् ॥ ३७० ॥

ननु गुणसामान्यव्यतिरेकेणापरा जातिरत्र नावधार्यत इत्याशङ्क्य तामुपपादयितुमाह।

**तथाहि सति सौरभ्ये भेदो जात्युत्पलादिषु ।**
**गन्धानां सति भेदे तु सादृश्यमुपलभ्यते ॥ ३७१ ॥**

जात्युत्पलादिगन्धानां गन्धत्वमहासामान्यव्यतिरेकेण **सौरभ्ये** शोभनामोदत्वलक्षणेऽपरसामान्ये सति **भेदो**ऽवधार्यते। येषां सौरभ्यं नास्ति ततो व्यतिरेको लक्ष्यते। [1]तथा ह्युत्पलगन्धमाघ्राय सन्तमसेऽपि प्रत्यभिजानात्युत्पलमिदमिति। एवं जतिगन्धा[2]द्यपि। ततश्च सुरभित्वमपरसामान्यमाधारविशेषनियतमस्तीति निश्चयो यत्संबन्धात् सुरभीणि सुगन्धीनि मानि द्रव्याणीति नि[3]रूपणा। सत्यपि चैवं सौरभ्येण गन्धानां विशेषे केषांचित् सादृश्यमप्यस्ति। तथा हि—गन्धयुक्तद्रव्यैर्नखशैलेयादिभिरवान्तरभेदभिन्नसुरभिगन्धैरपि कस्यचित् स्वभावप्रत्यासत्त्या पद्मादिसुरभिसदृशगन्धं[4] द्रव्यान्तरं निर्वर्त्यते, पद्मगन्धि किञ्जल्कगन्धि मालतीगन्धि इत्यादि। एवं गन्धवद्रूपस्याप्यवान्तरजातिभेदो न्याय्य इति श्यामेषु केषुचित् वर्तमानमपरसामान्यं सिद्धम् ॥ ३७१ ॥

प्रतिनियतगुणवृत्त्यपरसामान्यमिति गुणानां प्रतिनियमः किंकृत इत्याह।

**गुणानामाश्रयाद् भेदात् स्वतो वाप्यनुगम्यते ।**
**अनिर्देश्याद् विशेषाद् वा सङ्करात् वा गुणान्तरैः ॥ ३७२ ॥**

स्वकारणादासादितभेदाद् द्रव्यलक्षणादाधारात् कश्चिद् गुणानां विशेषः। तद्यथा— उत्पलतमालादिगतस्य श्यामत्वस्य। तथा चात्र स्वभावसाम्यादुपमाप्रवृत्तिः—

---

370. 1. A नियतो व°, E³ विशेषे.
371. 1. A यथा हि. 2. A °गन्धावपि. 3. E³ न रूपणा. 4. AE³ गन्धद्रव्या°.

रोलम्बशब[1]लव्यालतमालश्यामलं नभः ।
नभोनिर्मलनिस्त्रिंशव्यग्रपाणय आहवे ॥

इति । एकजातीयाधारसमवायेऽपि कश्चित् स्वरूपादेवाचिन्त्यवैभवाद् गुणानां विशिष्टानामेवोत्पत्तेर्विशेषोऽध्य[2]क्ष्यत एव धूसरत्वादिः । कश्चित् पुनरसंविज्ञानपदः कारणमात्रादनुत्पन्नः कालपरिवासहेतुको विशेषो गुणानाम् । तद्यथा—सुरादीनां परिणामविशेषासादनेन रसगन्धवैचित्र्योत्पत्तिः । तथाहि तत्र सामग्र्याः खण्डशः कार्यानुत्पादात् सामग्र्यन्तर्गतात् कारणादयमतिशय इति निर्देष्टुं न शक्यते । द्रव्यान्तरगतगुणसम्मिश्रणाद् वा विशेषो गुणानाम् । तद्यथा सहकारगन्धाधिवासस्यासवस्य मालतीकुसुमाधिवासितस्य च तैलस्य । तदेवमुपात्तभेदानां गुणानां कयाचित् प्रत्यासत्त्या केषांचिदपरसामान्यसद्भावे सामान्यव[3]चनेनोपमानवचनस्य समाससिद्धिः ॥ ३७२ ॥

न च नियोगतो गुणानां साम्यमेवोपमाहेतुः । अपि तूत्कृष्टगुणमुपमानमित्याह।

**उपमानं प्रसिद्धत्वात् सर्वत्र व्यतिरिच्यते ।**
**उपमेयत्वमाधिक्ये साम्ये वा न निवर्तते ॥ ३७३ ॥**

व्यतिरेकोऽत्राधिक्यं विवक्षितम् । तेनाधिक्यगुणमुपानमित्यर्थः । तच्चाधिक्यं वास्तवेन रूपेण भवतु, मा वा भूत् । किन्तु **प्रसिद्धत्वात्** प्रतीतत्वात्. ज्ञापकत्वेनोपमेयं प्रत्याश्रीयमाणं प्रसिद्धमेव न्याय्यमिति तद्गुणस्योत्कर्षः प्रसिद्धतैव । तथा च न्यूनगुणमपि शृङ्गाररसपरिपोषणपरतया नारीमुखं शशिबिम्बस्योपमानत्वेन निर्दिशन्ति। कामिनां हि प्रेयसीमुखमुत्कृष्टगुणत्वेन प्रसिद्धम् । यथा

ईर्ष्यावशेन कलुषत्वमुपागतस्य
दूरान्मुखस्य तव सुन्दरि[1] साम्यमेत्य ।
चेतःप्रहर्षभ[1]रपूरितपूर्णदेहः
स्वाङ्गेष्वपि प्रसममद्य न माति चन्द्रः ॥

इत्थञ्च कृत्वा[2] परिपूर्णगुणेन न्यूनगुणमुपमीयत इति यथाप्रसिद्धि परिपूर्णगु[3]णता व्याख्येया। अत एवाह **सर्वत्र** इति। न केवलं वस्तुतो यत्रोत्कृष्टो गुणस्तद् उपमानं यावन्न्यूनगुणमपि स्वप्रसिद्ध्याश्रयेणोपमानं **व्यतिरिच्यते** गुणाधिक्येन व्यवतिष्ठते। उपमेयभावस्तु गुणस्य वस्तुत **आधिक्ये**ऽतिरेके **साम्ये** तुल्यत्वे वा **न निवर्तते** नापैति। उपमानं नि[4]योगतोऽधिकगुणमेव विवक्षितम्। उपमेये[5]त्वनियम इत्यर्थः ॥ ३७३ ॥

372. 1. IP ( व ? र ) ल व्या°. 2. A वक्ष्यत एव. 3. AE[3] सामान्यवचनतायां तद्वचनेनोपमानवचनस्य समासात् सिद्धिः.

373. 1 A °र्षपरिपू°. 2. E[3] om. कृत्वा. 3. E[3] परिपूर्णता. 4. AE[3] नियताधिकगुण°. 5. E[3] उपमेयत्वेन नि°.



इदानीं प्रकारान्तरेणोपमानं लक्षयितुं मानलक्षणभाष्यमन्यथा व्याचष्टे।

**अन्यैस्तु मानं जात्यादि मेयस्यार्थस्य वर्ण्यते।**
**अनिर्ज्ञातस्वरूपो हि ज्ञेयोऽर्थस्तेन मीयते ॥ ३७४ ॥**

मेयस्यावच्छेद्यस्य द्रव्यस्योपाधिविविक्तस्य प्रतीत्यनुपारोहात् प्रतीतये जातिगुणक्रियाः समाश्रीयमाणा मानव्यपदेशमासादयन्ति ॥ ३७४ ॥

**मि[1]तस्तु स्वेन मानेन प्रसिद्धो यो गुणाश्रयः ।**
**आश्रयान्तरमानाय स्वधर्मेण प्रवर्तते ॥ ३७५ ॥**
**रूपान्तरेण संस्पर्शो रूपान्तरवतां सताम् ।**
**भिन्नेन यस्य मेयानामुपमानं तदुच्यते ॥ ३७६ ॥**

**स्वेना**त्मीयेन जात्यादिमानेन परिच्छि[2]न्नो **यो** गुणविशेषाधारः **प्रसिद्धः** प्रतीतः सोऽप्रतीतगुणाधारान्तरप्रज्ञापनाय स्वसमवेतेनैव गुणेन यदा व्याप्रियते तदा तेन **रूपान्तरेण भिन्नेन रूपान्तरवतां** भिन्नानामपि **मेयानां** परिच्छेद्यानां परिच्छेदकं **तदुपमानम् उच्यते** । तत्र **संस्पर्शः** संबन्धोऽत्यन्तभिन्नानां नोपपद्यत इति अर्थादन्वयिधर्माक्षेपः। ततश्च भेदाभेदविमर्शेनैतदप्युपमानम्। सादृश्यमात्रेण च परिच्छेदानात्यन्ताय मान**मुपमान**मिति लक्षणमवस्थापितम्। तत्र शस्त्रीदेवदत्तयोर्गुणः श्यामत्वमुपमानोपमेयनिबन्धनं शस्त्रीश्यामेति ॥ ३७५, ३७६ ॥

यदा तु श्यामत्वमिदमनेन सदृशमित्युच्यते तदा

**धर्मः समानः श्यामादिरुपमानोपमेययोः ।**
**आश्रीयमाणप्राधान्यो धर्मेणान्येन भिद्यते ॥ ३७७ ॥**

उपमानोपमेयभावव्यवस्थापको यः श्यामादिधर्मः स[1] यदोपकारित्वव्युदासेनाश्रयभिन्नः प्राधान्येनोपमेयतयोपादीयते तदा द्रव्यायमाणत्वात् तस्यापरेण स्वगतेन धर्मेण विशेष्यमाणत्वमित्यन्यो धर्मोऽत्रोपमानोपमेयभावनिबन्धनम् ॥ ३७७ ॥

एतदेवोदाहरति—

**शस्त्रीकुमार्योः सदृशः श्याम इत्येवमाश्रिते ।**
**व्यपदेश्यमनेनेति निमित्तं गुणयोः स्थितम् ॥ ३७८ ॥**

अनेन करणभूतेन धर्मेण दीप्तयादिना श्यामगुणगतेन तुल्योऽयं श्यामगुण इति निरूपणीयम्। तत्रापि च श्यामगुणयोरयं दीप्तयाख्यो धर्मः समान इति प्राधान्ये धर्मस्य धर्मान्तरमुपमायाः सव्यापारमन्वेष्यमित्यनवस्थैवात्र ब्रह्मकाण्डे प्रतिपादिता

375, 376 1. E[3] मितैस्तु. 2. E[3] °च्छिन्नो.

377. 1. A om. स.

" सामान्यमाश्रितं यद् यदुपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते " ।। ( Vāk. I, Verse 63. )

इति यावच्चात्र विवक्षा तावदपर्यवसानं[1] धर्माणाम् । विवक्षाविरामे तु विरतिः ।। ३७८ ।।

एव[2]ञ्चोपमानमुपमेयाद् भेदेन यदा विवक्ष्यते तदोपमानोपमेयभावः शाब्द इत्याह ।

**यदा निमित्तैस्तद्वन्तो गच्छन्तीव तदात्मताम् ।**
**भेदाश्रयं तदाख्यानमुपमानोपमेययोः ।। ३७९ ।।**

उपमानोपमेयभावे यन्निमित्तो गुणः [3]श्यामादिस्तेन **यदा** तौ निमित्तिनावुपमानोपमेयावैकात्म्यमिव [4]प्रतिपद्येते [5]गुणगुणिनोरभेदोपचारात् **तदा** भेदाधीनो व्यपदेशो विवेकेनोपमानस्योपमेयस्य च । तथा च तत्रोपमानोपमेयभावलक्षणसंबन्धद्योतकमिवादिपदमुपादीयत इति परिपूर्णेयमुपमा । शस्त्रीश्यामा । देवदत्ता शस्त्री यथा श्यामा । गौरिव गवयः । शैला इव वलाहका इति । अत्र ह्युपमानोपमेयभावसंबन्धहेतोर्गुणस्य त[6]द्वताभेदेन निर्देशे संबन्धश्चाभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति न्यायात् तद्वाचिकाया विभक्तेरभावात् प्रथमान्तयोः समन्वयो न स्यादिति द्योतकमिवाद्युपादीयते समन्वयार्थमित्युपमानोपमेयतद्भावद्योतकपदप्रयोगात् परिपूर्णत्वम् ।।३७९।।

यदा तु सादृश्यद्योतकोऽभेदाध्यारो[1]पोऽत्र तदोपमानोपमेयभावस्य गर्भीकार इत्याह ।

**तत्त्वासङ्गविवक्षायां येषु भेदो निवर्तते ।**
**लुप्तोपमानि तान्याहुस्तद्धर्मेण समाश्रयात् ।। ३८० ।।**

उपमानोपमेययोस्तत्त्वासङ्गो[2]ऽभेदाध्यारोपो यदा विवक्ष्यते तदा भेदस्य निवृत्तत्वात् तदधीन उपमानोपमेयभावोऽपि तिरोधीयते । गौर्वाहीकः, सिंहो माणवक इति । परार्थे शब्दप्रयोगान्यथानुपपत्त्या चात्र कार्यात् कारणानुमानेन यास्कप्रभृतय आचार्याः समानधर्मान्तर्भावेन **लुप्तोपमानि** इमान्युपमानान्याचक्षते । लुप्ता साक्षादनवधार्यमाणा उपमा येषाम् । **तद्धर्मेण समाश्रयात्** इति । तेन समानेन धर्मेण गर्भीकृतेन सता उपमानशब्देनोपमेयस्य परिग्रहादित्यर्थः ।। ३८० ।।

एवञ्च कार्यस्य नियतकारणपूर्वकत्वमुक्तम् ।
' अन्यैस्तु मानं जात्यादि ' .... ( verse 374 )
इत्यनेन प्रकारेण 'यन्नात्यन्ताय मिमीते तदुपमानम्'
इति भाष्यं तात्पर्येण व्याचष्टे ।

379. 1. P °वसानां ध°. 2. P एतश्चो. 3. A गुणादिः श्यामादिः. 4. E[3] प्रतिपाद्येते. 5. A गुण इति गुणगुणिनो°. 6. AE[3] तद्वता भे°.

380. 1. P om. अत्र. 2. A ङ्ग योऽभेदा, E[3] °ङ्ग भेदा°.



**शस्त्र्यां प्रसिद्धं श्यामत्वं मानं सा तेन मीयते ।**
**अन्या श्यामा तु तद्रूपा तेनात्यन्तं न मीयते ।। ३८१ ।।**

साकल्येन परिच्छेदकं मानम् । तच्च शस्त्रीगतं **श्यामत्वम्** । तद्धि तत्र **प्रसिद्धं** परिच्छेदकम् । **अन्या** तु देवदत्ता **श्यामा**पि न प्रसिद्धेति तेन श्यामत्वेन क[1]रणभूतेन परिच्छिद्यते । एवमपि परिच्छिद्यमाना[2] नात्यर्थं सर्वतः परिमीयते । नहि धर्मसामान्यानुगममात्रात् सर्वात्मनार्थोऽवधारयितुं पार्यते ।। ३८१ ।।

तदेवं शस्त्रीगतेन श्यामत्वेन देवदत्ता यदा नात्यन्ताय परिच्छिद्यते तदा नात्यन्ताय मानमुपमानं शस्त्री सम्पद्यत इत्याह ।

**शस्त्री स्वेन गुणेनातो मिमानामाश्रयान्तरम् ।**
**असमाप्तगुणं सिद्धेरुपमानं प्रचक्षते ।। ३८२ ।।**

निजेन समाप्तफलेन श्यामगुणेनासमाप्तगुणमाधारान्तरं देवदत्तालक्षणं परिच्छि[1]न्दतीं **शस्त्रीम् उपमानम् आहुः** । **सिद्धेः** इ[2]ति । परिपूर्णगुणत्वादित्यर्थः ।। ३८२ ।।

एवं प्रकारद्वयेनोपमानोपमेयौ व्याख्याय सामान्यवचनत्वं विचार्यते । तथाहि—निमित्ताभेदापन्नस्य निमित्तिनो[1]ऽभिधानादुपमानगतं वा तदभेदापन्नं निमित्तमुच्यते तदुपमेयगतं वा न तूभयगतं सकृदभिधातुं शक्यत इत्यनन्वयात् कथं सामान्यवचनत्वमित्याशङ्क्याह ।

**उपमेये[2] स्थितो धर्मः श्रुतोऽन्यत्रानुमीयते ।**
**श्रुतोऽथवोपमानस्थ उपमेयेऽनुमीयते ।। ३८३ ।।**

इह साधारणधर्मप्रयुक्त उपमानोपमेयभावः । तत्र च युगपदुभयगतत्वेन साधारणधर्मस्याभिधानं न संभवतीति शस्त्रीश्यामा देवदत्तेत्युक्ते श्रुतेनैव श्यामत्वेन समन्वयादश्रुतकल्पनायोगादेकत्रोपक्षयेऽपि शब्दस्यार्थान्तरेऽप्यनुमानाद् गुणसंबन्धावसाय इति यो दृष्टः[3] समानो गुणस्तस्यैकतरोपक्षयेऽप्यभिधाने सामान्यवचनत्वोपपत्तिः ।। ३८३ ।।

तत्रोपमेये श्रुतेर्निदर्शनमाह ।

**अधीयते ब्राह्मणवत् क्षत्रिया इति दृश्यते ।**
**उपमेयस्य भिन्नत्वाद् वचनं क्षत्रियाश्रयम् ।। ३८४ ।।**

उपमेयानां क्षत्रियाणां बहुत्वाद् बहुवचनमत्र श्रूयमाणमध्ययनस्य साधारणस्य धर्मस्योपमेयगतत्वमावेदयते । सामर्थ्यात् पुनरुपमानैर्ब्राह्मणैरस्य संबन्धःप्रतीयते । उपमानस्य

381. 1. AE[3] कारण°. 2. A °मानात्यर्थं.

382. 1. AE[3] °न्दन्तीं. 2. A सिद्धेः प्रसिद्धेरिति, E[3] I प्रसिद्धेरिति,

383. 1. A निमित्तितोपधानात्, E[3] निमित्ततोपधानात् . I निमित्तिनोपधानात. 2. E[3] उपमेयस्थि°. 3. A °दृष्टस्वभावो गु°.

पुनरुपकारित्वात् तद्गतः श्रुतो धर्म उपमेये नियोगतोऽवगन्तव्य इति न तत्रोदाहृतम् ॥ ३८४ ॥

इत्थं चोभयगतत्वेनानभिधानेऽपि सामान्यवचनत्वमुपपद्यत इत्याह ।

**साधारणं ब्रुवन् धर्मं क्वचिदेव व्यवस्थितम् ।**
**सामान्यवचनः शब्द इति सूत्रेऽपदिश्यते ॥ ३८५ ॥**

अन्यतरगतत्वेनापि शब्देनाभिधीयमानो[1] धर्मो वास्तवेन रूपेण भेदापरामर्शात् सामान्यमिति तमभिदधद् भवति सामान्यवचनः शब्दः । न हि यतः शब्दो वक्तुमयगतत्वेनातः साधारणधर्मो भवति । विशेषस्य ब्राह्मणादेः शब्देन सामान्येनाभिधानेऽपि साधारणत्वाभावात् । तस्माद् वास्तवेन रूपेण साधारणं श्यामत्वसामान्यमेकगतत्वेनाप्यभिधीयमानमन्यत्रानुमानात् साधारणमेवाभिहितं भवति ॥ ३८५ ॥

तदेवं गुणजातौ वृत्तः सामान्यवचनः । यदापि गुणः श्यामादिस्तत्रापि वर्तमानः श्यामादिः शब्दः सामान्यवचन एवेत्याह ।

**नाभेदेन न[1] भेदेन गुणो द्विष्ठोऽभिधीयते ।**
**भिन्नयोर्धर्मयोरेकः श्रूयतेऽन्यः प्रतीयते ॥ ३८६ ॥**

द्वयोरुपमानोपमेययोर्वर्तमानो गुणः श्यामलक्षणो[2] **नाभेदेना**न्वयिरूपावेशेनाभिधीयते शब्देन । यस्मादुपमानेनावच्छिद्यते उपमेयेन वा । तथा चैकगतत्वेन विशिष्ट इति नाभेदेनाभिधानम् । नापि सहजेन व्यावृत्तेनात्मनाभिधीयते । न हि स्वालक्षण्येन भेदं शब्दाः स्पृशन्ति, सामान्यवचनत्वात् । नापि व्यावृत्तेनात्मना उपमायामुपयोगः । तस्माच्छ्याम[3]शब्देन तावद् गुणोऽ[4]विशेषेण कथ्यते । अन्यतरसंबन्धाद्[5] अवच्छिद्यमानोऽपि सामर्थ्यादितरगतत्वेनावधार्यत इति भवति तच्छब्दः सामान्यवचनः ॥ ३८६ ॥

एवं तात्पर्यतो भाष्यं व्याख्याय पाठपूर्वकं साक्षाद्व्याचष्टे ।

**नात्यन्ताय मिमीते यत् सामान्ये समवस्थितम् ।**
**सादृश्यादुपमेयार्थः समीपे परिकल्प्यते ॥ ३८७ ॥**

यदत्यन्ताय मेय[1]शरीरं परिच्छिनत्ति तन्मानं प्रस्थादि जात्यादि वा व्याख्यातम् । तत्समीपे यत् तदुपमानम् । अत्र च तदित्यनेन प्रज्ञापनीयत्वेनाधिकृतत्वात् प्रधानमुप-

385. 1. E[3] नो व ? धर्मो.

386. 1. E[3] च 2. AE[3] णो गुणेनाभे[3]. 3. E[3] °च्छ्यामस्थितं सादृश्यादुपमेयार्थसमीपं परिकल्प्यते. After this comes the beginning of the commetary on kā.
4. A विशेषेण 5. A I °न्धात्स्ववर्वाच्छ°.

387. 1. AE[3] °मेयं शरीरं.



मेयं प्रत्यवमृश्यते । तस्योपमेयस्य यत् समीपे तदुपमानम् । सामीप्यं च धर्मप्रत्यासत्तिकृतम् । तथा च सादृश्येन परिच्छेदकत्वात् सामान्ये साधारणे धर्मे संबन्धहेतावनवस्थितं तदपेक्षमुपमानं [2]नात्यर्थं परिच्छिनत्ति । यो हि साधारणो धर्मस्तावतोपमेयस्यात्र परिच्छेदो विधीयते उपमानेन, न त्वन्येन धर्मेण । शस्त्र्या हि श्यामगुणतयावच्छिद्यते देवदत्ता न [3]तु संस्थानादिरूपेणेत्यपरिपूर्णमिदं मानमुपमेयसमीपवर्ति ॥ ३८७ ॥

तत्समीप इति भाष्यस्य व्याख्यानान्तरमाह ।

**मानं प्रति समीपं वा सादृश्येन प्रतीयते ।**
**परिच्छेदाद्धि सादृश्यमिह मानोपमा[1]नयोः ॥ ३८८ ॥**

इह यदा प्रधानानुग्रहाय गुणो व्याप्रियते तदास्योपसर्जनत्वात् परामर्शो मा भूत्, इह तु मेयं प्रति परिच्छेदोपयोग्यपि मानं स्वरूपे लक्ष्यमाणे प्रधानमिति तदे[2]व तच्छब्देन परामृश्यते । तथा च मानस्य **यत्समीपं** तदुपमानम् । सामीप्यं च समानधर्मयोगात् । अस्ति चेह **सादृश्यं** परिच्छेदहेतुत्वं नाम **मानोपमानयोः** । एकमत्यन्ताय परिच्छेदकम् । अपरं नात्यन्ताये[3]ति भेदः ॥ ३८८ ॥

एवमुपमानलक्षणार्थं

"मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते– अनिर्ज्ञातमर्थं ज्ञास्यामीति । तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानम्"

(M. Bhā. I p. 397, l. 9–10.)

इति भाष्यं व्याख्यातम् । अतःपूर्वं तूपमानलक्षणप्रस्तावहेतुः प्रश्नभाष्यं

"किं यदेवोपमानं तदेवोपमेयम् । आहोस्विदन्यदुपमानमन्यदुपमेयम्"

(M. Bhā. I. p. 397, l. 5–6.)

इत्यस्ति । तद् व्याचष्टे ।

**एकजातिव्यपेक्षायां तदेवेत्यव[1]सीयते ।**
**भेदस्यैव व्यपेक्षायामन्यदेवेति गम्यते ॥ ३८९ ॥**

इह यथाप्रत्ययमर्था व्यवहा[2]र्यतामापद्यन्ते । तत्र यदोपमानोपमेययोरभिन्नमन्वयिरूपं व्यक्तिभेदतिरोधानेनैकगुणजात्यात्मकमभिसंहितं तदा तदेकरूपाध्यासादनयोरभेदो निश्चीयत इति **तदेवे**त्युच्यते । यदा तु निजो भेदो व्यावृत्तिर्व्यक्तिरू[3]पनिरूपणेनाभिसंहिता तदार्थान्तरस्यैव प्रसिद्धस्यावधारणा**दन्यदेवे**ति भणितिः । किमुपमानत्वेऽत्यन्ताभेद उपयुज्यते किं वाऽत्यन्तभेद इत्यभिप्रायः ॥ ३८९ ॥

2. AE[3] °क्षमुपमानेनात्यर्थं. 3. A ननु.

388. 1. E[3] मानोपमेययोः. 2. E[3] तदेव. 3. A °न्ताय भेदः

389. 1. A I °त्यभिधीयते. 2. E[3] °रमाप°. 3. AE[3] रूपं निरू°.

ननु चोपमानमुपमेयमिति साधनविभागानुरोधी व्यपदेश एवानयोर्भेदं दर्शयति । कर्मकरणसाधनौ हि प्रत्ययौ भिन्नार्थाविति कथमभेदाशङ्केति । एतद-भ्युपगच्छति । —

**कर्मत्वं करणत्वं च भेदेनैवाश्रितं यतः ।**
**अत्यन्तैकत्वविषयान्न स्यात् तेनात्र संशयः ॥ ३९० ॥**

प्रत्ययाभ्यां विभागेन यस्मात् **कर्मत्वं करणत्वं** चोपात्तं तस्मादत्र निरस्ताशेष-भेदनिबन्धनं वास्तवं यदेकत्वं तत् संशयस्य पक्षो विषयो नोपपद्यत इति भिन्नयोरेव सामान्यधर्मोपाधिकमेकत्वं संशयविषयो न विरुध्यते ॥ ३९० ॥

दृश्यते चैवंविधेन भिन्नानामपि काल्पनिकेनाभेदेन व्यवहार इत्याह ।

**भेदेन तुल्यरूपत्वाच्छालींस्तानिति दृश्यते ।**
**जात्यभेदात् स एवायमिति भिन्नोऽभिधीयते ॥ ३९१ ॥**

अवधृतात्मभेदा अपि शाल्यो रूपसामान्यापह्नतभेदैः प्रत्ययैरभेदेनावसाय[1] त एव भुज्यन्त इति व्यपदिश्य[2]ते । एवं तान्येव वासांसि परिधीयन्त इति च । एतच्च सादृश्यपर्यायं रूपसामान्यमभेदनिबन्धनमुक्तं शास्त्रे

" रूपसामान्याद् वा " ( Vā 16, M. Bha. I. p. 19, l. 4. )

इत्याकरवार्त्तिके । तदेवोपपादयितुं

' तानेव शालीन् भुञ्ज्महे ये मथुरा[3]यां दृष्टाः ' ( M. Bhā. I. p. 19. l. 6. )

इति दृष्टा[4]न्तितम् । न केवलं च सादृश्यमात्रनिमित्तो भेदावसायो यावज्जात्यभेदनि बन्धनोऽपि, तथा ह्येकसामान्याध्यासिता व्यक्तयोऽभेदेन व्यपदिश्यन्ते, ' चत्वारो ब्राह्मणा उदकुम्भानाहरेयुः ' इत्यादौ । अत्र हि माठरादिभेदेऽपि ब्राह्मण्येनाभेद उपात्तः । एवमिहाप्युपमानोपमेययोः सदृशधर्मनिमित्तया प्रत्यासत्त्या तद्गतैकजातिसमावेशनाद् वाभेदस्य युज्यते संशयविषयता ॥ ३९१ ॥

भेदस्यापि युज्यत इत्याह —

**कथं ह्यवयवोऽन्यस्य स्यादन्य इति चोच्यते ।**
**अत्यन्तभेदे नानात्वं यत्र तत्त्वं न विद्यते ॥ ३९२ ॥**

' हलन्ताच्च ' ( P. 1. 2. 10. )

इत्यत्रान्तशब्दमवयवमाश्रित्य हल् अन्ते [1]यस्येकः तस्मादिति व्याख्यायमाने चोदित-मिदम् ।

" कथं हीको[2] नाम हलन्तः स्यादन्य[3]स्यान्यः " (M. Bhā. I. p. 197, l. 13.)

इति । अत्र चावयवावयविनोरन्यत्व एवोपपत्तिरित्यत्यन्तभेदोऽयं विवक्षितः । तथा [4]ह्यत्यर्थेन ययोर्भेदो यत्र न कथंचित् तत्त्वमभेदः सम्भवति । तस्मिन् सति यन्नानात्वमत्यन्तं तदभिसंधायैतदुक्तमन्यस्यान्य इति । उभाभ्यामन्यशब्दाभ्यामैकान्तिकमन्यत्वं निर्दि-शति । अवयवस्त्ववयविनः कथञ्चिदनन्यः समवायेन तिरोहितभेदत्वात् । वर्णस्तु वर्णान्तरस्यानारम्भकत्वात् सर्वथैव भिन्नो नावयवो युज्यते । तदेवमत्र यथाकथञ्चि-दनन्यत्वेऽप्यवयवस्यात्यन्तभेदाभिप्रायमनुपपत्तिरुक्ता । एवमिहाप्युपमानोपमेययोर्जात्य-भेदाद् रूपसामान्याद्वा कथञ्चिदभेदेऽपि तदनादरेणात्यन्तभेदमाश्रित्यान्यदेवेति संशय-विषयता कथिता ॥ ३९२ ॥

तत्रावयवावयविनोरेवाभेदसंभवो भिन्नयोरपि, न तु वर्णयोः परस्परमनारंभक-योरित्याह ।

**अभेदस्य विवक्षायामेकत्वं संघसंघिनोः ।**
**सङ्घिनोर्नत्वभेदोऽस्ति तथा[1]न्यत्वमुदाहृतम् ॥ ३९३ ॥**

संघोऽवयवी, संघिनोऽवयवाः, तेषां समवायादपोदितभेदानां यदा विवक्षा तदा[2]भेद एवाभिमतः संघः समुदायो वा वनादिः । तद्वन्तः समुदायिनो वृक्षादयः, तेषां समुदायेन सहाभेदेन अ[3]व्यतिरेकेऽभिधित्सिते वनं वृक्षा ब्राह्म[4]णाः संघ इत्येकत्वमभेदो भवति । तथाहि वनादिशब्दाः संघात्मना ता[5]न् समुदायिनः प्रतिपादयन्ति । वृक्षादयस्तु जातिभेदा[6]नुरागेण तानेवेत्यस्ति भिन्ननिमित्तप्रयुक्तयोः शब्दयोरेकत्र वृत्तिः सामानाधिकरण्यम् । यदा तु भेदविवक्षात्र तदा वनादिशब्दाः संघलक्षणधर्ममात्रवचना इति तदुपजनितव्यतिरेकाणां संघिनामभिधानं वृक्षाणां वनं ब्राह्मणानां संघ इति । एवं [7]**संघसंघिनोर्भेदाभेदौ** । **संघिनोः** समुदायिनोस्तु **न कदाचिदभेदो** भवति, असंबन्धात् । तथाहि शिंशपायाः पलाशस्य वा नाभेदप्रतिपत्तिः । माठरस्य कौण्डिन्यस्य च । एवं वर्णा अपि परस्परमनारंभात् संघिनोऽत्यन्तभिन्नाः[8] । परस्परेणाभेदम[9]योग्याः प्रतिपत्तुमित्यन्यत्वमेव कथितम् । तथा च भेदाभेदावन्योन्यानु-विद्धौ शुद्धौ[10] च संभवत इतीह[11] शुद्धौ विहायेतरौ विवक्षिताविति भेदाश्रयः प्रत्यय-भेदोऽभेदाश्रयश्चैकत्वेन[12] प्रश्न उपपद्यत एव । अथवोपमानमुपमेयमिति यत् प्रसिद्धं लोके तत् किमेकमुतानेकमिति विचारविषयत्वेन प्रसिद्धभेदानुवादः ॥ ३९३ ॥

---

391. 1. A °वसीयन्त, एव भु°, I °साय, एव भु°. 2. AE[3] °श्यन्ते. 3. The Bhāṣya passage is: तानेव शालीन् भुञ्ज्महे ये मगधेषु. 4. E[3] दार्ष्टान्तिकम्.

392. 1. A यस्य तस्मा°, E[3] यस्येत्येकः त°. 2. AE[3] कथं हि को नाम. 3. A न्तः स्यादिति, E[3] °न्तः स्यादस्यान्य इति. 4 AE[3] तथाह्यर्थेन.

393. A न वान्यत्वमु°. 2. AE[3] तदुभयभेद. 3. AE[3] व्यतिरेके. 4. A ब्राह्मणः. 5. A तत्समुदायिनः. 6. A भेदोपरागेण. 7. E[3] एवं संघिनोः. 8. IP. °भिन्नात्. 9. IP. भेदं योग्याः 10. A om. शुद्धौ. 11. AE[3] इतीहाशुद्धौ. 12. A[3] कताप्रश्न उ०, E[3] °कत्वेन न प्र°.

एतदनन्तरं "किं च भो:" इत्युपक्रम्येदं भाष्यं "यदि यदेवोपमानं तदेवोपमेयं क इहोपमार्थो गौरिव गौ:, अथान्यदुपमानमन्यदुपमेयं क इहोपमार्थो गौरिवाश्व इति" ( M. Bhā. I. p. 397, l. 6–8. )

इति । एतत् क्रमेण व्याचष्टे—

**तत्राभिन्नव्यपेक्षायामुपमार्थो न विद्यते ।**
**यो हि गौरिति विज्ञाने हेतुः सोऽस्ति गवान्तरे ॥ ३९४ ॥**

इह येन धर्मेण य[1]: प्रसिद्धः तेनाप्रसिद्धं ज्ञापयन्नौपम्यमनुभवति । अभिन्नस्य तु सामान्यस्योपमाहेतुत्वेनापेक्षायां न किंचित् फलमुत्पश्यामः । तथा हि गौरिव गौरिति । यदेव जातिरूपमुपमानावसाये निवन्धनं तदेवोपमेयाभिमतेऽपीत्यज्ञातस्योपमेयस्य[2] ज्ञापनाभावान्नोपमानोपमेयभावः । एवञ्च गोगवययोरप्यन्वयिधर्ममात्रापेक्षायां नोपमार्थ इत्युक्तं भवति ॥ ३९४ ॥

अत्यन्तभेदेऽपि नोपमार्थ इति विवृणोति ।

**व्यावृत्तानां विशेषाणां व्यापारे तु विवक्षिते ।**
**न कश्चिदुपकारोऽस्ति बुद्धेर्बुद्ध्यन्तरं प्रति ॥ ३९५ ॥**

अन्वयिना धर्मेणाननुगतानामप्यत्यन्तव्यावृत्तानां भेदानामपेक्षणे नोपकारः कश्चिदुपमानप्रतीतेरुपमेयप्रतीतौ धर्मसामान्यमन्तरेण समन्वयाभावात् गोऽश्वयोः ॥ ३९५ ॥

अत्र हि परिहारभाष्यं

"एवं तर्हि यत्र किंचित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेय[1]भावः"
( M. Bhā. I, p. 397, l. 8. )

इति । एतद् व्याचष्टे ।

**किंचिद् यत्रास्ति सामान्यं यदि भेदाश्च केचन ।**

तत्रोपमानोपमेयभाव इति शेषः । तथा च प्रागेव व्याख्यातम् ।

एवं च कृत्वा द्वयोरपि गवोः सामान्यविशेषापेक्षो भवत्येवोपमानोपमेयभाव इत्याह ।

**गोत्वं गोष्वस्ति सामान्यं भेदाश्च शवलादयः ॥ ३९६ ॥**

ततश्च शावलेय इव च बाहुलेय इति शावलेयत्वाद्यवान्तरजातिभिन्नयोरप्येकार्यकारित्वादिनैकजातीयत्वेन प्रत्यासत्तौ भवत्येवोपमानोपमेयभाव इत्यर्थः ॥ ३९६ ॥

394. 1. E[3] om. यः. 2. E[3] °मेयस्यार्थस्य ज्ञा°;
395. 1. M. Bhā has उपमानोपमेये भवतः.



यद्वा यत्र किंचित् सामान्यमित्यादिभाष्यस्यायमाक्षेपः--सर्वत्र पदार्थेषु सामान्यविशेषयोगादौपम्यं स्यादित्यतिप्रसङ्गो मेरुरिव सर्षप इत्यपि स्यात्, गौरिव गौरिति चेति श्लोकार्धस्यार्थः । अत एवैतच्चोद्यप्रतिसमाधानत्वेन वक्ष्यमाणोऽयं ग्रन्थ उपपद्यते । तथाहि न महासामान्यमत्र विवक्षितं किं तर्हि—

**सामान्यं श्यामताद्येव[1] तद्धि साधारणं द्वयोः ।**
**तदेव सिद्ध्यसिद्धिभ्यां भेद इत्यपदिश्यते ॥ ३९७ ॥**

यत्र किंचित् सामान्यमित्यत्र भाष्ये सामान्यशब्देन न जातिरभिधित्सिता, अपि तु ततोऽर्थान्तरं श्यामत्वादि । तच्च **द्वयोः** उपमानोपमेययोरन्वयि **साधारणम्** इति सामान्यमुच्यते । तथा ह्युत्तरत्र भाष्यमस्ति

"न ह्यवश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह । द्वयोरपि यः[2] सामान्यमाह सोऽपि सामान्यवचनः" ( M. Bhā. I. p. 398, l. 16–17. )

इति । एवं च द्विवृत्तिः श्यामत्वादिरत्र सामान्यमिति गम्यते । तदेव च सामान्यमपि व्यावृत्तेरपि[3] भावाद् विशेष इत्युच्यते कश्चिच्च विशेष इत्यत्र भाष्ये । तथाहि—यथोपमाने तत्प्रसिद्धं न तथोपमेये न्यूनत्वादित्यस्ति भेदः । एवं च जातेरन्यत् सादृश्यं भेदाभेदानुस्यूतमिह सामान्यशब्देन साधारणपर्यायेण कथि[4]तमिति ययोः साधारणो धर्मः प्रसिद्धाप्रसिद्धदर्शनः तयोरुपमानोपमेयभावस्तदुपनिवन्धन इत्युक्तं भवति । एवं च कृत्वा सजातीययोरपि संस्थानादिधर्मसादृश्यकृ[5]तः शाबलेयबाहुलेययोरुपमानोपमेयभावोऽनेकजातिनिबन्धनो द्वयोर्गौर्गौरिति ॥ ३९७ ॥

अत्रैव मतान्तरमाह ।

**श्यामत्वमेव सामान्यमन्येषामुभयोः स्थितम् ।**
**सम्पूर्णत्वात् तदन्य[1]स्माद् विशेष इति गम्यते ॥ ३९८ ॥**

पूर्वं प्रसिद्ध्यप्रसिद्धिभ्यां भेद उक्तः । इदानीं संपूर्णासंपू[2]र्णतयेति विशेषः । तथा हि—श्यामत्वलक्षणो गुण एव द्विवृत्तिराश्रयभेदाद् भिन्नोऽपि सौक्ष्म्यादलक्षितविवेकः सामान्यमित्युक्तः । स एवोपमाने सर्वात्मना परिसमाप्तत्वाद् उपमेये तु केनचिदंशेन न्यूनत्वाद्[3]नाश्रितेऽप्याधारभेदोपा[4]धौ भेदे विशेष्यमाणो विशेष इत्युक्तः । तथा च भेदाभेदाभ्यामवधार्यमाणो गुण एव सादृश्यं न ततोऽर्थान्तरम् ॥ ३९८ ॥

397. 1. AE[3] °मता चैव. 2. A यत्सा°, E[3] यत्ततत्सा°. 3. A °पि भावनाद्, E[3] °त्तेरविभवाद्. 4. E[3] कथयति. 5. A °यादृश्यं शा° E[3] °सादृश्यं कृत्वाशा°.
398. 1. A °तदन्यत्वात्. 2. A इदानीं संपूर्णतयेति. 3. AE[3] °त्वादिनाऽश्रिते. 4. A °दोपाधानं.

यद्वा जातिरप्यस्तु उपमायां सव्यापारा, न त्वभेदेनैवावसीयमाना, किन्तु भेदेनापीत्याह।

**आकृतौ वापि सामान्ये क्वचिदेव व्यवस्थिताः[1]।**
**श्यामादयोऽवसीयन्ते विशेषास्त इहाश्रिताः ॥ ३९९ ॥**

जात्येकार्थसमवायिनो ये सूक्ष्मा **विशेषाः** प्रतिनियते क्वचिदेव जात्याधारेऽवस्थिताः ते जातेर्भेदहेतवो यदा समाश्रीयन्ते तदा तैर्विशिष्टा जातिः **क्वचिदेव** समवेता सव्यापारा भवत्युपमानोपमेयभावलक्षणे संवन्धे। तथाहि शस्त्रीदेवदत्तागतयोः श्यामगुणयोर्या गुणजातिः साश्रयविशेषगतकान्तिमत्त्वादिधर्मविशेषैरनुरज्यमाना भेदानुवेधात् सादृश्यप्रत्ययं प्रसूयते। गौरिव गौरित्यत्र विद्यमानोऽपि[2] विशेषो जातेर्भेदकः शब्दान्नावधार्यत इति न भवत्युपमा। शस्त्रीश्यामा देवदत्ता, शाबलेय इव बाहुलेय इत्यादौ तु गुणाधारभेदादेवावधार्यते विशेषः ॥ ३९९ ॥

इत्थं भाष्यग्रन्थं व्याख्याय पिण्डितार्थमाह।

**जातेरभेदे भेदे वा सादृश्यं तद् प्रचक्षते।**
**कश्चित् कदाचिदर्थात्मा तथाभूतोऽपदिश्यते ॥ ४०० ॥**

**जातेरभेदे**[1] अनन्यत्वेऽप्येकार्थसमवेतविशेषाहिते[2] च भेद इत्यनन्तरोक्तार्थानुवादः। **भेदे वा** इति 'सामान्यं श्यामताद्येव' इति पूर्वोक्तार्थानुवादः। एवं यत् सामान्यमुक्तं तत् सादृश्यमित्याहुः। तेन च सादृ[3]श्येन **कश्चिदेव** न सर्वो **अर्थात्मा** उपमेयः **तथाभूतः** सदृश इति कथ्यते निरूप्यते चाभिधानस्य निरूपणपूर्वकत्वात्। इत्थं च सत्त्वज्ञेयत्वादि न सादृश्यं, ततः सदृशप्रत्ययाभावादिति सामान्यधर्मयोगादेवौपम्ये नातिप्रसङ्गः ॥ ४०० ॥

इदानीं सदृशप्रत्ययस्य विषयं व्यवस्थापयितुं तत्प्रत्यनीकभूतं प्रत्ययान्तरमुदाहरति।

**यत्रार्थे प्रत्ययाभेदो न कदाचिद् विक[1]ल्पते।**
**अविद्यमानभेदत्वात् स एक इति गम्यते ॥ ४०१ ॥**

यस्मिन् वस्तुनि प्रत्ययस्याकाराभेदो **न कदाचिद्विक[2]ल्पते** भेदप्रत्ययेन सह पर्यायं नापद्यते, सदैवाभेदाकारेणोत्पत्तेः, तद्वस्तु धर्मिरूपमवस्थानानात्वेऽपि तत्कृतस्य

399. AE[3] °स्थिता. 2. IP °नोहि.
400. 1. E[3] °भेदेनान्यत्वे. 2. A °शेषा हि ते. 3. E[3] सदृशेन.
401. 1. A विकल्प्यते. 2. A विकल्प्यते.



भेदस्यासंविदितत्वात् व्यवहारे[3] प्रतिभातस्य[4] सत्कल्पत्वादविद्यमानभेदम् **एकः** इति प्रत्ययविषयः ॥ ४०१ ॥

प्रत्यभिज्ञाप्रत्ययमुदाहरति।

**योऽर्थ आश्रितनानात्वः स एवेत्यपदिश्यते।**
**व्यापारं जातिभागस्य तत्रापि प्रतिजानते ॥ ४०२ ॥**

प्रसिद्धभेदोऽपि यः पदार्थः स एव इति प्रत्यभिज्ञायते तत्र जात्यंशस्य व्यापार इत्याहुः। जातेर्व्यक्तिभिरैकात्म्यापत्तौ भागवाचोयुक्तिः। एवं च केवलाया जातेः प्रत्यभिज्ञाप्रत्यये व्यापारो न सदृशप्रत्यये। यत्र च सादृश्यनिबन्धनात् तत्त्वसमारोपात् प्रत्यभिज्ञाभ्रान्तिरसौ लूनपुनर्जातकेशेष्विव जात्यापादिता। भेदानां तु तत्त्वनिबन्धनैव प्रत्यभिज्ञा ॥ ४०२ ॥

वस्तुनि हि संविदा[1] भेदाभेदसंस्पर्शः कथमित्याह।

**जातिभागाश्रया प्रख्या तत्राभिन्ना प्रवर्तते**
**व्यक्तिभागाश्रया बुद्धिस्तत्र भेदेन जायते ॥ ४०३ ॥**

जात्यंशस्य व्यापारादभेदेनैकजातीयः परामृश्यते, गौरेवा[2]यमिति। व्यक्तिरूपाश्रया तु तत्र संविद्भेदोपलक्षिता प्रभवति ॥ ४०३ ॥

इदानीं सदृशप्रत्ययं लक्षयति।

**अन्यत्र वर्तमानं सद् भेदाभेदसमन्वितम्।**
**निमित्तं पुनरन्यत्र नानात्वेनेव गृह्यते ॥ ४०४ ॥**
**आधारेषु पदन्यासं कृत्वोपैति तदाश्रयम्।**
**स सादृश्यस्य विषय इत्यन्यैरपदिश्यते ॥ ४०५ ॥**

**निमित्तं** प्रकृतत्वात् सदृशप्रत्ययस्य श्यामत्वाख्यम् **अन्यत्र** आधारे शस्त्रीगते गुणे **वर्तमानं सद्** भूय आश्रयान्तरे देवदत्ता[1]गुणे वर्तमानं **नानात्वेनेव** भेदेनेव परिच्छिद्यते, तेनाश्रयान्तरेणावच्छेदात्। अभेदेनापि तु समन्वयाद् इव शब्दः। अत एव **भेदाभेदसमन्वितम्** सामान्यविशेषरूपसंब[2]द्धमित्यर्थः। तदेवंविधनिमित्तम् **आधारेषु** स्वाश्रयेषु गुणेषु **पदन्यासं** विधाय तदालम्बनं सादृश्यप्रत्ययमुत्पाद्य तस्य गुणस्य य आधारो द्रव्यं तत् प्राप्नोति। समवेतसमवायात् तत्र सदृशप्रत्ययं जनयति। तथा च स[3]

3. A °रेऽप्रति. 4. AE[3] °स्यासत्कल्प°.
403. 1. A संविदो भेदाभेदसंस्पर्शः ॥ ४०६ ॥ कथमित्याह 2. E[3] गौरिवा°.
404–405. 1. A °त्ताया गुणे. 2. AE[3] रूपसंबन्धमि°. 3. A सर्वगुणा°.

गुणाश्रयः सादृश्यस्य विषयः । तत्र सादृश्य[4]निमित्त उपमानोपमेयभाव इत्यर्थः । इत्यश्चेदं सादृश्यं भेदाभेदसमन्वयाज्जातेरन्यदभेदात्मिकाया:[5] । जातिश्चान्यत्र नानात्वेन न गृह्यते । अपि त्वेकत्वेनैव । अनेन च ग्रन्थेनैकीयमतेन

'यत्र किंचित् सामान्यं कश्चिच्च विशेषः' ( M. Bhā. I, p. 397, l. 8. )

इति भाष्यमन्यथा व्याख्यातम् । तथाहि—पूर्वं यत्राधारे किंचित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेये भवत इति भवितृभ्यां भावरयोपलक्षणात् तत्रोपमानोपमेयभाव इत्यर्थोऽभीष्टः । इह तु यत्र निमित्ते भेदाभेदसमन्विते सति सामान्यविशेषावभासप्रत्ययो द्रव्ये भवति तत्र निमित्ते सत्युपमानोपमेये द्वे द्रव्ये भवतः । तन्निमित्तरूपस्य सादृश्यस्य तत्र पारम्पर्येण समवायादित्यर्थः । अत्रापरं भाष्यम्

'किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । मानं हि नाम' ( M. Bhā. I. p, 397, l. 9. )

इत्यादि । तत् प्रागेव सूत्रार्थौपयिकत्वेनोपमानलक्षणरूपं व्याख्यातम् ॥ ४०४, ४०५ ॥

अतोऽनन्तरं भाष्यम्—

"कामं तर्ह्येतेनैव हेतुना यस्य गवयो निर्ज्ञातः गौरनि[1]र्ज्ञातः त[2]त्कर्तव्यं स्याद् गवय इव गौरिति । बाढं कर्तव्यम्"

( M. Bhā. I, p, 397, l. 11–12. )

इति । अनेनोपमानोपमेययोरव्यवस्थाभ्युपगता । तां निदर्शनेन व्युत्पादयितुमाह ।

**परापेक्षे यथा भावे कारणाख्या प्रवर्तते ।**
**तथान्याविगमापेक्षमुपमानं प्रचक्षते ॥ ४०६ ॥**

कार्यापेक्षं कारणत्वमित्यन्यापेक्षत्वेऽपि न कार्यकारणभावस[3]ङ्करः । न हि यमेव प्रति कार्यं तमेव प्रति कारणम् । एवमप्रसिद्धमुपमेयं प्रसिद्धमुपमानं तदपेक्षया यद्यपि व्यवह्रियते तथापि प्रसिद्धयप्रसिद्धयोः सङ्कराभावान्नोपमेयविपर्यास इत्यर्थः ॥ ४०६ ॥

अत्रैव निदर्शनान्तरम् ।

**गुरुशिष्यपितापुत्रक्रियाकालादयो यथा ।**
**व्यवहारास्तथौपम्यमप्यपेक्षानिबन्धनम् ॥ ४०७ ॥**

4. A सादृश्यं निमित्तमु°. 5. A °त्मिका या जातिः.

406. 1. A गौर्ज्ञातः । E[3] गौरज्ञातः । 2. M. Bhā. has तेन क°, AE[3] om. तत्. 3. E[3] °व संस्कारः.



न गुरुर्गुर्वन्तरापेक्षया । शिष्योऽपि न स्वशिष्यापेक्षया शिष्यः । पिता न[1] पित्रन्तरापेक्षया । पुत्रोऽपि न स्वपुत्रं प्रति पुत्रः । क्रिया स्वसाधनापेक्षया साध्या न हि क्रियान्तरं प्रति । साधनमपि न तु स्वसाधनापेक्षयैव । यथोक्तं

तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया ।
सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति ॥
( Vāk. III, p. ii, क्रि. 49. )

इति । प्रसिद्धपरिमाणा क्रिया परिच्छेद्यक्रियान्तरं प्रति कालः परिच्छेदकत्वात् । न तु परिच्छेद्या[2]या एव परिच्छेद्या[3] । आदिग्रहणाद् '[4]विशेषणविशेष्यभावादेरापेक्षिकस्य संग्रहः । एवं यस्य गवयः प्रसिद्धस्तस्यासावुपमानं वनेचरस्य गौरप्रसिद्ध उपमेयः । नागर[5]कस्य तु विपर्ययः । अत एव कामिनः शृङ्गाररसपरिपोषणपरतया नारीमुखमुत्कृष्टगुणत्वेन प्रसिद्धमिति शशिबिम्बस्योपमानं भवतीत्युक्तम् ॥ ४०७ ॥

अतः परमिदं भाष्यम्—

"किं पुनरिहोदाहरणम् । शस्त्रीश्यामा । क्व पुनरयं श्यामाशब्दो वर्तते । शस्त्र्यामित्याह । केनेदानीं देवदत्ताभिधीयते । समासेन"

( M. Bhā. I, p. 397, l. 13–14. )

इति । एतद् व्याचष्टे ।

**श्यामत्वमुपमाने चेद् वृत्तं वृत्तौ प्रयुज्यते ।**
**उपमेयं समासेन बाह्यं तत्राभिधीयते ॥ ४०८ ॥**

पक्षान्तरस्यापि वक्ष्यमाणत्वात् चेत् इत्यस्य पक्षस्याभ्युपगमं द्योतयति । उपमाने शस्त्र्यां यदि श्यामत्वं वृत्तौ समासे स्थितमभ्युपगम्यते तदा वर्तिपदयोरुपमानवृत्तित्वात् ततो बाह्यं ताभ्यामनुगृहीतमुपमेयं समासेनाभिधीयत इत्यायातम् । तथा चान्यपदार्थप्रधानोऽयं समासस्तत्पुरुषोऽपि । न हि तस्योत्तरपदार्थ[1]प्राधान्यनियमः, नञ्समासे पक्षत्रयविचारानुपपत्तिप्रसङ्गात् । न चार्थादेशनं वचनानुसारि, लोकप्रसिद्धार्थस्यानुवादात् । तथा चेह समानाधिकरणसमासानुरोधाद् वृत्तौ शस्त्रीशब्दसमानाधिकरणत्वेनापि श्यामाशब्दस्य प्रयोगे भवत्युपमेयस्य सम्प्रत्यय इत्यन्यपदार्थप्रधानत्वेन व्यवस्था । यद्येवमनेनैव न्यायेन बहुव्रीहावन्यपदार्थप्राधान्यसिद्धेः किमन्यपदार्थग्रहणेन । सत्यम् । किन्तु न सर्वं प्रत्याख्येयं प्रयोगानुसारेणेत्यन्तरङ्गे स्वपदार्थे सम्प्रत्ययाशङ्कापनोदाय

407. 1. E[3] om. न. 2. AE[3] परिच्छेद्याः एव. 3. E[3] °च्छेद्याः. 4. A° णाद् विशेष्यभा°. 5. A नागरिकस्य.

408. 1. E[3] °दार्थ प्रा°. 2. AE[3] यास्य बहु°.

युक्तमन्यपदार्थग्रहणम् । तत्र शेषाधिकारविहितत्वाच्च बहुव्रीहेर्न तेनास्य बाधः । अन्यथा[3] बहुव्रीहिसंज्ञायां गुणवचनस्य श्यामाशब्दस्य विशेषणत्वात् पूर्वनिपातः स्यात् । क्लृप्तव्यवस्थितविभाषाविज्ञानादपि परिह्रियते । स्व[4]रस्वभिन्नः, तत्पुरुषेऽप्यत्रोपमानाश्रय एव पूर्वपदमकृतिस्वरो भवति । ननु च बहुव्रीहौ शस्त्री श्यामा यस्येत्येवं संबन्धे[5] न भवेदौपम्यप्रतीतिः । नैतदस्ति । शस्त्री श्यामा यस्या देवदत्ताया इति संबन्धसामान्ये बहुव्रीहिः । सामान्यं च विशेषनिष्ठम् । कश्चात्र संबन्धविशेष इत्युपमानोपमेयभाव एव प्रतीयेतान्यस्यायोगात् । तस्माच्छेषवचनाद् बहुव्रीहेरयं न विषयः । अथ संख्यासमानाधिकरणनञ्समासेषु दोष इति यदा शेषवचनं प्रत्याख्यायते तदा कथम् । तदापि प्राक् कडारात् परं कार्यमित्यत्र दर्शने वचनसामर्थ्यादयं तत्पुरुषो भवति । अनवकाशोऽ[6]व्ययमिति परमेवेति नियमानुपपत्तिः । यदापि प्राक् कडारादेका संज्ञेति दर्शनं तदाप्यनेन विशेषविधिनोपमानानि सामान्यवचनं च विशेषमाश्रित्य प्रवृत्तेरुपमेयलक्षणान्ययानुपपत्त्या सादृश्यमन्तर्भाव्योपमेयमाचष्टे यथा शस्त्री श्यामा तथा देवदत्तेति शस्त्रीश्यामा कथ्यते । शस्त्रीश्यामा देवदत्तेति वाक्ये श्यामाशब्दस्योपमानोपमेयाभ्यां संबन्धयोग्यत्वादेकतरोपक्ष[7]यत्वे तदितरो वाक्यार्थः । समासे तु समानाधिकरणप्रस्तावादुपमान एव सामान्यवचनः सकृदुच्चरित इत्युपमेयः समासार्थो वर्ण्यत इति विशेष्यवृत्तावित्याह ॥ ४०८ ॥

अतोऽनन्तरमिदं भाष्यम् —

" यद्येवं शस्त्रीश्यामो देवदत्त इति केन[1] टाप् न श्रूयते "
( M. Bhā. I. p. 397, l. 14. )

इति । एतद् विवृणोति ।

**टावन्त एव चैत्रादौ श्यामाशब्दस्तथा भवेत् ।**
**सूत्रे च प्रथमाभावान्न श्यामाद्युपसर्जनम् ॥ ४०९ ॥**

शस्त्र्यां वर्तमानः श्यामाशब्दो गुणवचनानामाश्रयतो लिङ्गवचनभावात् स्त्रीवृत्तिष्टावन्त इति समासवाच्यत्वे चैत्रादेरुपमेयस्य शस्त्रीश्यामा चैत्र इति स्यात् । सामान्यवचनैरिति च तृतीयानिर्देशात् प्रथमानिर्दिष्टमित्युपसर्जनसंज्ञाभावे[2] ह्रस्वत्वमत्र नास्ति । उपमेयवृत्तित्वे तु तल्लिङ्गं सिध्यति ॥ ४०९ ॥

अतोऽनन्तरं भाष्यम्

3. A विभज्या वि. 4. AE[3] स्वार्थत्व°. 5. AE[3] संबन्धेन°. 6. E[3] °शोऽद्वय°. 7. A क्षये तुर्तो°.

409. 1. M. Bhā. has °इति न सिध्यति. 2. E[3] °भावे ह्र°.



" उपसर्जनह्रस्वत्वमत्र भविष्यति " ( M. Bhā. I. p. 397, l. 15. )

इति । तत्र प्रथमानिर्देशाभावे

' एकविभक्ति....... ( P. 1. 2. 44. )

इत्युपर्जनत्वं स्यात् । अन्वर्थत्वेन वा[1]प्रधानत्वात् । तथा चानन्तरं चोद्यभाष्यम्—

" यदि तर्हि उपसर्जनान्येवंजातीयकानि भवन्ति तित्तिरिकल्माषी कुम्भकपाललोहिनीत्यनुपसर्जनलक्षण ईकारो न प्राप्नोति । ( M. Bhā I. p. 397, l. 15–17. )

इति । तदेतद् व्याचष्टे ।

**अथवैकविभक्तित्वाद् गुणत्वाद्वोपसर्जनम् ।**
**नैव तित्तिरिकल्माष्यामिष्टः स्त्रीप्रत्ययो भवेत् ॥ ४१० ॥**

प्रतियोगिनः पदस्य नानाविभक्तियोगेऽपि यदभिन्नविभक्ति तदुपसर्जनमुक्तं कौशाम्ब्यादि, इहापि समासे कर्तव्यत्वेन विषयभूते यत् प्रक्रियावाक्यं तत्र प्रधानमन्यपदार्थं पदं नानाक्रियावेशादनेकविभक्तीति तदपेक्षया गुणवचनं भवत्येवैकविभक्ति । प्रधानस्य नानाक्रियावेशेऽपि हि न गुणः स्वरूपादपैति । तथा च बहुव्रीहौ

अनेकवचनमुपसर्जनार्थम् । ( Vā. 2. M. Bhā. I. p. 420, l. 23. )

' न वैकविभक्तित्वात् ' ( Vā. 3. M. Bhā I, p. 421. l. 1. )

इति प्रत्याख्यातम् । तत्र च प्रधानस्यान्यपदार्थस्य पदस्य नानाविभक्तित्वमाश्रित्यैकविभक्ति वर्तिपदम् । एवमिहापि भविष्यतीत्यस्त्येकविभक्तित्वादुपसर्जनत्वम् । अन्यत्र तु समानाधिकरणसमासेऽनिष्टप्रसङ्गो नास्त्युत्तरपदार्थप्रधानत्वात् । यथायथं क्रियायोगे तत्रोत्तरपदस्य नानाविभक्तित्वात् । उभयगतिरिह शास्त्रे संभवतीति वा न्यायादन्वर्थत्वेऽप्रधानमुपसर्जनम् । अन्यपदार्थप्राधान्याच्चोत्तरपदार्थो गुणः । न चैवं लौकिकेऽर्थे समाश्रीयमाणे संज्ञाकरणमफलम्, प्रधानस्यापि कस्यचित् पूर्वनिपातार्थं संज्ञाविषयत्वात् । तद्यथा पुरुषव्याघ्रः, पाचकवृन्दारिका, पूर्वकायः, अर्धपिप्पलीति । अत्र पूर्वपदार्थः प्रधानमिति समासशास्त्रे प्रथमानिर्देशादुपसर्जनसंज्ञा सफला । विषयभेदेन च कृत्रिमाकृत्रिमयोः शास्त्रे समाश्रयणान्नात्र लौकिकमुपसर्जनमाश्रीयते । तथा च पूर्वनिपाताव्यवस्थाभावः; राज्ञो गोः क्षीरमिति समासशास्त्रे द्वयोः षष्ठीति प्रथमानिर्देशादुपसर्जनत्वेऽन्वर्थत्वाश्रयमेकस्यैव तद्व्यवस्थापनम् । एवञ्च कौशाम्ब्यादीनां समासे परार्थत्वादेवोपसर्जनत्वे सिद्धेऽप्येकविभक्तेः कृत्रिमतासिद्ध्यर्थमुपसर्जनसंज्ञा अपूर्वनिपातार्थं युज्यत एव । कृत्रिमाकृत्रिमत्वेऽप्युपसर्जनस्य पूर्वनिपाते कृत्रिमस्यैवाश्रयणम् । उभयोः कृत्रिमत्वेऽन्वर्थत्वेन व्यवस्था । ह्रस्वविधौ तु [2]व्याप्तेर्न्यायादुभयोराश्रयणम् ।

410. 1. AE[3] IP. वा प्रधा°. 2. AE[3] व्याप्तिन्या°.

‘ लुक् तद्धितलुकि ’ ( P. 1. 2. 49. )

इति स्त्रीप्रत्ययान्तस्योत्तरपदत्वेन प्रथमानिर्देशाभावेऽपि तद्धितार्थविशेषणत्वादन्वर्थमुपसर्जनत्वम् । तदेवमत्र श्यामादेरुपसर्जनत्वमुपपद्यत इति ह्रस्वः सिध्यति । उपमेयस्यान्यपदार्थस्य नानाविभक्तित्वेऽप्येकविभक्तित्वं तदपेक्षम्, उपमानस्य चोपमेयार्थत्वाद् गुणभाव इत्युपमानापेक्षमत्र श्यामादेर्गुणत्वमिति विकल्पः समर्थनीयः । अन्यथोपमेयापेक्ष एव गुणत्वे तेनैवैकविभक्ति[3]रिति विकल्पो नोपपद्येत । एवमनेन प्रकारेण ह्रस्वसिद्धावपि तित्तिरिकल्माषीत्यत्र

‘ अन्यतो ङीष् ’ ( P. 4. 1. 40. )

इति स्त्रीप्रत्ययोऽभिमतो न स्यात् । तथा ह्यत्र पूर्वं स्त्रीप्रत्यये तित्तिरिणोपमानेन पुंलिङ्गेन कल्माषीशब्दस्य सामानाधिकरण्यं न स्यादिति पूर्वमकृत्वैव स्त्रीप्रत्ययं सामानाधिकरण्यादुपमानवृत्तित्वे वर्तिपदयोः समासः क्रियते । समासवाच्या चोपमेया स्त्रीति स्त्रियामनुपसर्जनाधिकारान्ङीष् न स्यात् । कल्माषस्योपमेये गुणत्वात् । ततश्च टाबत्र स्त्रीप्रत्ययः प्रसज्येत । एवं कुंभकपाललोहिनीति

‘ वर्णादनुदात्तात् ... ( P. 4. 1. 39. )

इति ङीष् न स्यादित्यर्थः । एवं सत्युपसर्जनत्वेऽनिष्टमिदमभ्युगम्योक्तम् । न त्वत्रोपर्सनत्वं न्याय्यम् । कृत्रिमे हि संभवति ‘ह्रस्वविधौ तस्यैव संप्रत्ययो युक्तः ।

‘ लुक् तद्धितलुकि ’ ( P. 1. 2. 49. )

इत्यत्र तु प्रकृतस्य कृत्रिमस्यासंभवादनुवृत्तिसामर्थ्याल्लौकिकमन्वर्थमाश्रीयते । ततोऽन्यत्र त्वकृत्रिमाश्रयणमेव युक्तम् । अत्र च कृत्रिमत्वं नास्ति ।

‘ एकविभक्ति........( P. 1. 2. 47. )

इति ह्येवं व्याख्यायते । समास इत्याधारसप्तमी न विषयसप्तमी । तेन समासाधारं यदेकविभक्ति तत्रैव प्रतियोगिनो नानाविभक्तित्वे तदुपसर्जनसंज्ञमिति । अत्र च समासस्थस्य प्रतियोगिनः पदस्य विभिन्नविभक्तियोगाभावः समानाधिकरणसमासो ह्ययमिति कथं भिन्नविभक्तियोगः स्यात् । अत एव भाष्यकारेणारुचिरत्र सूचिता—

‘ यदि पुन[5]रुपसर्जनान्येवंजातीयकानि भवन्ति ’ ( M. Bhā. I, p 397, l. 15. )

इति । नैवंविधेषूपसर्जनसंज्ञावकल्पत इत्यर्थः । तस्मादुपसर्जनत्वाभावाद्ध्रस्वत्वमत्र न स्यादिति स्थितमेतत्

3. AE[3] क्तित्वामिति. 4. A °वति न ह्र°. 5. A M. Bhā. यदि॰ तर्हि.



‘ टाबन्त एव चैत्रादौ श्यामाशब्दस्तथा भवेत् ’ ( Verse 409. )

इति । यत्तु चोदितं कैश्चित्—सत्यपि चोपसर्जनह्रस्वत्वे

‘ परवल्लिङ्गं........ ’ ( P 2. 4. 26. )

इति शब्दा[6]र्थातिदेशात् पुनराकारप्रसङ्ग इति, तदनुपपन्नम् । दत्ताःयुवतीत्यत्र शब्दातिदेशे द्वितीयस्य तिशब्दस्य प्रसङ्गात् प्रत्याख्यातं तदिति कुतः पुनराकारप्रसङ्गः ॥ ४१० ॥

अभ्युपगम्योपसर्जनत्वं स्त्रीप्रत्यये दोष उक्तः । तत्र समाधानं शङ्कित्वा दोषान्तरप्रसङ्गेन निराकरोति ।

**सतिशिष्टबलीयस्त्वाद् वाह्ये ङीपि च सत्यपि ।**
**उपमानस्वरो न स्यात् तस्मात् स्त्र्यन्तः समस्यते ॥ ४११ ॥**

[1]कृते समासे तस्योपमेयार्थवृत्तेरनुपसर्जनत्वात् तस्मात् समासाद् वहिर्भूतः स्त्रीप्रत्ययोऽत्र भविष्यति । तित्तिरिकल्माषकुंभकपाललोहितादयो हि समुदाया एव वर्णविशेषवाचिनो रूढाः । कल्माषादीनामेव तु वर्णवाचित्वे ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात् समुदायादत्र स्त्रीप्रत्ययोऽभ्युपगम्याप्युच्यते । अत एवाह सत्यपि ङीपि च इति । यद्वा ‘ अनुपसर्जनात् ’ इति प्रधानेन तदन्तविध्यर्थो योगो व्याख्यातः । अत्र च ‘ नैवंजातीयकान्युपसर्जनानि ’ इति भाष्याभिप्रायाद् वर्णवाचिना प्राधानेन तदन्तविधेः समासात् स्त्रीप्रत्ययो जायते । एवमप्युपमानपूर्वपदप्रकृतिस्वरोऽत्रेष्टो न स्यात् । तथाहि—कृते समासे पूर्वपदप्रकृतिस्वरस्तावत्येव प्रवर्तते । पदग्रहणं हि परिमाणार्थमित्युक्तम्, न सुवन्ततिङन्तपरिग्रहार्थम् । तत्र स्त्रीप्रत्यये प्रत्ययस्वरः सतिशिष्टत्वादुपमानपूर्वपदप्रकृतिस्वरं बाधेत । ङीपि चायं दोषः । तत्र स्वरस्य प्रत्ययोदात्तस्य [2]भावात् । ङीपि त्वनुदात्तादुपमानस्वर एवावशिष्यत इति विशेष्य ङीपित्युक्तम् । यत एवं स्वरदोषस्तस्मात् पूर्वमकृते समासे स्त्रीप्रत्यये कृते तदन्तस्य सामान्यवचनस्योपमानेन समासः कार्यः । तथा च सतिशिष्टत्वादुपमानस्वर एवेष्टः सिध्यति । एतच्चोपमाने सामान्यवचनस्य वृत्तौ न लभ्यते, तित्तिरिणा पुंसा कुंभकपालेन नपुंसकेन च सामानाधिकरण्यात् स्त्रीप्रत्ययानुत्पत्तेरिति सामान्यवचनस्योपमाने वृत्तावयं दोषः ॥ ४११ ॥

किं च

**गुणे न चोपमानस्थे सापेक्षत्वं प्रकल्पते ।**
**प्राधान्यस्य तथा न स्याद् व्याघ्रादौ लिङ्गदर्शनम् ॥ ४१२ ॥**

6. A शब्दशब्दर्थातिदे°. E[3] I शब्दाशब्दातिदेशात्.
411. 1. AE[3] om. कृते. 2. E[3]. स्याभावा.

पुरुषोऽयं व्याघ्र इव शूरः पुरुषव्याघ्र इति

"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे'" (P. 2. 1. 56.)

इति समासे सामान्यवाचिनःशूरादेः शब्दस्य प्रयोगे तत्सापेक्षत्वादसामर्थ्यादेव समासो न भविष्यतीति किं सामान्याप्रयोग इति वचनेन। तत्तु ज्ञापयति भवति प्रधानस्य सापेक्षस्यापि समास इति व्यवस्थापितं लिङ्गदर्शनम्। एतच्च गुणे सामान्यधर्मे शौर्यादौ व्याघ्राद्युपमानगते पुरुषादेः प्रधानस्य तदपेक्षत्वं न स्याद्, उत्तरस्योपसर्जनस्य सापेक्षत्वादिति नोपपद्यते विवक्षितार्थज्ञापनम्। उपमेयवृत्तौ हि गुणस्यैतद् ज्ञापकं युज्यते, नो[2]पमानवृत्ताविति। प्रदेशान्तरपर्यालोचनयापि [3]नोपमानस्थत्वं गुणवचनस्य युक्तम् ॥ ४१२ ॥

उपसर्जनत्वेन ह्रस्वसमर्थनमनुपपन्नमितीमं पक्षं हेयतयोपसंहर्तुमाह।

**तस्मात् सति गुणत्वेऽपि प्राधान्यं विग्रहान्तरे।**
**नैवंजातीयकं शास्त्रे सम्भवत्युपसर्जनम् ॥ ४१३ ॥**

उपमानवृत्तेरुपमेयविशेषणत्वात् सत्यप्यप्राधान्ये श्यामादेर्विग्रहान्तरे प्राधान्यमस्ति। यदोपमेयवृत्तिर्गुणस्तदा यद् वाक्यं तत्र। तथाहि शस्त्रीव देवदत्ता श्यामेत्यत्र उपमेयवृत्तेः श्यामस्य प्राधान्यम्। उपमानवृत्तित्वेऽपि च समासेनोपमेयस्याभिधानाद् वस्तुतः प्राधान्यमेव धर्मस्य, प्रक्रियावाक्यापेक्षया तु गुणत्वम्। तथा चैवंप्रकारं वस्तुतः प्रधानं शास्त्रेऽपि नोपसर्जनमुपपद्यते। प्रक्रियाभेदेऽपि हि लौकिकोऽर्थः शास्त्रेणानुविधेयः। लोके च प्रधानमेवेदमित्यन्वर्थमपि शास्त्रे लोकसिद्धार्थानुवादके[1] नास्त्युपसर्जनत्वम्। अत एव

'उपसर्जनान्येवंजातीयकानि।'

इति भाष्येऽरुचिः सूचितेत्युक्तम् ॥ ४१२ ॥

तदेवमुपमानवृत्तित्वं गुणवचनस्यानुपपन्नमुक्त्वातोऽनन्तरं भाष्येऽभिहितम्—

"एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते। देवदत्तायां श्यामाशब्दः"
(M. Bhā. I. p. 397, l. 17.)

इत्युपमेयवृत्तित्वमाख्यातम्। अत्र च चोदितम्

'एवमपि गुणो[1]ऽनिर्दिष्टो भवति। बहवश्च शस्त्र्यां गुणाः [2]सूक्ष्मा मृदुतरी...
(M. Bhā. I. p. 397 l. 18.)

इति। उपमेये सामान्यवचनस्य वृत्तेर्यथार्थं तल्लिङ्गपरिग्रहः सिद्धः। प्रकृतं चोत्तरपदार्थप्राधान्यमेवं निर्वाहितं भवति। किन्तु शस्त्रीव श्यामा देवदत्तेति श्यामगुणोपलक्षितस्यो-

412. 1. E[3] om. समासो न. 2. E[3] युज्यते तेनोपमाने वृ°. 3. AE[3]. °नया विनोप°.
413. 1. A °वादकेनाप्युपस°.
414. 1. AE[3] गुणोनिर्दिष्टो. 2. M. Bhā. गुणाः तीक्ष्णा सूक्ष्मा पृथुरिति।



पमेयस्य निर्देशादुपमानगतस्य गुणस्य शस्त्रीशब्देन जातिविशिष्टार्थाभिधायिना नियतस्यासंस्पर्शादौपम्यहेतोर्धर्मस्य प्रतिनियतस्य प्रज्ञापनं न स्यादिति भाष्यार्थः। अत्र परिहारभाष्यम्

'अनिर्दिश्यमानस्यापि गुणस्य भवति लोके संप्रत्ययः'
(M. Bhā. I. p. 397, l. 19.)

इति। एतद् विवृणोति

**उपमेयात्मनि श्यामो वर्तमानोऽभिधीयते।**
**उपमानेष्वनिर्दिष्टः सामर्थ्यात् सम्प्रतीयते ॥ ४१४ ॥**

यद्यपि साधारणो धर्मः श्यामादिरुपमेयस्थः स्वशब्देन प्रत्याय्यते, सकृदभिधाव्यापाराच्च शब्दस्य तदुपक्षयत्वमेव, तथाप्युपमाने समानधर्मस्यान्यस्याश्रुतेः संनिधानात् साकांक्षत्वाच्च श्रुतेनैव योगः परिकल्प्यते। अश्रुतकल्पनायाः श्रुतसंबन्धस्य न्याय्यत्वात् ॥ ४१४ ॥

अत्रैव दृष्टान्तभाष्यम्

'तद्यथा--चन्द्रमुखी देवदत्तेति। बहवश्च चन्द्रे गुणाः।
या चासौ प्रियदर्शनता सा गम्यते' (M. Bhā. I. p 397, l, 19-23.)

इति। एतद् व्याचष्टे।

**द्रव्यमात्रेऽपि निर्दिष्टे चन्द्रवक्त्रेऽनुगम्यते।**
**विशिष्ट एव चन्द्रस्थो गुणो नोपप्लवादयः ॥ ४१५ ॥**

चन्द्रमुखीति सामान्यधर्ममन्तरेणोपमानभूतद्रव्यमात्रोपादानेऽपि प्रसिद्धेरुपमानहेतुराह्लादकत्वादिः साधारणो धर्मोऽनुवर्त्यते। न त्वन्ये चन्द्रधर्मा उपप्लवादयः। उपप्लवः शशाख्यो मलः। आदिशब्दाद् वृद्धिक्षययोगः। अन्ये तु वृद्धिक्षययोगो नित्यप्रवृत्तगतित्वं वोपप्लवः। आदिशब्दाच्छशलांछनत्वादय इति व्याचक्षते। इत्यन्यत्र यत्र नामानिर्दिष्टो गुणः प्रसिद्धेरुपमानहेतुर्विशिष्टः प्रतीयते, तत्रैकत्र श्रुतोऽपि सामर्थ्यादन्यत्र कथं न प्रतीयेतेत्यभिशयो निदर्शने[1] गर्भीकृतः ॥ ४१५ ॥

तदेवमुपमानवृत्ति सामान्यवचनमित्ययं पक्षः। एतच्चात्र प्रक्रियायां नानात्वं विचार्यते। परमार्थतस्तु लौकिकः शस्त्रीश्यामादिरखण्डः शब्दो विशिष्टोपमेयार्थवाचीत्याह।

**भेदभावनयैतच्च समासेऽप्युपवर्ण्यते।**
**विशिष्टगुणभिन्नेऽर्थे पदमन्यत् प्रयुज्यते ॥ ४१६ ॥**

415. AE[3] निदर्शनेन.

उपमानवृत्तित्वे सामान्यवचनस्यैकं वाक्यम् उपमेयवृत्तित्वे तु द्वितीयमिति वाक्ये[1] भेदस्य नानात्वस्योपमानार्थत्वमुपमेयार्थत्वमित्येवंभूतस्यानुभवेन याहिता वासना संस्कारस्तया हेतुभूतया वाक्यसमानार्थत्वं वृत्तेरवसायस्तत्राप्येतदुपमानोपमेयार्थवचनत्वं सामान्यवचनस्य कथ्यते। उपमानोपहितभेदश्यामादिगुणविशिष्टे तूपमेये निरंशं समासपदं वाक्यादन्यदेवोचार्यते। तदन्वाख्यानोपायपरिकल्पना तु प्रक्रियानुरोधाद् यथान्यद् दोषजातं नापतति तथा कर्तव्येति संप्रत्युपमेयवृत्ति सामान्यवचनं स्थितम्। एवं हि शस्त्रीश्यामो देवदत्त इति सिध्यति। तित्तिरिकल्माषीति चेष्टः स्त्रीप्रत्ययो भवति ॥ ४१६ ॥

अत्रापि पक्षे चोद्यभाष्यम्—

" एवमपि समानाधिकरणेनेति वर्तते। व्यधिकरणानां समासो न प्राप्नोति "
(M. Bhā. I. p. 397, l. 20–21.)

इति। उपमेयवृत्तित्वे श्यामाशब्दस्य शस्त्रीशब्देन सामानाधिकरण्याभावात् समानाधिकरणप्रकरणं नानुगृह्येतेत्यर्थः। अत्र परिहारोऽभिहितः

" किं हि वचनान्न भवति " (M. Bhā. I. p. 397, l. 21–22.)

इति। अन्यत्र कृतार्थत्वाद् दुर्बलमत्र प्रकरणमकृतार्थया श्रुत्या बाध्यत इत्या[1]शयो भाष्यकारस्य। ननु चोपमानवृत्तित्वे सामान्यवचनस्यास्ति वचनस्यावकाशः। तथा च प्रकरणानुग्रहोऽपि कृतो भवति। नैतदस्ति। विशिष्टार्थवृत्तेः पदस्यान्वाख्याने शास्त्र[2]प्रक्रियाभङ्गाय यः प्रभवति, असावपोद्धारपदार्थो नाश्रयणीयः। उपमानविषये च सामान्यवचने द्वयोरपि पदयोरुपमेयं प्रति गुणत्वात् सापेक्षत्वेऽ[3]सामर्थ्याद् वृत्तिर्न स्यात्। उपमेयवृत्तित्वे तु सन्निहितोभयाधिकरणः संबन्धो निराकांक्षो वर्तते। तथा च सामर्थ्यमिति व्यधिकरणयोरपि गमकत्वाद् वचनं विधत्ते वृत्तिम्। अतोऽनन्तरं भाष्यम्—

" यद्यपि तावद्वचनात् समासः स्यात् । इह तु खलु मृगीव चपला मृगचपला समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति " (M. Bhā. I. p. 397, l. 22.)

इति। तदेव विवृणोति।

**यदि भिन्नाधिकरणो वचनादनुगम्यते।**
**मृगीव चपलेत्यत्र पुंवद्भावो न सिध्यति ॥ ४१७ ॥**

यदि वचनसामर्थ्यात् प्राकरणिकं सामानाधिकरण्यमनादृत्य व्यधिकरणयोरप्ययं समासोऽनुविधीयते तदा मृगचपलेत्यत्र कर्मधारयाश्रयोऽन्यत्र समानाधिकरणपदे चरितार्थः पुंवद्भावो न स्यात् ॥ ४१७ ॥

416. 1. AE³ वाक्यभे°. 2. E³ °ध्येकनु.



अत्र परिहारं प्रदेशान्तरोक्तत्वाद् भाष्येऽनुक्तमप्याशङ्कते।

**अस्त्रीपूर्वपदत्वात्तु पुंवद्भावो भविष्यति।**
**यथैव मृगदुग्धादौ न चेत् स्त्र्यर्थो विवक्ष्यते ॥ ४१८ ॥**

जात्यन्तरनिवृत्तिपरायां चोदनायां मृगक्षीरादौ पुंवद्भावः तत्फलं पुमर्थशब्दप्रयोगः सिद्ध इति प्रत्याख्यातः पुंवद्भावः

न वा अस्त्रीपूर्वपदविवक्षितत्वात्। (Vā. 3. M. Bhā. III. p. 157. l. 18.)

इति। एवमिहापि मृगचपलादौ मृगजातीयस्य चापलस्य विवक्षितत्वान्मृगचपलेत्येव विग्रह इति स्त्रीत्वाविवक्षायां सिद्धमिष्टम्। तथाहि कृतेऽपि पुंवद्भावे शब्दात् स्त्रीत्वस्यागतेरविवक्षैव समर्थनीया। स हि विवक्षितोऽर्थः यः शब्दाद् गम्यते। यदा तु विशिष्टस्य स्त्रीचापलस्य स्त्रियैवोपमोपपत्तेः स्त्रीत्वविवक्षा तदारम्भणीय एवात्र पुंवद्भावः। कृते च तस्मिन् वृत्तौ स्त्रीत्वस्यान्तर्भावो वक्तव्यः। अत एव **न चेत् स्त्र्यर्थो विवक्ष्यते** इति पाक्षिकत्वेनायं परिहारः शङ्कितः। अनेनैव चाशयेन भाष्ये नोपन्यस्तमिदम् ॥ ४१८॥

अत एवातोऽनन्तरं निर्दोषपक्षाश्रयेण भाष्यम्—

' एवं तर्हि तस्यामेवोभयं वर्तते ' (M. Bhā I. p. 397, l. 23.)

इति। एतद् व्याचष्टे।

**शस्त्रीव शस्त्रीश्यामेति देवदत्तैव कथ्यते।**
**तस्यामेवोभयं तस्मादुच्यते शास्त्रविग्रहे ॥ ४१९ ॥**

इहोपमानवृत्तित्वे सामान्यवचनस्योपमेयः समासवाच्योऽभिहितः। एवञ्चात्र वाक्ये वर्तिपदयोरेवोपमेयवृत्तित्वमस्तु। तथाहि-उपचाराच्छस्त्रीव **शस्त्रीति देवदत्ता कथ्यते।** **अतस्तस्यां** देवदत्तायामुपमेयभूतायामेवोभयमुपमानवचनं सामान्यवचनं च वर्तत इति सामानाधिकरण्योपपत्तौ पुंवद्भावसिद्धिः। प्रकरणं च न बाधितं भवति। उपमानसंबन्धमन्तर्भाव्य च देवदत्तायां शस्त्रीशब्दः प्रवर्तत इत्यभेदाध्यासाद् गम्यते। परार्थे शब्दप्रयोगो गर्भीकृतो वा[1]र्थो युज्यते नान्यथा। तद्यथा सिंहो माणवक इत्यादिः। सिंहमध्यापयेति चोपचरितेन शब्देन व्यवहारो दृश्यते। एवमिह शस्त्रीशब्देन देवदत्तैव व्यवह्रियते। एतच्च 'तस्यामेवोभयं वर्तत' इति **शास्त्रविग्रहे** शास्त्रप्रक्रियागते वाक्ये कथ्यते। वाक्यावस्थायां हि समानाधिकरणतासमर्थनार्थमिदमभिधीयते। तत्र च शास्त्रप्रक्रियायां

417. 1. E³ इत्याशयो. 2. A शास्त्रे प्र०. 3. AE³ °त्वे साम°.
418. 1. AE³ स्यावगतेर°.
419. 1. IP. °कृतेवार्थो.

विविध[2]नानाभूतमपोद्धारपदार्थानां ग्रहणम् । लौकिके तु पदे विशिष्टार्थवाचके निरंशे विभागाभावान्नास्योपन्यासस्यावसरः । तत्र हि वर्णवत् पदविभागस्यासत्यत्वान्न कचिच्छस्त्रीशब्दस्तदर्थो वा यस्योपचरितार्थत्वं वर्ण्येतेत्यभिप्रायः ॥ ४१९ ॥

एष एव पक्षः सिद्धान्ततया भाष्येऽवस्थापितः । तथा ह्यनन्तरं भाष्यम्—

'एतच्चात्र युक्तं यत्तस्यामेवोभये वर्तते । इतरथा बह्वपेक्ष्यं स्यात्'

(M. Bhā. I. p. 397, l. 24.)

इति । एतद् व्याचष्टे ।

**पुंवद्भावस्य सिद्ध्यर्थं पक्षे स्त्रीप्रत्ययस्य च ।**
**बह्वपेक्ष्यमतस्तस्यामुभयप्रतिपादनम् ॥ ४२० ॥**

यदा श्यामाशब्द उपमेये वर्तत इति पक्षस्तदात्र पक्षे वैयधिकरण्याद् वच[1]नसामर्थ्यात् समासेऽपि पुंवद्भावस्य सिद्ध्यर्थमस्त्रीपूर्वपदविवक्षानियमो[2]ऽपेक्ष्यः । मृगक्षीरादिवदत्र मृगचपलादौ सामान्यस्यैव विवक्षा, न विशेषस्येत्येतदनुसरणीयम् । एष विवक्षानियमोऽश[3]ब्दकोऽत्रानुस्रियमाणो गौरवं प्रतिपत्तावापादयतीति बह्वपेक्षत्वमत्र । यदा तु शस्त्र्यामुपमाने श्यामाशब्द इति पक्षस्तदात्र पक्षे शस्त्रीश्यामो देवदत्त इत्युपसर्जनाधिकारादिष्टस्य स्त्रीप्रत्ययस्य सिद्ध्यर्थं समुदाया एवैते वर्णविशेषवाचिनो नैवञ्जातीयकं वोपसर्जनमिति प्रधानेन तदन्तविधेः समासाद् बाह्यो ङीषिति वाच्यम् । तथा च स्वरे दोष इत्येतदत्र बह्वपेक्ष्यम् । यत एवमनयोः पक्षयोर्बह्वपेक्ष्यमतस्तस्यामेवोभयस्योपमानोपमेयवचनस्य भाष्येऽभ्युपगम इत्यर्थः ॥ ४२० ॥

प्राक् समासादुपमेयवृत्तेः कल्माषादेः स्त्रीप्रत्ययस्येष्टस्य सिद्धेर्यथायथमुपमेयगतलिङ्गसिद्धेश्च प्रकारान्तरेणात्र बह्वपेक्षत्वं व्याचष्टे ।

**श्यामा शस्त्री यथा श्यामा शस्त्रीकल्पेति चोच्यते ।**
**तत्रोपमानेतरयोः श्यामेत्येतदपेक्ष्यते ॥ ४२१ ॥**

श्यामा शस्त्री यथेत्युपमेयवृत्तौ श्यामाशब्दस्य विग्रहवाक्यं प्रदर्शितम् । श्यामा शस्त्रीकल्पेत्युपमानवृत्तौ श्यामाशब्दस्य विग्रहवाक्यम् । तत्रैकनिष्ठस्य गुणस्याभिधाने तदितरगतत्वेन सामर्थ्यात् कल्पनं धर्मसामान्यप्रयुक्तत्वादुपमानोपमेयस्य सन्निधानादेकत्र श्रुतोऽपि साधारणो धर्मो[1]ऽपरत्रानुमीयत इति बह्वपेक्षत्वं केचिदाहुः । तदेतदुक्तं भाष्ये—

'यदि तावदेवं विग्रहः क्रियते शस्त्रीव श्यामा देवदत्तेति शस्त्र्यां श्यामेत्येतदपेक्ष्यं

2. A विविधं ना°.

420. 1. A °ण्याद्वर्तनसा°. 2. E[3] °समापेक्ष्यः 3. A om. अशब्दको, E[3] शब्दको.

421. 1. E[3] परत्र.



स्यात् । अथाप्येवं विग्रहः क्रियते यथा शस्त्री श्यामा तद्वदियं देवदत्तेति एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात् ।' (M. Bhā. I. p. 397, 17. 25.) इति ॥४२१॥

ननु विग्रहवाक्यं लौकिकवाक्यानुगुणं प्रदर्शनीयमित्युभयत्रापि श्यमाशब्दो वाक्ये प्रयोक्तव्यः । वृत्तौ तु द्वितीयस्य श्यामाशब्दस्यान्तर्भूतत्वादप्रयोग इति कथं बह्वपेक्ष्यमित्यत आह ।

**अथ श्यामेव शस्त्रीयं श्यामेत्येवं प्रयुज्यते ।**
**शस्त्री यथेयं श्यामेति तावदेव प्रतीयते ॥ ४२२ ॥**

श्यामा शस्त्री यथा तथेयं देवदत्ता श्यामा इत्येवं द्वयोः श्यामाशब्दयोरुपमानोपमेयगतयोः प्रयोगे शस्त्री यथेयं श्यामेति सकृच्छ्यामाशब्दप्रयोगे यत्परिमाणं वस्तु तावत् तत्परिमाणमेवावगम्यते ॥ ४२२ ॥

तथाहि

**उपलक्षणमात्रार्था गुणस्यास्य यदि श्रुतिः ॥**
**पृ[1]थग् द्वयोः श्रुतोऽप्येष नेष्टस्यार्थस्य वाचकः ४२३ ॥**

वस्तुमात्रोपलक्षणाय गुणशब्दस्योपादानेऽसकृत्प्रयोगेऽपि नेष्टस्यौपम्यस्य प्रतिपादनं स्यात् । या श्यामगुणोपलक्षिता शस्त्री सा धर्मान्तरेणापि तथाभूताया देवदत्तायाः परिच्छेदिकेत्यपि प्रतीतेरौपम्यनिबन्धनत्वं नियोगतः श्रुतस्यासकृत्प्रयोगेऽपि न गम्येत ॥ ४२३ ॥

अथोपमायां सव्यापारत्वमत्र श्रुतस्य तदा

**उपमेयं तु यद् वाच्यं तस्य चेत् प्रतिपादने ।**
**सव्यापारा गुणास्तत्र सर्वस्योक्तिः सकृच्छ्रुतौ ॥ ४२४ ॥**

उपमानसंबन्धेन परिच्छेद्यमुपमेयं यद् प्रधानं वाच्यमभिधेयं तस्य रूपविशेषप्रज्ञापने यदि व्यापृता गुणा नोपलक्षणमात्रार्थाः तदैकगुणप्रयोगेऽपि सर्वस्योपमानस्यापि गुणप्रतिपादनं सामर्थ्यादिति द्विरभिधानं नोपयुज्यते । सादृश्यावच्छेदेन हि संबन्धं नियन्तुं गुणस्योपादानमिति यथाविवक्षितार्थप्रतिपत्तिर्भवति । तदेवमुपमाने उपमेये वा वृत्तौ सामान्यवचनस्य इतरगतत्वेनापेक्षणाद् [1]बह्वपेक्ष्यमिति

'तस्यामेवोभयं वर्तते

इत्येष एव सिद्धान्तो भाष्यकारेणावस्थापितः ॥ ४२४ ॥

423. 1. E[3] (पृथक्) वर्तिर्द्वयोः श्रु°.

424. 1. A. °णादिति ब°.

अतः परं वाक्यकारः पपाठ—

" उपमानसमासे गुणवचनस्य विशेषभाक्त्वात्
सामान्यवचनाप्रसिद्धिः " ( Vā. M. Bhā. I. p. 398, l. 6. )

इति । तदेतद् व्याचष्टे ।

**प्रकाराधारभेदेन विशेषे समवस्थितः ॥**
**शब्दान्तराभिसंबन्धे सामान्यवचनः कथम् ॥ ४२५ ॥**

पूर्वं

' साधारणं ध्रुवं धर्मम् ( verse 385. )

इत्यादिना सामान्यवचनत्वे प्रतिपादितेऽप्युपमेयगतत्वेनोपमानगतत्वेन वा गुणस्येहोक्तत्वादेकतरोपक्षये कथं साधारण्यमित्याक्षेपोऽयमुपपद्यते । तथा ह्याधारनिष्कर्षेण गुणमात्राभिधानेऽनिय[1]तेनाधारेणावच्छेदाद् भवेत् सामान्यवचनत्वम् । तदा चायं गुणः स्वप्राधान्येनाभिधीयमानो नोपमायां सव्यापारः, अपि तु धर्मान्तरेणोपमा[2]निमित्तेन संबध्यते यथोक्तं

धर्मः समानः श्यामादिः ( verse 377. )

इत्यादि । यदापि साधारणगुणनिमित्तस्तत्त्वाध्यारोपस्तदा सामान्यवचनस्य प्रयोग एव नास्ति । यदा पुनरभेदोपचारान्मतुब्लोपाद्वा द्रव्यसमानाधिकरणो गुणवचनस्तदायं समानाधिकरणः समासः । सामान्यं साधारणो धर्मो गुणः, तमुक्त्वा तद्वति यो वर्तते स सामान्यवचन इत्युक्त[3]म् । तत्र चाधारेण नियतेन योगात् तद्भेदेन[4] विशिष्ट एव गुणः संसर्गिधर्मान्तरादिभेदाद् वा । यथोक्तं

गुणानामाश्रयाद् भेदः स्वतो वा ( verse 372. )

इत्यादि । यद्यपि चैकत्र श्रुतोऽन्यत्र सामर्थ्यात् प्रतीयत इत्युक्तं तथापि वचनग्रहणादिहाभिधाव्यापारेण साधारण्यं विवक्षितं, न श्रुत्यर्थाभ्याम् । श्यामाशब्दश्च गुणमात्रस्यापि प्रतीतौ शब्दान्तरेणोपमानवाचिनोपमेयवाचिना वा योगात् तन्नियतत्वेन विशेषप्रवृत्तिरेव । ननु चासौ वाक्यार्थो न पदसंस्कारं प्रतिबध्नाति । नैतदस्ति । निरस्तावयवभेदस्य वृत्तिपदस्यान्वाख्येयत्वात् पूर्वपदोत्तरपदप्रविभागे क्रियमाणे तदर्थानुसारेणैवापोद्धारपदार्थः प्रविभजनीयः । तत्र च विशिष्टार्थवचन एव श्यामाशब्दः प्रविभक्तुं न्याय्य इति कथं सामान्यवचनता ॥ ४२५ ॥

अत्र परिहारः ।

**सादृश्यमात्रं सामान्यं द्विष्ठं कैश्चित् प्रतीयते ।**
**गुणो भेदेऽप्यभेदेन द्विवृत्तिर्वा विवक्षितः ॥ ४२६ ॥**

425. 1. AE[3] °धाने निय°. 2. E[3] माननिमि°. 3. IP. °त्युक्तः. 4. AE[3] तद्भेदे वि°.



**व्यापारो जातिभागस्य द्रव्ययोर्वाभिधित्सितः ॥**
**रूपात् सामान्यवाचित्वं प्राग्वा वृत्तेरुदाहृतम् ॥ ४२७ ॥**

उभयगतं सादृश्यमात्रं सामान्यशब्देनात्र विवक्षितम् । सादृश्यं च भेदाभेदाभ्यामेव भवति । तथा चैकगतत्वेनाप्यभिधाने तस्यान्यापेक्षत्वादभिधाव्यापारादेवोभयनिष्ठतावगम्यत इत्युपपद्यते सामान्यवचनत्वम् । गुण एवात्र प्रकाराधारविशिष्टोऽप्युपमायां व्यावृत्तो[1]ऽविशेषेणोपमानोपमेयगतो विवक्षितः । सामान्यवचनशब्दस्य प्रत्याययितुमिष्ट इत्यर्थः । तथा चान्वयिना रूपेणोच्यमानो गुण एव सादृश्यं न ततोऽर्थान्तरम् । तदेतदुक्तं भाष्ये

" न चावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह । द्वयोरपि यः सामान्यमाह सोऽपि सामान्यवचनः " ( M. Bhā. I. p. 398, l. 16. )

इति । यत्तु वाक्यकारेणोक्तं

" न वा श्यामत्वस्योभयत्र भावात् तद्वाचकत्वाच्च शब्दस्य सामान्यवचनप्रसिद्धिः " ( Vā. 2. M. Bhā. I. p. 398, l. 10. )

इति तद् व्याचष्टे **व्यापारो जातिभागस्य** इत्यादिना । द्रव्ययोरुपमानोपमेयलक्षणयोर्गुणजातेर्व्यापारो गुणाभेदप्रत्ययकारणद्वारेणौपम्यसंबन्धप्रत्यायनं सामान्यवचनेन विवक्षितम् । यद्यपि गुणजातिः सकलाश्रयसमवेताभिन्नत्वान्नोपमायामुपयोगिनीत्युक्तं तथापि स्वाधारगतसूक्ष्मविशेषोपरागादवान्तररूप[2]तामापन्ना सादृश्यशब्दवाच्यौपम्योपयोगिनी भवति । तथा च जात्यापादिताभेदस्य श्यामत्वगुणस्योभयत्रोपमानोपमेययोः समवेतस्याभिधायकः सामान्यवचनशब्दः । तदाह **रूपात् सामान्यवाचित्वम्** इति । उपमानोपमेयगतस्य गुणस्य रूप[3]सामान्यावेशादभिन्नस्य प्रत्यायने सामान्यवचनता श्यामादेः शब्दस्य सिध्यतीत्यर्थः । अभेदोपचाराद् द्रव्यवृत्तिता चात्र शब्दस्येति **द्रव्ययोः** इत्याह । परिहारान्तरं स्पष्टमिदं भाष्येऽभिहितम् ।

" अथवा सामान्यवचनैरित्युच्यते । सर्वः शब्दोऽन्येन शब्देनाभिसंबध्यमानो विशेषवचनः संपद्यते । अत एवं विज्ञास्यामः प्रागभिसंबन्धाद् यः सामान्यवचन इति " ( M. Bhā. I. p. 398, l. 17–19. )

तदेवाह—**प्राग् वा वृत्तेरुदाहृतम्** इति । आभिमुख्येनान्योन्यरूपसंमिश्रणेन संबध्यन्ते यस्मिन्नर्था इति समासोऽभिसंबन्धशब्देन विवक्षितः, तत्रार्थानां निर्विभागत्वात् । यथा

विशेषणं विशेष्येण ( P. 2. 1. 57. )

द्वितीया श्रितादिभिः ( P. 2. 1. 24. )

426, 427. 1. AE[3] °त्तोविशे°. 2. E[3] °रूपमाप°. 3. AE[3] रूपाद् सामा°.

समानाधिकरणेन ( P. 2. 1. 49. )

अर्धं नपुंसकम् ( P. 2. 2. 2. )

इत्यादिव्यवहारो वाक्यगतभेदभावनावशादाश्रीयते, तथा सामान्यव्यवहारोऽपि । तथाहि वृत्तिवाक्ययोः संसृष्टासंसृष्टा[4]र्थतया सत्यपि भेदे रूपसामान्यादभेदाभिधानोपपत्तेर्वाक्यगतैर्धर्मैर्वृत्त्यन्वाख्यानमपोद्धारपदार्थकल्पनयोपपद्यत एव । ततश्च समासे सामान्यस्योपमेयावरुद्धत्वेऽपि ततः पूर्वं वाक्ये विच्छिन्नार्थप्रत्यायकपदप्रयोगे विशेष्यावरोधाभावात् सामान्यवचनतोपपत्तिः । यद्वा सामान्यमुक्तवान् सामान्यवचन इति वाक्यावस्थापरिदृष्टं सामान्यवचनत्वं भूतपूर्वगत्याश्रीयते । तथा शस्त्रीशब्दस्य वृत्तावुपमेयवृत्तित्वेऽपि भूतपूर्वगत्योपमानवाचित्वमिति सर्वेष्टसिद्धिः ।। ४२६, ४२७ ।।

इदानीं

' उपमितं व्याघ्रादिभिः '.... ( P. 2. 1. 56. )

इत्यत्र भाष्यं विचार्यते । तथाहि तत्र सामान्यवचनस्य प्रयोगे शूरशब्दस्य पुरुषोऽयं व्याघ्र इव शूर इति समासो मा भूदिति सामान्याप्रयोग इत्युच्यते । अत्र च पूर्वोत्तरपदयोरुपमानोपमेयार्थभेदाद् वैयधिकरण्यादेव समासस्याप्रवृत्तिः । यद्येवं मूलोदाहरणेऽपि पुरुषव्याघ्र इति कथं सामानाधिकरण्यमित्यत आह ।

**व्याघ्रशब्दो यदा शौर्यात् पुरुषार्थोऽवतिष्ठते ।**
**तदाधिकरणाभेदात् समासस्यास्ति संभवः ॥ ४२८ ॥**

शौर्यादिसमानगुणान्तर्भावने[1]नोपमानवचना अपि व्याघ्रादयो यदा तत्त्वा[2]ध्यारोपादुपमेयवृत्तयो भवन्ति तदा समानाभिधेयत्वात् समानाधिकरणाधिकारविहिता वृत्तिरुपपद्यते, पुरुषव्याघ्रः, पुरुषसिंह इति । अत्र च सामान्यधर्मस्यान्तर्भावादप्रयोगः ॥४२८॥

यदा तु स प्रयुज्यते तदा

**शूरशब्दप्रयोगे तु व्याघ्रशब्दो मृगे स्थितः ।**
**भिन्नेऽधिकरणे वृत्तेस्तत्र नैवास्ति संभवः ॥ ४२९ ॥**

स्वशब्देनैव सामन्यधर्मस्योपमेयगतस्याभिधाने मृगजातीये स्वार्थे उपमानलक्षण एव व्याघ्रशब्दो वाचकत्वेन वर्तते, नोपमेये पुरुषे भेदसंबन्धस्योद्भूतस्येवादिना द्योतितत्वादभेदेनायोगात् । एवं च[1] भिन्नाधिकरणत्वात् प्राकरणिकः समासो न प्राप्नोतीति किं प्रतिषेधेनेत्यर्थः ।। ४२९ ।।

एतद् समर्थयते ।

4. A °र्थयोः सत्यपि.

428. 1. A° न्तर्भावेण. 2. A यदा तद्वारोपाद्, E³ यदारोपाद्.

429. 1. E³ नाभिधाधि°.



**सामानाधिकरण्येऽपि गुणभेदस्य संभवात् ।**
**प्रयोगः शूरशब्दस्य समासेऽप्यनुषज्यते ॥ ४३० ॥**

यदापि समानगुणान्तर्भाव[1]नेन व्याघ्रशब्दः पुरुषे वर्तते तदापि शूरशब्दस्य प्रयोगः स्यात्, समान[2]स्य धर्मस्य नियमख्या[3]पनाय । अन्यथा सामानाधिकरण्यान्यथानुपपत्त्याध्यारोपहेतुरनियतो गुणः प्रतीयेत । तथा[4]हि गुणभेदस्यास्ति सम्भवो व्याघ्रे, शौर्यहिंस्रत्वबलवत्त्वादिरपि गुणः सम्भवादन्तर्भूत इत्यवधार्यते । तथा च नियमाय शूरशब्दप्रयोगेऽपि समासः स्यादित्यर्थवान् प्रतिषेधः ।। ४३० ।।

ननु सिंहो व्याघ्र इति पूजायां श्वा काक इति कुत्सायामित्युद्घोष्यते । तथा च पुरुषव्याघ्रः पुरुषसिंह इति शौर्यमेव पूजार्थमन्तर्भूतो गुण इति कथमनियम इत्याशङ्क्याह ।

**पूजोपाधिश्च यो दृष्टः कुत्सनोपाधयश्च ये ।**
**तेषां भिन्ननिमित्तत्वान्नियमार्था पुनः श्रुतिः ॥ ४३१ ॥**

पूजाप्रतिपादनपरतया ये[1] गुणा उपमेयोपकारिणोऽन्तर्भाव्यन्ते उपमानेन ते बहवो व्याघ्रादेः प्रकरणभेदगताः । ततश्च सामान्यशब्दादस्मान्निय[2]मेन नावगम्यन्त इति पुनः श्रुतिः शूरादिशब्दोऽवधारणार्थः प्रयोक्तव्य एव । तद्यथा – अभिमनायते समनायते दुर्मनायते इत्यत्र सुदुरभीनां प्रत्ययार्थविशेषणपक्षे गतार्थानामपि प्रत्ययप्रयोगाद्रूपसामान्यात् प्रत्ययान्त[3]स्य मनायत इति सर्वसाधारण्याद् विशेषानभिव्यक्तौ प्रयोगस्तादर्थ्येनोपपद्यते, तथा[4]त्र । एवं पुरुषकाक इति निन्दाप्रतिपादनपरतयापि प्रयोगे काकगताशुचिभक्षणानवस्थायितादयो निन्दाहेतवो बहव इति नियमाय पुनः श्रुतिः साधारणवचनस्येति समा[5]सप्राप्तौ युक्तः प्रतिषेधः । चन्द्रमुखादौ तु प्रसिद्धिवशात् विशिष्टधर्मप्रतिपत्तिरुक्ता । इहापि प्रकरणादिवशाद् विशेषप्रतिपत्तावपि यदा प्रकरणाद्यभावस्तदा प्रयोगे साधारणवचनस्य समासनिषेध उपपद्यत एव । किं वात्र सामानाधिकरण्यसमर्थनेन । तथाहि सामान्यप्रयोगेऽपि सापेक्षत्वेनासामर्थ्यात् समासाप्राप्तौ प्रधानस्य सापेक्षस्यापि[6] समास इति ज्ञापकार्थमेतदुक्तम् ॥ ४३१ ॥

एवं च वैयधिकरण्येन समासप्राप्तावपि भवत्येवैतज्ज्ञापकमित्याह ।

**असम्भवेऽपि वा वृत्तेः स्यादेतल्लिङ्गदर्शनम् ।**
**अच्वेरिति यथा लिङ्गमभावेऽपि भृशादिषु ॥ ४३२ ॥**

430. 1. A° न्तर्भावेण. 2. A समानसाधर्म्यस्य. 3. AE³ मध्याप°. 4. A तथापि

431. 1. A ये ये गु°. 2. E³ om. नियमेन. 3. AE³ °यान्तरस्य. 4. E³ तथैव. 5. E³ समास प्रा°. 6. A° स्यापि भवति स°.

वैयधिकरण्याद् असंभवे अ[1]प्राप्तौ वृत्तेः समासस्य तत्संभावनया यदेतत् सामान्याप्रयोग इति वचनं तत् सुतरामेव लिङ्गदर्शनं ज्ञापकं भवेत्। न केवलं सापेक्षत्वादसामर्थ्यं यावद् वैयधिकरण्यादपि। प्रधानस्य च स्वातन्त्र्यादनेकविशेषणयोगोपपत्तिर्न्यायसिद्धा। गुणो ह्येकेन वशीकृतो नान्येन संबध्येत। गुणत्वमेव हि तदा स्यात्। प्रधानस्य युगपदनेकेनोपकारिणा संबन्धो भूषणमेव, प्राधान्यस्य[2] परिपोषणादिति न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम्। दृष्टं चा[3]संभवेऽपि संभावनामात्रेणोपादीयमानं लिङ्गम्। तद्य[4]था—

'भृशादिभ्यो भुव्यच्वेः .... (P. 3. 1. 12.)

इत्यत्र भवत्यर्थे क्यङो विधाने तत्रैव भवतियोगे च्विप्रत्ययस्यापीति च्वावुत्पन्ने तेनैव भवत्यर्थस्योक्तत्वात् तदन्तेभ्यो भृशादिभ्यः क्यङोऽनुत्पत्तौ सिद्धायामपि प्राप्तिं संभाव्याच्वेरिति प्रतिषेधः क्रियमाणो लिङ्गं यत्रार्थे च्विस्तत्रैव क्यङित्यस्यार्थस्येत्यभूततद्भावे क्यङ् सिद्धो भवति, अभृशो भृशो भवति भृशायत इति। एवमिहापि वैयधिकरण्यादेव समासाप्राप्तौ प्राप्तिसंभावनया सामान्या प्रयोग इतिप्रतिषेधः प्रधानस्य सापेक्षस्यापि भवति समास इत्यस्यार्थस्य लिङ्गं जायते। तेन राजपुरुषः शोभन इत्यादि सिद्धम्। उपमेयगतत्वे चात्र सामान्यवचनस्य प्रधानगामिता भवति नान्यथेति प्रागेव निर्णीतम् ॥ ४३२ ॥

इदानीमुपमानप्रसङ्गेनापरं विचार्यत इत्याह

**वत्यन्तावयवे वाक्ये यदौपम्यं प्रतीयते।**
**तत्प्रत्ययविधौ सूत्रे निर्देशोऽयं विचार्यते ॥ ४३३ ॥**

ब्राह्मणवदधीते, क्षत्रियवद् युध्यते, वैश्यवदा[1]र्जयतीति वत्यन्तपदैकदेशकं यद् वाक्यं तत्रोपमानोपमेयभावलक्षणः संबन्धोऽवधार्यते। तथा ह्यध्ययनादिक्रियालक्षणोऽत्र समानो धर्म उपमेयगतत्वेन श्रूयते। अर्थादुपमानगतत्वेन प्रतिपत्तिरिति भवत्यौपम्यस्यावगमः। तस्यौपम्यस्य प्रतिपादको योऽत्र प्रत्ययो वतिः तद्विधायके सूत्रे

'तेन तुल्यं क्रिया चेद्वतिः' (P. 5. 1. 115.)

इत्यत्र योऽयं निर्देशः स परीक्ष्यते। तथाहि प्रकृत्यर्थत्वेन वात्र क्रिया निर्दिश्येत, प्रत्ययार्थत्वेन वा। यद्यपि प्रकृत्यर्थत्वेन व्याप्रियमाणा क्रिया प्रत्ययार्थत्वेन प्रत्येया प्रत्ययार्थत्वेन वोपादीयमाना प्रकृत्यर्थत्वेन प्रत्येया, धर्मसाधारण्यप्रयुक्तत्वादुपमानोपमेयभावस्येति फलभेदः तथापि कः संबन्धी[2] क्रियायां न्याय्यो, लक्ष्यव्यवस्था च कथं न भिद्यत इत्यस्ति विचारस्य प्रयोजनम् ॥ ४३३ ॥

432. 1. E³ वे प्राप्तौ. 2. AE³ °न्यपरि°. 3. AE³ दृष्टत्वासं°. 4. E³. तथा.
433. 1. A °वदर्जय°. 2. E³ °न्धीति क्रि°.



तत्रेदं भाष्यम्—

'इदमयुक्तं वर्तते। किमत्रायुक्तम्? यत् तृतीयासमर्थं क्रिया चेत् सा भवतीत्युच्यते। कथं च तृतीयासमर्थं नाम क्रिया स्यात्'

(M. Bhā. II p. 363. l. 11–12.)

इति। तत्र कोऽभिप्रायो भाष्यकारस्य? येन तृतीयासमर्थं क्रियेति प्रकृत्यर्थविशेषणपक्षमभ्युपगम्याक्षिपतीत्यत आह।

**क्रियेत्युपाधिः प्राथम्यात् प्रकृत्यर्थस्य यद्यपि।**
**न प्रातिपदिकं तत्र क्रियावाच्यु[1]पपद्यते ॥ ४३४ ॥**

'तेन' इति समर्थविभक्तिरर्थविशेषनिबन्धना। तथा ह्युपमेयापेक्षया तदुपकारायोपसर्जनीभूतः परिगृहीतव्यतिरेकः प्र[2]कृत्यर्थ उपमानलक्षणः प्रत्ययार्थत्वेन समन्वययोग्योऽनया व्यतिरेकविभक्तया ज्ञाप्यत इति समर्थविभक्तिरियमुच्यते। सामर्थ्यं च प्रकृत्यर्थस्य प्रत्ययार्थेनेति प्रकृतेरियं विभक्तिः। तुल्यमिति प्रत्ययार्थः प्रत्ययसन्निधौ तस्या[3]नधिगतस्यावसायात्। तत्र क्रियेति विशेषणमुपादीयमानं सन्निहितत्वात् प्रकृत्यर्थेन वा संबध्येत, प्रत्ययार्थेन वा। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिश्च पदार्थानां गुणविनियोगादिह स्थानान्नियमः। तथाहि प्रथमस्थानपतितं तेन इत्येतदिति तस्यैव क्रमव्यतिक्रमे प्रयोजनाभावाद् युक्तं क्रियेति विशेषणम्। तद्यथा

'सास्य देवता' (P. 4. 2, 24.)

इति सेत्यस्योपाधिर्दे[4]वता।

'तेन रक्तं रागात्' (P. 4. 2. 1.)

इति च तेनेत्यस्य रागादिति विशेषणम्। पञ्चमीनिर्देशादेव प्रकृत्यर्थविशेषणतात्र, न[5] स्थानबलात्। तदेवं यद्यपि तृतीयासमर्थं क्रियेति न केनचिदत्र प्रथममुक्तं तथापि न्यायबलात् क्रियेत्युपाधिः[6] प्राथम्यात् प्रकृत्यर्थस्येति युक्तं

'यत् तृतीयासमर्थं क्रिया चेत् सा भवतीत्युच्यते'

(M. Bhā. II, p. 363. l. 11.)

इति भाष्यम्। न्यायायातोऽयमर्थोऽवश्याभ्युपगमनीय इत्युक्तकल्पत्वाद् 'उच्यते' इति भाष्ये व्यपदिष्टः। तत्र तृतीया सत्त्ववाचिनः प्रातिपदिकाद् विधीयते। न च तत् क्रियावाचि, साध्यमानरूपायाः क्रियायास्तिङन्तैकगोचरत्वादिति कथं तृतीयासमर्थस्य क्रियेत्यनेन विशेषणम्, असम्भवादित्याक्षेपः ॥ ४३४ ॥

434. 1. AE³ °यावाप्युप°. 2. AE³ ins. तुल्यमितिः प्रत्ययार्थः before प्रकृत्यर्थः. 3. AE³ तस्य प्रकृतेरनधि°. 4. A °धित्वेन देवता. 5. AE³ om. न. 6. AE³ °धिप्राय°. 7. A °कविकल्प°,

